गृहस्य मज्जनस्यापि पादुकायुगलस्य च ।
ताम्बूलस्य विलेपस्य भोगांश्चांशुकमाल्ययोः ॥२२
भूषणासनयोर्भोगः चामरस्थानयोरपि ।
पुत्राणामुपभोगाश्च भोजनस्य जलस्य च ॥ २३॥
पादाभ्यङ्गस्य पानानां छत्राणां शयनस्य च ।
धूपस्य योषितां चेति भोगानां विंशतिः पृथक् ॥
विंशतिः कथिता भोगाः विनोदानामतोऽधुना ।
वक्ष्ये शस्त्रस्य शास्त्रस्य विनोदो गजवाजिनोः ॥२५
अङ्कमल्लविनोदांश्च विनोदस्ताम्रचूडजः ।
लावकस्य च मेषस्य महिषस्य विनोदनम् ॥२६॥
पारावतविनोदश्च विनोदः सारमेयजः ।
श्येनमीनमृगाणां च विनोदो गीतवाद्ययोः ॥२७॥
नृत्तस्य च कथायाश्च विनोदश्च चमत्कृतेः ।
प्रमोदाय विनोदानामिति विंशतिरीरिता ॥२८॥
अथ सौख्यप्रदा क्रीडा कथ्यते विंशतिः क्रमात् ।
पर्वते प्रमदोद्याने प्रेङ्खायां जलसेचने ॥२९॥
क्रीडा नु शाद्वले देशे वालुकायां शशित्विषि ।
सस्यक्षेत्रे सुरागोष्ठ्यां प्रहेलिकथनेष्वपि ॥ ३० ॥
चतुरङ्गाक्षयोः क्रीडा वाराटकफणीन्द्रयोः ।

फञ्जिकायां तमिस्रे च क्रीडा वीररसोचिता ॥३१
प्रेङ्खा[1] क्रीडा रतिक्रीडा क्रीडानां विंशतिः पृथक् ।
अध्यायशतकं चैव पञ्च प्रकरणानि च ॥ ३२ ॥
इति संक्षेपतः प्रोक्तं मानसोल्लासबीजकम् ।
विस्तृतं शतशाखाभिर्वक्ष्ये कल्पद्रुमोपमम् ॥३३॥
कामाल्लोभाद्भयात्क्रोधात्साक्षिवादे तथैव च ।
मिथ्या वदति यत्पापं तदसत्यं प्रकीर्तितम् ॥३४॥
देवतासन्निधौ वाक्यं ब्रूते शपथपूर्वकम् ।
तद्यो लङ्घयते मोहात्तच्चासत्यं प्रकीर्तितम् ॥ ३५ ॥
अस्वर्ग्यमयशस्यं च लोकद्विष्टं जुगुप्सितम् ।
अनृतं सुतरां पापं तस्मात्तत्परिवर्जयेत् ॥ ३६ ॥
ताडनं छेदनं क्लेशं त्रिविधं[2] वधबन्धनम् ।
परेषां कुरुते यत्तु परद्रोहः स उच्यते ॥ ३७ ॥
पैशुन्यं परिवादेषु[3] गालिदानं च तर्जनम् ।
मर्मोद्घाटं विधत्ते यत् परद्रोहः स उच्यते ॥ ३८ ॥
गृहदारपशुक्षेत्रवसुधान्यधनादिकम् ।
हरते यस्तु[4] मूढात्मा परद्रोहः स उच्यते ॥ ३९ ॥
यस्मात्परकृतो द्रोहः स्वस्यातीव सुदुःसहः ।

1 प्रेम. 2 क्लेशकरणं. 3 परवाद च. 4 यत्तु.

तस्मान्नरकदं घोरं परद्रोहं विवर्जयेत् ॥४०॥
पुष्पिता पतिता कन्या लिङ्गिनी श्रेष्ठजातिजा ।
परस्त्री विवशा[1] श्वश्रूः स्वसाऽथ दुहिता तथा ॥४१
गुरुब्राह्मणभार्याश्च पुत्रमित्रनृपास्त्रियः ।
पत्न्यश्च भृत्यबन्धूनामगम्याः परिकीर्तिताः ॥४२॥
अनायुष्यं परं[2] नृणामगम्यागमनं स्मृतम् ।
परलोके च भयदं तस्मात्तत्परिवर्जयेत् ॥४३॥
लशुनं गृञ्जनं चैव पलाण्डुर्ग्रामकुक्कुटः ।
विड्वराहश्च छत्राकमभक्ष्यं परिकीर्तितम् ॥ ४४ ॥
व्याघ्रजम्बुकमार्जारवृकवायसवानराः ।
ऋक्षसिंहगजोष्ट्राश्वा अभक्ष्याः परिकीर्तिताः ॥४५
पारावतशुकश्येनहंसोलूकबकास्तथा ।
कोकिलाः शारिका गृध्राः सारमेयाश्च निन्दिताः ॥
याज्ञिकाः[3] पशवः सर्वे वर्जयित्वा त्वजादिकम् ।
कृमिकीटपतङ्गाश्च नो भक्ष्याः परिकीर्तिताः ॥४७
सरटो दुर्दरस्सर्पो नकुलो गृहगोधिका ।
मकरः शिंशुमारश्च नो भक्ष्याः परिकीर्तिताः ॥४८
गौडी माध्वी तथा पैष्टी न पेयास्त्रिविधाः सुराः ।

---

[1] विधवा. [2] अनायुष्यकरं. [3] ग्रामजाः.

मैरेयं चापि यत्पेयमेतत्सर्वं च वर्जयेत् ॥४९॥
अवत्सायाः पयो धेनोर्दशाहाभ्यन्तरे च यत् ।
वत्सान्तरप्रस्रविन्याः कान्ताया वृषभेण वा ॥५०
आविकं कारभं क्षीरमपेयं तत्प्रकीर्तितम् ।
अभक्ष्यभक्षणापेयपानेन नरकं यतः[1] ॥५१॥
समृद्धिं वीक्ष्य चान्यस्य रूपं शौर्यमुदारताम् ।
कलाकुशलतां शीलं सौभाग्यं गुणसंपदः ॥५२॥
असहिष्णुर्भवेद्यस्तु स याति यममन्दिरम् ।
लोके च निन्द्यतां याति नासहिष्णुर्भवेत्ततः ॥५३
महापातकदुष्टानां लिङ्गिनां विधि[2]लोपिनाम् ।
चण्डालान्त्यजजातीनां संसर्गात्पतितो भवेत् ॥५४
तस्मात्पतितसङ्गेन नरः पतति रौरवे ।
लोके चास्पृश्यतां[3] याति तस्मात्तं परिवर्जयेत् ॥
क्रोधो नाशयते बुद्धिं आत्मानं च कुलं धनम् ।
यशो[4]नाशो भवेत्कोपात्तस्मात्तं परिवर्जयेत् ॥ ६५
आत्मानं स्तौति यो मोहाज्जीवन्नपि मृतो भवेत् ।
परत्र यातनां याति तस्मात्तं परिवर्जयेत् ॥५७॥
श्रोत्रियाय दरिद्राय शीलाचारयुताय च ।

---

[1] व्रजेत्. [2] धर्म. [3] चाशस्यतां. [4] धर्म.

पुराणवेदविदुषे दानं देयं कुटुम्बिने ॥५८॥
महापातकघातीनि महापुण्यफलानि च ।
महादानानि देयानि महादेवस्य तुष्टये ॥५९॥
रौप्यकाञ्चनरत्नानि वस्त्रशय्यासनानि च ।
गजाश्वमाहिषीगावो बलीवर्दा धुरंधराः ॥६०॥
गृहं ग्रामस्तथा भूमिर्दासिकाद्या वि[1]भूषणम् ।
अन्नपानतिलौषध्यो भीतस्याभयमुत्तमम् ॥ ६१ ॥
यद्यस्याभिमतं लोके यत्सुखं निजमन्दिरे ।
तत्सर्वं विदुषे देयं तदेवानन्त्यमिच्छता ॥ ६२ ॥
हितं वाच्यं प्रियं वाच्यं न वाच्यं हितमप्रियम् ।
प्रियं च नानृतं वाच्यमेष धर्मस्सनातनः ॥६३॥
हितं ब्रूयात्प्रियं ब्रूयान्मितं ब्रूयात्तद[2]र्थवत् ।
एवं वदति यो नित्यं स लोके पूज्यते बुधैः॥६४॥
बुधैस्तु पूज्यते भूमौ विबुधैः पूज्यते दिवि ।
विश्वकर्ममतेनापि प्रियमभ्याहृतं सदा[3] ॥६५॥
लोकद्वयेऽपि पूज्यस्स्याद्यः प्रियं वक्ति सर्वदा ।
नृयज्ञं ब्रह्मयज्ञं च देवयज्ञमतः परम् ॥६६॥
भूतयज्ञं पितृयज्ञं पञ्चयज्ञान् प्रवर्तयेत् ।

---

1 दासीकन्यावि. 2 त्सद. 3 नास्ति.

ज्योतिष्टोमादिकान् यज्ञान् वाजिमेधावधि स्थि-
तान् ॥ ६७ ॥
यज्ञानुक्तान् शरत्काले[1] यथोक्तविधिनाऽऽचरेत् ।
अन्नहीनो दहेद्राष्ट्रमृत्विग्यो मन्त्रवर्जितः ॥ ६८ ॥
विना दानेन यज्वानमाचार्यमवधीत्क्रतुः ।
अयुतं लक्षहोमं च कोटिहोमं च शान्तिकम् ॥६९
कुर्वीत विप्रमुख्यैश्च कारयेच्छुभकाङ्क्षया ।
द्वारहीनो भवेत्कूपो द्वारेणैकेन वापिका ॥७०॥
नैकद्वारा पुष्करिणी दीर्घाकारा तु दीर्घिका ।
कुल्या विस्तृततोयश्च तटाकः परिकीर्तितः ॥७१॥
एतेषां खननं कार्यं तारकैश्चाप्यधोमुखैः ।
अग्निष्टकां प्रपां सत्रमारामांश्च प्रवर्तयेत्[2] ॥७२॥
पूर्वात्रयं विशाखा च कृत्तिका भरणी मखा ।
अधोवक्त्राणि भानि स्युराश्लेषा मूलमेव च ॥७३
कूपादिखननं चैव निधानोत्खननं तथा ।
खननं च तटाकानां देवतानां च तुष्टये ॥ ७४॥
द्यूतं च गणितं कार्यमधोवक्त्रेषु सर्वदा ।
एवं यः कुरुते पूर्तमिष्टं च विधिना नरः ॥७५॥

---

[1] शरत्काले वसन्ते च. [2] नास्ति.

स याति परमां सिद्धिं लोकद्वयशुभावहाम् ।
[1]नवतालप्रमाणेन लक्षणेन समन्विताम् ॥७६॥
प्रतिमां कारयेत्पूर्वमुदितेन विचक्षणः ।
सर्वावयवसम्पूर्णां किञ्चित्पीतां दृशोः प्रियाम् ॥७७
यथोक्तैरायुधैर्युक्तां बाहुभिश्च यथोदितैः ।
तत्पृष्ठस्कन्धदेशे च क्रमाद्यामकुटेऽ[2]थवा ॥७८॥
हेम[3]पुष्पनिभं दीर्घं तालकं[4] मदनोद्भवम् ।
स्थापयित्वा ततश्चार्चां लिम्पेत्संस्कृतया मृदा ॥
मषीं तुषमयीं कृत्वा[5] कार्पासं शतशः क्षतम् ।
लवणं चूर्णितं श्लक्ष्णं तथा[6] संयोजयेन्मृदा ॥८०॥
पेषयेत्सर्वमेकत्र सुश्लक्ष्णे च शिलातले ।
वारत्रयं तदावर्त्य तेन लिम्पेत्समन्ततः ॥ ८१ ॥
स्वच्छः[7] स्यात्प्रथमो लेपः छायायां कृतशोषणः ।
दिनद्वये व्यतीते तु द्वितीयस्यात्ततः पुनः ॥ ८२ ॥
तस्मिञ्छुष्के तृतीयस्तु निबिडो लेप इष्यते ।
तालकस्य[8] मुखं त्यक्त्वा सर्वमालेपयेन्मृदा ॥८३॥

---

[1] सभां सभामठं चैव जीर्णदेवकुलानि च । विश्वकर्ममतेनापि मयशास्त्रानुसारतः । मत्स्यप्रोक्तविधानेन पिङ्गलामतमानतः । कलितेन प्रमाणेन पुरुषार्थचतुष्टयम् । कारयेद्देवतागारं एतान् भक्त्या महीपतिः । इत्यधिकपाठः.
[2] कृतायां. [3] मघ. [4] नालकम्. [5] घृष्ट्वा. [6] स्वल्पं. [7] अच्छः. [8] नालकस्य.

शोषयेत्तत्प्रयत्नेन युक्तिभिर्बुद्धिमान्नरः ।
सिक्थकं तोलयेदादावर्चालग्नं विचक्षणः ॥ ८४ ॥
रीत्या ताम्रेण रौप्येण हेम्ना वा कारयेत्ततः[1] ।
सिक्थाद्दशगुणं[2] ताम्रं रीतिद्रव्यं च कल्पयेत्॥८५॥
रजतं द्वादशगुणं हेम स्यात् षोडशोत्तरम् ।
मृदा संवेष्टयेद्द्रव्यं यदीष्टं कनकादिकम् ॥ ८६ ॥
नालिकेराकृतिं मूषां पूर्ववत्परिशोषयेत् ।
वह्नौ प्रताप्य तामर्चां सिक्थं निस्सारयेत्ततः॥८७॥
मूषां प्रतापयेत्पश्चात्पावकोच्छिष्टवह्निना ।
रीतिस्ताम्रं च रसतां नवाङ्गारैर्व्रजेद्ध्रुवम् ॥ ८८ ॥
तप्ताङ्गारैर्विनिक्षिप्तै रजतं रसतां व्रजेत् ।
सुवर्णं रसतां याति पञ्चकृत्वः प्रदीपितैः ॥ ८९ ॥
मूषामूर्धनि निर्माय रन्ध्रं लोहशलाकया ।
संदंशेन दृढं धृत्वा तप्तां मूषां समुद्धरेत् ॥ ९० ॥
तप्तार्चानालकस्यास्ये वर्तिं प्रज्वलितां न्यसेत् ।
संदंशेन धृतां मूषां नमयित्वा प्रयत्नतः ॥ ९१ ॥
रसं तु नालकस्यास्ये क्षिपेदच्छिन्नधारया ।
नालकाननपर्यन्तं संपूर्य विरमेत्ततः ॥ ९२ ॥

---

[1] त्तु ताम्. [2] दष्टगुणं.

स्फोटयेत्तु समीपस्थं पावकं तापशान्तये ।
शीतलत्वं च यातायां प्रतिमायां स्वभावतः ॥ ९३
स्फोटयेन्मृत्तिकां दग्धां विदग्धो लघुहस्तकः ।
यथा[1] द्रव्यमयी साऽर्चा यथा मदननिर्मिता ॥
जायते तादृशी साक्षादङ्गोपाङ्गोपशोभिता ।
यत्र क्वाप्यधिकं पश्येच्चारणैस्तत्प्रशान्तये ॥ ९५ ॥
नालकं छेदयेच्चापि पश्चादुज्ज्वलतां नयेत् ।
अनेन विधिना सम्यग्विधायार्चां शुभे तिथौ ॥
विधिवत्तां प्रतिष्ठाप्य पूजयेत् प्रत्यहं नृपः ।
विष्णुं वाऽथ गणेशं वा दुर्गां वाऽथ सरस्वतीम् ॥
दिनेशं विश्वरूपं वा शिवं वा लिङ्गरूपिणम् ।
अर्चयेद्भक्तिभावेन श्रद्धापूतेन चेतसा ॥ ९८ ॥
पत्रैः पुष्पैः शुभैर्गन्धैर्नैवेद्यैर्धूपदीपकैः ।
अर्घ्यं पाद्यं शुभैस्तोयैर्मधुपर्कं च कल्पयेत् ॥ ९९ ॥
तथैवाचमनं स्नानं तत्तद्द्रव्यसमायुतम् ।
मन्त्रैर्ध्यानैर्जपैर्होमैर्मुद्राभिर्विविधार्चनैः ॥ १०० ॥
अष्टाङ्गपूर्वकं भक्त्या नत्वा स्तुत्वा विसर्जयेत् ।
एवं यः पूजयेद्देवमिष्टं श्रेष्ठ[2]मना नरः ॥ १०१ ॥

1 ततो. 2 हृष्ट.

स प्राप्नोति महद्राज्यं पूजया नात्र संशयः ।
अन्येषामपि देवानां निन्दां द्वेषं च वर्जयेत् ॥
देवं देवकुलं दृष्ट्वा नमस्कुर्यादलङ्घयन् ।
एवं य आस्तिकं भावमाश्रितस्समतां गतः ॥
सर्वदेवप्रसादेन लभते सम्पदं पराम् ।
गवां ग्रासं सदा दद्यादातृप्तेर्धर्मलिप्सया ॥ १०४ ॥
आत्मीयपारकीयानां तेन विष्णुः प्रसीदति ।
दानेन प्रियवाक्येन सम्मानेन[1] द्विजोत्तमान् ॥
तोषयेत्सर्वभावेन तेनाप्नोति परं पदम् ।
तोयमिश्रैस्तिलैः कुर्याद्देवता[2]पितृतर्पणम् ॥१०६॥
गव्यक्षीरसमुत्पन्नैः पायसैः सितया सह ।
भक्ष्यभूतैस्तथा मांसैर्घृतेन मधुनाऽपि च॥ १०७॥
अन्यैश्च विविधैर्मृष्टैः पक्वान्नैस्तु मनोहरैः ।
भोजयेद्द्विप्रमुख्यांश्च पितॄनुद्दिश्य भक्तितः॥१०८॥
[3]एवं यः कुरुते श्राद्धं तर्पयेत्पितृदेवताः ।
तस्य सन्तानवृद्धिस्स्याद्राज्यमायुर्महद्भवेत् ॥
यद्यदिच्छति चित्तेन तत्तदाप्नोति कामवान् ।
अकामतस्तु कुर्वाणो निर्वाणं परमाप्नुयात् ॥

---

1 सन्मानेन. 2 र्यात्तन्नाम्ना. 3 श्रद्धापूतेन चित्तेन श्राद्धं कुर्यादतन्द्रितः । इत्याधिकः पाठः.

अज्ञातकुलनामानमन्यदेशादुपागतम् ।
क्षुधार्तं पांसुकीर्णाङ्घ्रिमतिथिं तं विदुर्बुधाः॥११११॥
एवंविधं समायातमतिथिं यो न पूजयेत् ।
तस्य पुण्यानि सर्वाणि हृत्वा यात्यतिथिर्ध्रुवम्[1] ॥
तस्मात्सर्वात्मना भक्त्या पूजयेदतिथिं बुधः ।
अतिथौ पूजिते विष्णुः पूजितस्यान्न संशयः ॥
जनकश्चोपनेता च यश्च विद्यां प्रयच्छति ।
पोषकश्च भयत्राता पञ्चैते गुरवस्स्मृताः॥ ११४ ॥
आचार्यस्स्यादुपाध्यायादाचार्यादधिकः पिता ।
पितुरप्यधिका माता गौरवेण विशेषिता ॥ ११५॥
मनोवाक्कायकर्मभ्यो गुरुभ्यो हितमाचरेत् ।
तेषामाज्ञा न लङ्घ्या स्यात्कुर्याच्छुश्रूषणं सदा ॥
एवं शुश्रूषते यस्तु गुरुं नत्वा समाहितः ।
कृतज्ञो दृढसङ्कल्पस्तस्य भूयात्फलं[2] महत् ॥
कृच्छ्रैश्चान्द्रायणैः पुण्यैर्व्रतैश्च विविधैरपि ।
कन्दमूलफलाहारैः पत्रपुष्पासनै[3]स्तथा ॥ ११८ ॥
अब्भक्षैर्वायुभक्षैश्च धूमभक्षैरभक्षणैः ।
शीतातपसहत्वेन सर्वभूतहितेच्छया ॥ ११९ ॥

1 द्रुतम्. 2 पुण्यफलं. 3 क्षतै.

ब्रह्मचर्येण तपसा निग्रहेणेन्द्रियस्य च ।
जपेन ध्यानमौनाभ्यां प्राणायामैस्समाधिना ॥
एतैस्तपोभिः कुरुते नियतः कायशोषणम् ।
स सर्वं लभते कामं दुष्प्रापं नात्र संशयः ॥१२१
यद्दूरं यद्दुरापं च यच्च दुर्धरतास्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥
जाह्नवी सरितां श्रेष्ठा यमुना नर्मदा शुभा ।
तापी तरङ्गिणी पुण्या गौतमी पापनाशिनी ॥
पञ्जरा भीमरथ्या च कृष्णवेणी बृहन्नदी ।
मलापहारिणी यत्र सङ्गता लोकविश्रुता ॥१२४॥
वेदपादोद्भवा रम्या श्रीशैलोत्सङ्गगामिनी ।
तुङ्गभद्रा सदा भद्रा दर्शनात्पापनाशिनी ॥ १२५ ॥
एताश्चान्याश्च सरितः सागराश्च सरांसि च ।
ह्रदाश्च देवखाताद्याः कुण्डरूपाः स्रवा गिरेः ॥
पुष्कराणि च पुण्यानि शाक्य[1]तीर्थं सुखप्रदम् ।
प्रभासं प्रथितं तीर्थं केदारं क्लेशनाशनम् ॥१२७॥
प्रयागस्तीर्थराजश्च चिन्तितार्थप्रदायकः ।
अर्घ्यतीर्थमनर्घ्यं च सुरसार्थनिषेवितम् ॥ १२८ ॥

[1] शाक.

वाराणसी महापुण्या महादेवनिषेविता ।
महाप्रभावसंयुक्ता महापातकनाशिनी ॥ १२९ ॥
सरस्वती त्रिभिस्स्नानैः पञ्चभिर्यमुनाऽघहृत् ।
जाह्नवी स्नानमात्रेण दर्शनेनैव नर्मदा ॥ १३० ॥
एतेषु तीर्थसार्थेषु स्नात्वा मुच्येत किल्बिषात् ।
ईप्सितं चैव लभते मोदते च महेन्द्रवत् ॥१३१॥
देहीति भाषते यस्तु काङ्क्षया कृपणं वचः ।
दारिद्र्याद्दैन्यमापन्नः स दीनः परिकीर्तितः ॥१३२
तस्मै ददीत दीनाय वाञ्छितं द्रविणादिकम् ।
दयार्द्रहृदयो राजा धर्मार्थी स्वार्थनिस्पृहः ॥ १३३॥
मातापितृविहीनस्तु रहितो मित्रबान्धवैः ।
विगतस्स्वामिसम्बन्धादनाथः परिकीर्तितः॥१३४॥
अनाथस्सर्वथा रक्ष्यः पार्थिवेन यशोर्थिना ।
जनानां रञ्जको राजा ब्रह्मणा परिकल्पितः ॥
व्याधिभिर्बाधितो यस्तु विषाग्निपरिपीडितः ।
व्रणैर्वा जर्जरीभूतस्तस्मात्तं परिरक्षयेत् ॥ १३६ ॥
अयत्नेन च संरक्ष्यास्तन्त्रमन्त्रक्रियादिभिः ।
तेषामन्वेषणं कार्यं पानान्नशयनासनैः ॥ १३७ ॥
शस्त्रशास्त्रविदो वैद्यानभ्यासनिपुणानपि ।

ऊहापोहविवेकज्ञान् सुधाहस्तान् प्रियंवदान्॥१३८
अर्पयित्वा विचित्राणि भेषजानि पृथक् पृथक् ।
निरालस्यांश्च धर्मज्ञान् प्रकल्प्य परिचारकान्॥
ज्वरे च रक्तपित्ते च कासे श्वासे च यक्ष्मणि ।
छर्दौ मदात्ययेऽर्शोऽतिसारग्रहणेषु च ॥ १४०॥
मूत्रकृच्छ्रे प्रमेहे च विद्रधौ गुल्मकोष्ठयोः ।
पाण्डौ शोफे विसर्पे च कुष्ठे श्वित्रे जलामये ॥
वातशोणितरोगे च तथा रोगान्तरेष्वपि ।
वैद्यशास्त्रानुसारेण कारयेत्तत्प्रतिक्रियाम् ॥ १४२॥
ज्ञात्वा निदानं व्याधीनां स्वरूपं लक्षणैः स्फुटम् ।
देशकालानुसारेण साधुप्रकृतिसत्त्वतः ॥ १४३ ॥
सामदोषं चिराद्धृत्वा पावकं जठरस्थितम् ।
निरुध्य रससञ्चारमुदानाग्निं बहिः क्षिपेत् ॥१४४॥
एवं विनिर्गतो वह्निः कायमाश्रित्य तापयेत् ।
ज्वर इत्युच्यते तज्ज्ञैः सर्वव्याधिपतिश्च सः ॥१४५
पक्वमेवौषधं हन्ति दोषं कोष्ठसमाश्रितम् ।
अपक्वं न गुणं किञ्चित् कुरुतेऽपि सुधासमम् ॥
न जीर्यत्यौषधं यस्मात्ज्वरार्तस्य विनाऽग्निना ।
तस्मान्न दद्याद्भैषज्यं लङ्घनं तु प्रयोजयेत्॥१४७॥

भक्ष्यभोज्यस्य चोष्यस्य लेह्यपेयस्य वारणम् ।
लङ्घनं प्रोच्यते सद्भिः कायलाघवकारणम् ॥१४८
वयोदोषं बलं कालं प्रकृतिं कारणं तथा ।
विचार्य लङ्घनं कार्यं यावल्लघु भवेद्वपुः ॥१४९॥
एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ।
सप्तरात्रं नव दश निशाश्चैकाधिकाधिकाः ॥१५०
लङ्घनस्य कृतः कालो दोषरूपानुसारतः ।
दातव्यमौषधं पश्चाज्ज्वरामयविनाशनम् ॥१५१॥
एकभक्तं तथा पेयो मण्डो वा कोष्णवारिणा ।
दोषकोपानुसारेण लङ्घनं विविधं स्मृतम् ॥१५२
लङ्घितस्य यथा स्वास्थ्यं क्षुत्तृष्णापाटवं रुचिः ।
मनःप्रसक्तिरोजश्च शक्तिर्लाघवलक्षणम् ॥१५३॥
लङ्घनैर्विज्वरं जातं लघुपथ्यमिताशनैः ।
उपाचरेद्भिषक्सम्यक् यावत् स्याद्दिनसप्तकम् ॥
लङ्घनेऽपि कृते सम्यक् दृष्टे लङ्घितलक्षणे ।
ज्वरो यदि न मुच्येत तं पेयाभिरुपाचरेत् ॥१५५
वातपित्तकफार्तानां ज्ञात्वा लक्षणमुत्कटम् ।
तस्योपशमनैर्द्रव्यैः कृत्वा पेयां प्रदापयेत् ॥१५६
वातश्शूलेऽधिको ज्ञेयः तापे पित्तं च लक्षयेत् ।

जाड्ये कफं विजानीयात् मिश्रे मिश्रं च लक्षयेत्॥
दोषत्रये प्रकुपिते सन्निपातो भवेत्तदा ।
दुश्चिकित्स्यो भवेद्रोगी यत्नादेनमुपाचरेत् ॥१५८॥
बिल्वं बलापृथक्पर्णीनागरं धान्यकोत्पलम् ।
एतैः पेया कृता देया वातपित्तज्वरापहा ॥१५९॥
कुक्षिवस्तिशिरश्शूले क्षीर[1]गोक्षुरसाधिता ।
पेया वातरुजार्तस्य सोष्णा देया भिषग्वरैः॥१६०
गोक्षुरो बृहतीद्वन्द्वं गुहाचातिगुहेति च ।
एतैः प्रक्कथिता पेया श्वासखासज्वरार्तिनुत् ॥१६१
श्रीपर्णी बिल्वमण्डूकतर्कारी पाटली तथा ।
तेषां मूलैर्यवैस्सिद्धा पेया कफरुजार्तिहृत् ॥१६२
भृष्टतण्डुलसंसिद्धा पिप्पल्यामलकैर्युता ।
यवागूस्सघृता पेया विष्टब्धमलरेचिनी ॥१६३॥
मागधी पिप्पलीमूलं मृद्वीका धात्रिकौषधैः ।
कृता पेया प्रदातव्या कोष्ठशूलनिबन्धनुत्॥१६४॥
व्याघ्रीबदरवृक्षाम्ला गुहामलकनागरैः[2] ।
कृष्णाङ्घ्री ससिता[3] पेया स्वेदनिद्रासुखप्रदा॥१६५
कफपित्तेऽधिके ग्रीष्मे नाभिस्थाने कफे स्थिते ।

---

[1] क्षौद्र. [2] पाटलीबिल्वगोक्षुरैः. [3] ऋष्टाग्नि च सिता.

तृषिच्छर्दौ विदाहे च मदार्तौ च सदासवे ॥ १६६
ऊर्ध्वं प्रवृद्धे रुधिरे पेया नैव प्रशस्यते ।
ज्वरघ्नैर्वा फलरसैः फलैर्लाजैश्च तर्पणम्[1] ॥ १६७
शर्करां मधुसंयुक्तां पिबेज्जीर्णे तु तर्पयेत् ।
यवाग्वा क्षुधितोऽश्नीयाद्भक्तं वा भ्रष्टतण्डुलम् ॥
मुद्गादिधान्यक्कथितं तोयं यूषं निगद्यते ।
अस्नेहलवणं यूषोदकमित्यभिधीयते ॥ १६९ ॥
लवणस्नेहसंयुक्तं यूषं लावणिकं विदुः ।
षडङ्गं वर्तयेत्ताभ्यां रसैर्वा मुद्गलाजिनैः ॥१७०॥
ज्ञात्वा दोषसमुत्थानं बलं रक्षेत्प्रयत्नतः ।
लङ्घनैः पेयया यूषैः रसैर्दोषं विपाचयेत् ॥१७१
दोषपाके च सञ्जाते सप्तरात्रादतः परम् ।
पाचनैः शमनैः क्वाथैः दोषशेषं तु निर्हरेत्॥१७२
तिक्तः पित्तहरो देयः कटुकः कफनाशनः ।
पित्तश्लेष्महरोऽप्येष कषायो न वरो रसः ॥ १७३ ॥
नवज्वरे मलं रुद्ध्वा ज्वरं विषमतां नयेत् ।
हृल्लासमरुचिं हिक्कां कषायो जनयेदसौ ॥ १७४ ॥
ज्वरस्य मार्दवे जाते कायस्यापि च लाघवे ।

---

[1] क्रिमिनाशं च वारणम् ।

चलिते च मले तज्ज्ञैः त्रिरात्रं[1] देयमौषधम् ॥
मुस्तापर्पटकक्काथो शुण्ठी पर्पटकोऽपि वा ।
यावको पर्पटो वाऽपि देयो ज्वरविनाशनः ॥ १७६
पक्वं शीत[2] कषायो वा पाठोशीरसचालका ।
अमृता विश्वभूनिम्बमुस्ताक्काथोऽपि वा ज्वरे ॥
यथासात्म्यं प्रयोक्तव्याः कषाया दोषनाशनाः ।
अरुचिज्वरतृड्वक्त्रवैरस्यापाकनाशिनः ॥ १७८ ॥
पटोलपत्रं कटुकाबीजानि कुटजस्य च ।
एतैः प्रक्कथितः क्काथः सन्ततज्वरनाशनः ॥ १७९ ॥
पटोलकटुका पाठा शारिवा मुस्तयाऽन्विता ।
एतैस्सिद्धकषायस्तु सन्ततज्वरघातकः ॥ १८० ॥
मृद्वीका त्रिफलानिम्बपटोली मुस्तवस्तकैः[3] ।
कृतः क्काथो निहन्त्येव ज्वरमन्येद्युरुद्भवम् ॥ १८१
शुण्ठीगुडूचीभूनिम्बचन्दनैः परिकल्पितः ।
क्काथो निहन्ति न चिरात्तृतीयाहभवज्वरम् ॥ १८२
गुडूच्यामलकीमुस्ताक्काथो मधुसमन्वितः ।
ज्वरं निवारयेदाशु[4] चतुर्थदिनसम्भवम् ॥ १८३ ॥
दूर्वानिम्बपटोलानि वृषाधन्वाधवार्षभैः[5] ।

---

1 त्रिरात्रात्. 2 पक्वशीत. 3 वत्सके.. 4 निवारयत्याशु. 5 विषधन्वयंवासकैः.

शुण्ठीमुस्तावृषायूषैः क्काथो वाऽथ ज्वरापहः ॥
अमृता पिप्पलीमूलं नागरेन्द्रयवाम्बुदैः[1] ।
लघुना पञ्चमूलेन क्काथस्स्यात्पित्तजे ज्वरे ॥१८५
कटुका पर्पटं मुस्ता भूनिम्बश्च दुरालभा ।
एतैः सवत्सकैः क्काथो ज्वरं हन्यात्कफोद्भवम् ॥
ज्वरोऽन्यः सन्निपातोत्थः पित्तं यत्र पृथग्गतम् ।
कश्चित् कोष्ठेऽथवा दाहं[2] विदधाति पुरो न वा ॥
शीतं वातकफौ तद्वान् दुस्तरो दाहपूर्वकः ।
शीतादौ तत्र पित्तेन कफे स्पन्दितशोषिते ॥१८८
शान्ते शीतेऽम्लकोद्गारो मदस्तृष्णा भवेत्ततः ।
दाहादौ पुनरेते स्युः तन्द्रा स्वेदवमिक्लमाः ॥१८९
पटोलकटुका मुस्ता प्राणदा मधुकैः कृता ।
त्रिचतुःपञ्चशः क्काथः शीतके विषमे ज्वरे ॥
कायस्था नाकुली तिक्ता वयस्था गुरुचोरकैः ।
सहदेवीवचायुक्तैः शीतघ्नैर्धूपलेपनैः ॥ १९१ ॥
एतैरेवौषधैरिष्टैर्लवणक्षारसंयुतैः ।
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥
शीतज्वरे शिलातैललेपनं[3] परमौषधम् ।

---

[1] नारेन्द्रकर्यवाम्बुदैः. [2] दोषं. [3] लेमञ्जन.

हिङ्गुसैन्धवसंयुक्तं नस्यं जीर्णघृतान्वितम् ॥१९३
धात्रीचूर्णघृताघृष्टं वेतसाम्लतुषाम्भसा ।
प्रलेपाद्दाहनुत्फेनो विदर्या वा ह्लोद्भवः ॥१९४॥
कालेयं बदरानन्ता यष्टिचन्दनकाञ्जिकैः ।
सघृतैः स्याच्छिरोलेपः तृष्णादाहज्वरापहः ॥१९५
सन्निपाते ज्वरे मुक्ते शोफो भवति दारुणः ।
कर्णमूले यदा तेन कष्टादेव विमुच्यते ॥१९६॥
रक्तावसेचनं कार्यं नीरजाभिर्मुहुर्मुहुः ।
तथा कार्यं प्रयत्नेन यथा पाको न जायते ॥१९७
घृतं च पाचयेत्सिद्धं तिक्तैर्वा मधुरैरपि ।
कफे तिक्तघृतं[1] देयं मधुरं वातपित्तयोः ॥ १९८ ॥
क्षाराम्ललवणैर्द्रव्यैरवियुक्तैस्समा[2]दपि ।
आतपाच्च भृशं पित्तं कुपितं दूषयेदमुम्[3] ॥१९९॥
ततो घ्राणस्य कर्णेभ्यः पायुमेहनमार्गतः ।
प्रवर्तते तदाख्यातं रक्तपित्तं भिषग्वरैः ॥ २०० ॥
एकदोषं नवं चोर्ध्वं बलिनं चानुपद्रवम् ।
रक्तपित्तं सुखात्साध्यमधश्चेद्याप्यमुच्यते ॥२०१॥
अधश्चोर्ध्वं च चालितं त्रिदोषं भूर्यपद्रवम् ।

[1] एवं कृतं. [2] श्रमा. [3] दस्रक्.

असाध्यं रक्तपित्तं तत् त्यजनीयं भिषग्वरैः॥२०२
श्यामा त्रिवृत्कषायेण तत्कल्केन सितान्वितम् ।
लेहं विपाचितं दद्यात्कर्षमात्रमसृग्घरम् ॥ २०३॥
पिप्पली त्रिफला श्यामा शर्करा त्रिवृता मधु ।
एतैः कृतो मोदकोऽयं सन्निपातोर्ध्वरक्तजित्॥२०४
कुपितो वातलैर्द्रव्यैः मारुतः कफरोधतः ।
उरस्यावहते श्वासं हृत्पार्श्वगलपीडनम्[1] ॥ २०५
अमृताकण्टकारिभ्यां द्वाभ्यां षष्टिपलाद्रसे ।
चतुर्भागं पचेत्सर्पिर्घृतशेषं तु श्वासजित् ॥२०६॥
कृमिघ्नमौषधं रास्ना मागधीहिङ्गुसैन्धवम् ।
क्षरो भार्ङ्गि च तच्चूर्णं पिबेदाज्यस्य मात्रया ॥२०७
श्वासे बलाससंयुक्ते मारुतेन विनिर्मिते[2] ।
हिध्मा[3]यामग्निमान्द्ये च श्वासे चैतत्प्रशस्यते २०८
वृद्धात्श्वासाद्भवेच्छ्वासः श्वासात्तु कुपितो मरुत् ।
कुपितात्पवनात्पाण्डुः . . रोगाद्धृदाज्वरात् ॥२०९
खर्जूरं पौष्करं मूलं तथैवामलकाफिलम् ।
पिबेदाज्येन तच्चूर्णं श्वासे मांसरसेन वा ॥ २१०॥
वेगानां धारणादोजः स्नेहशुक्लक्षयादपि ।

[1] गुदपीडितम् [2] विनिर्जिते· [3] सिद्धौ·

अतिव्यायामतो हीनयोगादशनपानयोः ॥२११॥
वातलैः कुपितो[1] वातः कफं पित्तमुदीरयेत् ।
देवसन्धिं समाविश्य क्षयरोगं समावहेत् ॥ २१२
रास्ना तिलबलाचूर्णं ससर्पिर्यष्टिकोत्पलम् ।
अवलीढं हरेच्छोषमग्निमान्द्यं च नाशयेत् ॥ २१३
आनिष्टा[2]न्नोपयोगेन मारुतः कुपितो भृशम् ।
उदानः कुरुते छर्दिं नाभिपृष्ठे रुजान्वितम् ॥२१४
जम्बूचूतदलोशी रवटशृङ्गावलोहजः ।
क्षौद्रेण सहितः क्वाथः पित्तछर्दिविनाशनः ॥२१५
क्षौद्रं हरीतकीचूर्णं कोलं वा मधुमिश्रितम् ।
वमनं वा वमिद्रव्यैर्वृद्धं छर्दिं विनाशयेत् ॥२१६॥
हीनमिथ्यातिपानेन भवत्याशु मदात्ययः ।
छर्दिर्मोहो भ्रमस्तन्द्रा प्रलापो जायते ततः ॥२१७
पञ्चाहं सप्तरात्रं वा जायतेऽसौ मदात्ययः ।
अत ऊर्ध्वं प्रसक्तश्चेद्रोगोऽन्त्यः परिकीर्त्यते ॥२१८
सहृल्लासे सदाहे च सहृच्छूले मदात्यये ।
वमनं वमनद्रव्यैः प्रयुञ्जीत प्रयोगवित् । २१९ ॥
तृषि द्राक्षारसो देयो मधुना परिमिश्रितः ।

[1] भृशं प्रकुपितो. [2] अभीष्टा.

पाटल्युत्पलकन्दैर्वा तोयं केवलमेव वा ॥ २२० ॥
चिञ्चादाडिमवृक्षाम्लैः स तक्कोलाम्लवेतसैः ।
मुखलेपः कृतो हन्ति तृष्णां मद्यसमुद्भवाम् ॥२२१
मोहे विदाहे भ्रान्तौ च कर्तव्या शिशिरक्रिया ।
शिरश्शूले च जाड्ये च घनं प्रावरणं हितम् ॥
स्वापप्रलापबहुले योजयीत मदात्यये ।
छागतित्तिरिलावैणशशमांसरसैर्युतम् ॥ २२३ ॥
शालिषष्टिकमश्नीयात् प्रपिबेत्स्वादु[1]पानकम् ।
घृतं च केवलं पीतं मदात्ययहरं परम् ॥ २२४ ॥
गुदत्रिवलिसम्भूतविष्ठाधारणहेतुकाः ।
अङ्कुराः कथिताः प्राज्ञैरर्शांसीत्यभिधानतः ॥२२५
भृङ्गीहरीतकीकुष्ठभल्लातकफलैः कृतः ।
लेपस्तुत्थसमोपेतो गुदकीलविनाशनः ॥ २२६ ॥
मूलशिग्रूद्भवैर्बीजैर्निम्बाश्वत्थदलैरपि ।
बिल्वेन पीलुमूलेन रामठेनापि लेपनम् ॥ २२७॥
पथ्याचूर्णं सलवणं तक्रेण च विलोडितम् ।
पीतमर्शोहरं प्राहुर्गुडपथ्यं च तद्विदः ॥ २२८ ॥
अत्यम्बुपानाज्जायेत सुतरामतिसाररुक् ।

1 पिबेच्च मधु.

आमः पक्कस्सरक्तश्च त्रिधाऽसौ व्याधिरीरितः ॥
तत्रामे नागरं मुस्ता तथाच तृणवल्लभाः ।
तच्चूर्णं वटकाक्काथः मोचनाय प्रयुज्यते ॥ २३० ॥
पक्कातिसारे दातव्यं जम्बूपल्लवधातकी ।
जीरकं चूतबीजं च महावृक्षत्वचस्तथा ॥ २३१ ॥
बिल्वारनालगोकर्णी पञ्चाङ्गुलयवैः शृता[1] ।
स्विन्ना क्षौद्रयुता पथ्या पक्कातीसारभेषजम्॥२३२
विषा कुटजबिल्वं[2] च मुस्ता बालकबिल्वकम् ।
तत्क्वाथो विनिहन्त्याशु रक्तातीसारमुल्बणम् ॥
अतिसारेषु जातेषु पथ्यं नाश्नाति यः पुमान् ।
ग्रहणी जायते तस्य मुहुर्बध्वातिसारिणी ॥२३४॥
शुण्ठीसातिविषामुस्ताक्काथः पीतो निहन्ति ताम् ।
गुडूच्या संयुतोऽप्येष चतुर्भद्र इतीरितः ॥ २३५ ॥
[3]द्रव्यकर्मणि मण्डं च जलेन परिवेष्टितम् ।
उपयुक्तं निहन्त्याशु सकृच्छ्रां ग्रहणीमिमाम् ॥
त्रिविधं मूत्रकृच्छ्रं स्याद्वातपित्तकफोद्भवम् ।
मेहनेऽवक्षणे बस्तौ वातजं जनयेद्व्यथाम् ॥२३७॥
पित्ते पीतं सदाहं वा सन्ततं शोणितान्वितं ।

[1] सृता. [2] बीजां. [3] दीप्यकं माणिमन्थं च जलेन परिपेषितम्.

प्रस्तावमीरयेत्कृच्छ्रं कफजं गौरवान्वितम् ॥२३८॥
उर्वारुको बला बिल्वं पञ्चमूलद्वयं यवाः ।
पुनर्नवाऽभीरुमूलं कुलुत्थं बदरं तथा ॥ २३९ ॥
मत्स्याक्षमत्स्यभेदं च वृश्चीवं च समं कृतम् ।
तक्त्वाथेन सकल्केन सर्पिर्मधु[1]युतेन च ॥ २४० ॥
सूकरस्याच्छभल्लस्य वसया मिश्रितेन च ।
पञ्चभिर्लवणैस्सार्धं शूलं पीतेन हन्यते ॥ २४१ ॥
शतावरीगोक्षुरकं कशेरुं च विदेहकाम्[2] ।
कुशकाशेक्षुशालीनां साराणां मूलपञ्चकम् ॥२४२
तत्क्वाथश्शर्करायुक्तः सितो मधुसमन्वितः ।
पित्तजं नाशयेत् कृच्छ्रं सर्वा च शिशिरक्रिया ॥
सूक्ष्मैलां सुरया युक्तां धात्रीफलरसैरपि ।
पाययेत्कफजे कृच्छ्रे वमनं वाऽपि कारयेत् ॥
मधुरं शीतलं स्निग्धमम्लं गुरु च पिच्छिलम् ।
अन्नपानं च कुरुते प्रमेहकफदूषणान् ॥ २४५ ॥
विशालत्रिफलामुस्तादर्वीदारुविनिर्मितः ।
क्वाथो निवारयेन्मेहं निशाकल्कविमिश्रितः॥२४६
त्रिफलं चित्रकं दार्डी कलिङ्गा मधुमिश्रिता ।

[1] सर्पिस्तैल. [2] विदारिकाम्.

जलेन क्वथिता मेहं पीता निघ्नन्ति तत्क्षणात् ॥
पिबेद्धात्रीफलरसं माक्षिकेण समन्वितम् ।
गुडूच्या स्वरसं वाऽपि मधुना सह मिश्रितम् ॥
रूक्षपर्युषितात्युष्णाशुष्कैर्भुक्तैर्विदारिभिः ।
रक्तं प्रकुपितं शोफं कुरुते विद्रधिः परम् ॥२४९॥
एरण्डं च विदारी च श्रीपर्णी च पुनर्नवा ।
स्नेहत्रयं पिबेदेतैस्तल्लेपाद्विद्रधिर्द्रवेत् ॥ २५० ॥
शोधयेद्विद्रधीन् पित्तमञ्जिष्ठोशीरपद्मकैः[1] ।
निशादार्वीपयस्याभिः यष्ट्या दुग्धेन रोपयेत् ॥
क्षीरवृक्षप्रवाळत्वक्फलैः कफसमुद्भवम् ।
क्वाथकल्कादिसंयुक्तैः विद्रधिं नाशयेद्भिषक् ॥२५२
अतिसारज्वरच्छर्दिकाशीतो वातलं भृशम् ।
उपयुक्तान्नपानं च शीतलं वा बुभुक्षितः ॥२५३॥
भुक्त्वा यो देहसंक्षोभि कुरुते कर्म सत्वरम् ।
तस्य संजायते गुल्मो वातसंक्षोभहेतुकः ॥२५४॥
उग्रगन्धा बिल्वशुण्ठी पुष्करं लवणत्रयम् ।
रामठं चित्रकं तेषां चूर्णं गुल्मनिबर्हणम् ॥२५५॥
मरिचा जाजिहपुषा प्रास्तिका[2]पञ्चकोलकैः ।

---

1 नास्ति. 2 पृथ्वीका.

दग्धा दुग्धेन सम्मिश्रा तथा मांसरसेन च ॥
दाडिमाद्बदरान्मूलात्कल्कं निक्षिप्य सर्पिषि ।
त्रिगुणं जलमाधाय पचेद्गुल्मविनाशनम्॥ २५७॥
अजीर्णस्यानुबन्धेन मलिनादन्नपानतः ।
विड्रोधाज्जायते व्याधिरुदरे वह्निमान्द्यतः ॥२५८॥
सप्तकृत्वस्स्नुहिक्षीरभावितं मागधीरजः ।
उष्णोदकेन पीतं तत् जठरव्याधिनाशनम् ॥
फलानां त्रितयं शुण्ठ्या दशमूलात्पलानि षट् ।
तैलाढकं घृतप्रस्थं प्रस्तु[1] द्रोणेन संयुतं ॥ २६० ॥
मृद्वग्निना पचेत्सर्वं घृतशैलावशेषितम् ।
तन्मात्रयोपयुञ्जीत निश्शेषोदररोगजित् ॥ २६१॥
वायुना बलिना क्षिप्तं पित्तं व्याप्याखिलां तनुम् ।
त्वङ्मांसान्तरमाविश्य त्वचि पाण्डुत्वमावहेत् ॥
चित्रकं शृङ्गिबेरं च प्रत्येकं पलसंयुतम् ।
पिप्पल्यर्धफलं ग्राह्यं धान्यकस्य पलद्वयम् ॥२६३
दाडिमस्यापि कुडुबं वारिणा परिपेषयेत् ।
पलानि विंशतिः सर्पिः सलिलस्याढके पचेत् ॥
पाण्डुरोगे च हृद्रोगे गुल्मेष्वर्शस्सु मारुते ।

---

[1] मुस्ता.

बलासे प्लीहरोगे च प्रयोगोऽयमुदाहृतः ॥२६५॥
अतिसारार्दितश्शीघ्रं लवणाम्लं निषेवितम् ।
तस्य सञ्जायते शोफः स कृच्छ्रस्सर्वदेहगः ॥२६६
विषाशुण्ठीदेवदारुक्रिमिघ्नेन्द्रयवोषणम् ।
क्वथितं पाययेच्छोफरोगिणं शोफशान्तये ॥२६७॥
एरण्डातीविषा रास्ना देवदारुमहौषधैः ।
सहितो गुग्गुलो देयः सर्वाङ्गश्वयथौ नृणाम् ॥
अतिप्रकुपितं रक्तं तीक्ष्णैरन्नैर्विदाहिभिः ।
व्रणं विसर्पं कुरुते विसर्पस्स तु कथ्यते ॥२६९॥
मुस्तारिष्टपटोलं च पेषितं शीतवारिणा ।
विसर्पं तेन लेपेन क्षालयेच्च परेऽहनि ॥ २७० ॥
वटप्ररोहास्तरुणाः कदळीमध्यमिश्रिताः ।
मृणालग्रथितैर्मिश्राः विसर्पं घ्नन्ति लेपनात् ॥
विरुद्धेनान्नपानेन साधूनां निन्दया वधात् ।
प्राक्तनैः कर्मभिः क्रूरैः कुष्ठं श्वित्रं च जायते ॥
धात्रीनिम्बस्य पत्राणि पेषितानि तु भक्षयन् ।
कासमर्दशफाकुष्ठं लिम्पेद्दन्तशठाम्बुना ॥ २७३ ॥
गुडूचीनिम्बपत्राणि पटोलं कण्टकारिका ।
त्रिफलार्कं करञ्जश्च वसारास्नासमांशकाः ॥२७४॥

तेषां क्वाथेन कल्केन घृतं सम्यग्विपाचितम् ।
पानेन सर्वकुष्ठानि नाशयत्यचिरादिदम् ॥ २७५ ॥
क्षारं तु राजवृक्षस्य पूतिकीटसमन्वितम् ।
लेपश्श्वित्रं निहन्त्याशु कुर्याच्च समवर्णताम् ॥
अत्यर्थं सेवितैर्वायुर्धातूनां क्षयकारकैः ।
कुपितः कुरुते व्याधीन् सकृच्छ्रान् श्लथपूर्वकान् ॥
कोकिलाक्षकषायस्य पानात्तच्छाकभोजिनः ।
तद्वारिणा च स्नातस्य वातव्याधिर्विनश्यति ॥
शुण्ठी रास्ना चित्रकं च देवदारुसहाचराः ।
एषां क्वाथं तैलमिश्रं पिबेद्वातरुजापहम् ॥ २७९ ॥
रक्तं प्रकुप्यत्यन्नेन पटनातिविदाहिना ।
आतपाल्लवणादम्लाद्यानाद्व्यायामसेवनात् ॥ २८०
वायुना प्रेरितं तच्च सर्वसन्धौ प्रवर्तते ।
सर्वेभ्यो रोमकूपेभ्यः स व्याधिर्वातशोणितः ॥
अमृताया रसक्वाथः कल्कं क्वाथमथापि वा ।
बहुकालस्थितं वातशोणितं तु विनाशयेत् ॥ २८२
इक्षुद्राक्षा च सौवीरं मस्तु मद्यं तुषोदकम् ।
शर्कराक्षौद्रसम्मिश्रं वारिसेके प्रशस्यते ॥ २८३ ॥
रोगे रक्ताधिके जाते सर्वाङ्गव्यापकेऽसृजि ।

सिरामोक्षः प्रकर्तव्यः . . . . स्नेहपुरस्सरः॥ २८४
गाढं निपीड्य चाङ्गानि यन्त्रैर्विविधैरपि ।
कुठार्या व्रीहिचक्रेण सिरां विध्येद्धृदि क्षताम्॥ २८५
ललाटे लोचनोपान्ते नासायां रसनातले ।
मणिबन्धे बाहुसन्धौ द्व्यङ्गुले गुल्भमूर्धनि ॥ २८६॥
हरेत्प्रादेशिकं शृङ्गैः ग्रथितं वारिजन्मभिः ।
मेदोग्रन्थीन् शितैश्शस्त्रैः पाटयित्वा समुद्धरेत् ॥
प्रवृद्धामश्मरीं शस्त्रैः पाटयित्वा बहिः क्षिपेत् ।
गुदमध्येऽङ्गुलिं क्षिप्त्वा मध्यमां परिवर्तयेत् ॥ २८८
अश्मरीमानयेद्युक्त्या वस्तुपातं विचक्षणः ।
उच्छूनतां परिज्ञाय छिन्द्यात् शस्त्रेण लाघवात् ॥
छेदान्निस्सारयेदेतामश्मरीं स्मरघातिनीम् ।
व्रणिनं स्थापयेत्पश्चात् कोष्णवारिणि बुद्धिमान् ॥
अर्धीमधुघृताभ्यां च व्रणे लेपं प्रवर्तयेत् ।
यावद्रोपणमायाति तावत्पथ्येन धारयेत् ॥ २९१॥
कुलत्थमश्मभेदं च गोक्षुरं क्वाथयेज्जले ।
तद्यूषं पाययेत्प्राज्ञः हरेत्तेनापि चाश्मरीम् ॥ २९२
एवमन्येषु दोषेषु दोषो यश्चाधिको भवेत् ।
तस्य दोषस्य कुर्वीत चिकित्सां मतिमान् भिषक् ॥

पितृपक्षसमुद्भूता मतृपक्षसमुद्भवाः ।
आत्मसम्बन्धिनो ये च बन्धवस्ते प्रकीर्तिताः ॥
बन्धूनां मधुरं वाक्यं यथायोग्यं सहासनम् ।
सन्धिभागश्च कर्तव्यः सुवर्णाम्बरभूषणैः ॥ २१५॥
वैतनाः किङ्करा दास्यो दासाः कर्मकरास्तथा ।
बुद्धिखड्गसहायाश्च भृत्यास्ते परिकीर्तिताः॥२१६
एतेषां रक्षणं सम्यक् तथाभरणपोषणम् ।
दानं सम्माननं कार्यं लोकद्वयहितैषिणा ॥ २१७
व्याघ्रसिंहगजैश्चोरैश्चतुर्भिश्चापि विद्रुतः ।
भयाच्छरणमायातः शरणागत उच्यते ॥ २१८ ॥
रक्षेच्छरणमायातं प्राणैरपि धनैरपि ।

---

यवासो दुरालभा कटुका तिक्ता सारिसुगन्धिः धन्वयवासो यशस्वी दुरालभा लघुपञ्चमूली बृहतीद्वयं शालिपर्णी पृष्टिपर्णी गोक्षुरी काकमाची नाकुली नागुळिका वयस्था धात्री चोरकः ग्रन्थिपर्णी शिला मनःशिला कालया दार्वी दुरालभा श्यामा कृष्णा त्रिवृत्त्रिवृदरुणं त्रिवृदौषधं शुण्ठी वटशृङ्गः अविकासितपल्लवः वृक्षाम्लः तिन्त्रिणीकः कोलः बदरः शृङ्गी कर्कटशृङ्गी पीलु कर्णाटगोरु. एरण्डः उरुवूकश्च पञ्चाङ्गलः विषा अतिविषा माणिमन्थं सैन्धवं बिल्वः श्रीपर्णी काश्मर्या तर्कारी टकली टुण्टकः कर्णाटझुलुः महापञ्चमूलुः अभीरुक् शतावरी वृश्चावकर्णाटी मोडके सैन्धवं सौवर्चलं बिडाकाचसमुद्रः पयस्यां दुग्धं रामठं हिङ्गु ऊषणं मरिचं महौषधं शुण्ठी वासा आटरूषकः ॥ इत्याधिकः पाठः.

स यशो महदाप्नोति जनैस्सर्वैश्च पूज्यते ॥२९९॥
क्रतवो वार्धिसंयुक्ता भीतसत्वस्य रक्षणम् ।
तुलया तोलिते तत्र प्राणत्राणं विशिष्यते ॥३००
राज्यप्राप्तैर्नृपकुलभुवामित्युपायोपदेशः
सम्यक् सोमेश्वरनृपतिना गर्भसारस्वतेन ।
चक्रे चन्द्रप्रतिमयशसा रञ्जनाय प्रजानां
पुण्यौघानामपि च महतां वृद्धये बुद्धये च ॥३०१

इति श्रीमहाराजाधिराज सत्याश्रयकुलतिलक चालु-
क्याभरण श्रीमद्भूलोकमल्ल श्री सोमेश्वरदेव
विरचिते अभिलषितार्थचिन्तामणौ (राज)
मानसोल्लासे राज्यप्राप्तिहेतूपायकथने
प्रथमे प्रकरणे श्लोका[1]

---

[1] कथने प्रथमोऽध्यायः.

## द्वितीयोऽध्यायः

राज्यप्राप्तिनिमित्तानि कथितानीह विंशतिः ।
तत्स्थिरीभावमुद्दिश्य कारणानि वदाम्यहम् ॥ १ ॥
धर्मं सत्यं कुलं शीलं तारुण्यं च सरूपता ।
दाक्षिण्यमविसंवादो वृद्धसेवा कृतज्ञता ॥ २ ॥
अक्षुद्रपरिषत्कत्वं बुद्धिदेवसहायता ।
वश्यसामन्तता शक्तिर्दक्षत्वं क्षिप्रकारिता ॥ ३ ॥
शौर्यं धैर्यं क्षमौदार्यं शुचित्वं प्रियवादिता ।
उद्योगित्वमनिर्वेदः सर्वदा धर्मकारिता ॥४॥
जनानुरागः सौभाग्यं शस्त्रशास्त्रार्थनैपुणम् ।
विवेको दृढचित्तत्वं कलाकुशलता धनम् ॥ ५ ॥
दोषानुरूपदण्डत्वं सर्वसत्वहितैषिता ।
दयालुत्वं प्रसन्नत्वं भृत्यानां सुखदर्शिता ॥ ६ ॥
आर्जवं तत्वदर्शित्वं सदोत्साहो नयज्ञता ।
मङ्गलाचार इत्येतैर्गुणैर्युक्तो नृपो वरः ॥ ७ ॥
सत्यं[1] शौर्यं क्षमा दानं पञ्चमी स्यात् गुणज्ञता ।
अवश्यं भाविनः पञ्च गुणास्त्वेते महीभुजाम् ॥ ८

[1] सत्यं सत्वं·

विभूतिं च तथा कीर्तिं धर्मं च विजयं सुखम् ।
यदीच्छेत्समयं राजा गुणानेतान् विधारयेत् ॥९॥
भाव्यं पथ्याशिना नित्यं नीरुजो जायते ततः ।
व्याधिभिर्वर्जितो राजा राजकार्यक्षमो भवेत्॥१०
वलिभिः पलितैर्युक्तो रूपेण रहितो भवेत् ।
स्त्रीजनैः भृत्यवर्गैश्च भूपतिश्चावमन्यते ॥ ११ ॥
तस्माद्रासायनान् योगान् ज्ञात्वा सेवेत पार्थिवः ।
दृढगात्रो भवेत्तेन वलीपलितवर्जितः ॥ १२ ॥
जीवेच्च सुचिरं कालं जरारोगविवर्जितः ।
तस्माद्रसायनं वक्ष्ये नृपाणां हितकाम्यया ॥ १३॥
रसायनक्रिया द्वेधा कथिता पूर्वसूरिभिः ।
कुटप्रवेशनादेका वातातपसहाऽपरा ॥ १४ ॥
कुटप्रवेशिका वर्ज्या लोकरक्षापरैर्नृपैः ।
वातातपसहा सेव्या राजकार्याविनाशिनी ॥ १५॥
कृष्णपक्षे चतुर्दश्यां[1] सन्ध्यायां शाल्मलीतरुम् ।
बलिपूजादिकं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥ १६ ॥
"ओं ह्रां अमृतस्यन्दिनि अमृतं स्रव स्वाहा ।"
सप्तकृत्वः प्रयुक्तेन मन्त्रेणानेन शाल्मलीम् ॥१७

[1] त्रयोदश्यां·

अभिमन्त्र्य कुठारेण हन्याद्वारान् बहून् सुधीः ।
तस्य निर्यासमादाय प्रभाते भास्करोदये ॥ १८ ॥
धात्र्या भृङ्गशतावर्या गुलूच्या सरसैः पृथक् ।
सप्तवारान् प्रतिरसं तेन भावनमाचरेत् ॥ १९ ॥
सञ्चूर्ण्योलूखले कुर्याद्गुलिकाः बदरैस्समाः ।
प्रतिवासरमेकैकां धारयेद्गुलिकां मुखे ॥२०॥
अह्नां द्विसप्तके याते नूतना रदना नखाः ।
सम्भवन्ति ततः केशा भृङ्गपक्षसमत्विषः ॥२१॥
द्वयष्टवर्षाकृतिर्हृश्यो बलवीर्यसमन्वितः ।
समासहस्रजीवी स्यान्नात्र कार्या विचारणा ॥२२
मूलत्वक्पत्रपुष्पाणि फलमित्यङ्गपञ्चकम् ।
आहृत्य शाल्मलीवृक्षात् सूक्ष्मचूर्णं तु कारयेत् ॥
मधुना सर्पिषा युक्तं बिडालपदमात्रकम् ।
तल्लिहेत्प्रातरुत्थाय मासमेकं मिताशनः ॥२४॥
मासेन जायते तेन वलीपलितवर्जितः ।
मासद्वयप्रयोगेण मत्तेभबलभाग्भवेत् ॥ २५ ॥
जीवत्यब्दसहस्राणि तेजस्वी तरुणाकृतिः ।
नीरुजो वीर्यसम्पन्नो नात्र कार्या विचारणा ॥२६
पुष्यार्कदिवसे प्राप्ते हस्तिकर्णीं समाहरेत् ।

छायाशुष्कां प्रकुर्वीत समूलां चूर्णयेत्ततः ॥ २७॥
वाससा गालितं सूक्ष्मं मधुसर्पिस्समायुतम् ।
स्निग्धभाण्डे निधायाथ धान्यराशौ निगूहयेत् ॥
एकविंशे दिने याते समुद्धृत्य तदौषधम् ।
पलं पलं प्रतिदिनं भक्षयेदवितन्द्रितः ॥ २९ ॥
यावद्दिनशतं याति तावदम्लं विवर्जयेत् ।
मुद्गव्यूषसमायुक्तं भुञ्जीत मधुरं लघु ॥ ३० ॥
भवेच्छोडशवार्षीको मेधावी कोकिलस्वरः ।
योजनानां शतं याति दिनेनैकेन मानवः ॥ ३१ ॥
नवनागबलोपेतो जीवत्यब्दसहस्रकम् ।
हस्तिकर्णीप्रयोगेण निश्चितं भवभाषितम्॥ ३२ ॥
सितां रक्तां च पीतां च कृष्णां मुण्डीं चतुर्विधाम् ।
पञ्चम्यां शुक्लपक्षस्य पूर्णिमायां तु वा निशि ॥
रोहिण्यां श्रवणे पुष्ये रेवत्यां वा समुद्धरेत् ।
पञ्चाङ्गानि समाहृत्य छायायां परिशोषयेत् ॥३४॥
सर्पिषा मधुना सार्धं बिडालपदमात्रकम् ।
तच्चूर्णमुपयुञ्जीत क्षीरषष्टिकभोजनः ॥ ३५ ॥
एकविंशे दिने याते दिव्यदेहो भवेन्नरः ।
मासत्रयप्रयोगेण पुमान् प्राप्नोत्यदृश्यताम् ॥३६॥

पञ्चमासप्रयोगेण मोदते विबुधैस्सह ।
मासषट्कप्रयोगेण चिरायुर्मोदते चिरम्[1] ॥ ३७ ॥
श्वेतस्य ब्रह्मवृक्षस्य पत्रं पुष्पं फलं हरेत् ।
शोषयित्वा कृतं चूर्णं भक्षयेन्मधुसर्पिषा ॥ ३८ ॥
सप्तरात्रप्रयोगेण वलीपलितवर्जितः ।
द्व्यष्टवर्षाकृतिर्मर्त्यो जीवेद्वर्षशतद्वयम् ॥ ३९ ॥
कुमारीं पुष्यनक्षत्रे समूलां पल्लवान्विताम् ।
शोषयित्वा च तच्चूर्णं शुद्धकायः प्रयत्नवान् ॥ ४० ॥
सर्पिषा मधुना सार्धं भक्षयेत्कर्षमात्रकम् ।
गव्यक्षीरसमायुक्तं कुर्याच्छाल्यन्नभोजनम् ॥ ४१ ॥
ज्वरास्सर्वे विनश्यन्ति मुखरोगो गलग्रहः ।
चक्षुश्श्रोत्रभवो रोगः सर्वशूलं प्रशाम्यति ॥ ४२ ॥
कण्डूतिः कटुको दाहः कुष्ठं लूता भगन्दरः ।
प्रमेहो जठरं गुल्मः क्षयोऽपस्मार एव च ॥ ४३ ॥
सप्ताहे प्रथमे याते नश्यन्त्येते रुजः स्फुटम् ।
प्राप्ते द्वितीयसप्ताहे दिव्यदेहो भवेन्नरः ॥ ४४ ॥
तृतीये भूतलस्थानि निधानान्यपि पश्यति ।
चतुर्थे कुञ्चिता नीला जायन्तेऽस्य शिरोरुहः ॥

[1] खेचरो भवेत्.

समाः सहस्रं विततो जीवेत्तारुण्यसंयुतः ।
पञ्चमे गन्धनीरजा गन्धगात्रो भवत्यलम् ॥ ४६ ॥
षष्ठे वाचस्पतिप्रख्यः प्रज्ञवान् जायते नरः ।
सप्तमे पूर्णचन्द्राभः सर्वाह्लादकरो भवेत् ॥ ४७ ॥
अष्टमे सर्वसत्वानां पीयूषं वितरत्यसौ ।
सप्तद्वीपाधिपत्यं च नवमे सप्तके भजेत् ॥ ४८ ॥
भूतं भव्यं भविष्यच्च दशमे वक्ति सप्तके ।
अश्रुतान्यपि शास्त्राणि जानात्येकादशे नरः ॥
द्वादशे सप्तके प्राप्ते द्वितीय इव मन्मथः ।
वशीकरोति सर्वाणि नरनारीमनांस्यपि ॥ ५० ॥
संवत्सरोपयोगेन समा लक्षत्रयं सुखी ।
जरापलितमुक्ताङ्गो जीवत्येव न संशयः ॥ ५१ ॥
एवं रसायनं प्रोक्तमव्यापत्तिकरं नृणाम् ।
नृपाणां हितकामेन सोमेश्वरमहीभुजा ॥ ५२ ॥
कुलीनाश्श्रुतसम्पन्नाश्शुचयश्चानुरागिणः ।
शूरा धीराश्च नीरोगा नीतिशास्त्रविशारदाः॥५३॥
प्रगल्भा वाग्मिनः प्राज्ञा रागद्वेषविवर्जिताः ।
वैराणामप्यकर्तारः सचिवास्स्युर्विभूतये ॥ ५४ ॥
सत्यसन्धा महात्मानो दृढचित्ता निरामयाः ।

जनानां सम्मता दक्षास्ससचिवा नृपसम्पदे ॥५५॥
सङ्गता राजकार्येषु रागद्वेषविवर्जिताः ।
आयव्यये च निपुणाः सचिवाः कोशवृद्धये ॥
अमार्गे वर्तमानस्य नृपस्य प्रतिकूलगाः ।
बोधयन्तः प्रियैर्वाक्यैः सचिवास्स्युर्नृवृद्धये ॥५७॥
अन्वयादागतान् वृद्धानुपधाभिः परीक्षितान् ।
सचिवान् सप्त वाऽष्टौवा कुर्वीत मतिमान् नृपः ॥
स्वदेशजातास्सत्वज्ञा ऊहापोहविचक्षणाः ।
देशकालविदो धीराः साध्यासाध्यविवेकिनः॥५९॥
परेङ्गितज्ञा धीमन्तः स्वाकारस्य निगूहकाः ।
मन्त्रसंरक्षकाश्चाप्तमान्त्रिणः स्युर्महीपतेः ॥६०॥
त्रय्यां च दण्डनीत्यां च शान्तिकर्माणि पौष्टिके ।
आथर्वणे च कुशलः स स्याद्राजपुरोहितः ॥६१॥
षोडशाभिहिता षष्टिः[1] प्रभवाद्यब्दसंयुता[2] ।
दावै[3]रपि समायुक्ताः शाकभूपोहितास्समाः ॥६२॥
एकपञ्चाशदाधिके सहस्रे शरदां गते ।
शाकस्य सोमभूपाले सति चालुक्यमण्डिते[4] ॥
समुद्ररशनामुर्वीं शासति क्षतविद्विषि ।

---

[1] 16 × 60 = 960 [2] From Prabhava to Sowmya 43.
[3] Dàva = 48. Hence 960 + 43 + 48 = Saka 1051. [4] मण्डने.

सर्वशास्त्रार्थसर्वस्वपाथोधिकलशोद्भवे ॥ ६४ ॥
सौम्यसंवत्सरे चैत्रे मासादौ शुक्रवासरे ।
परिशोधितसिद्धान्ता अब्दास्स्युर्ध्रुवका इमे॥ ६५॥
षड्वारा घटिकास्सप्त पदान्यपि च विंशतिः ।
भानि षड्विंशतिस्त्वेकचत्वारिंशच्च नाडिकाः ॥ ६६
अधिमासं क्षिपेद्वारं द्वात्रिंशन्नाडिकास्थितौ ।
नक्षत्रे द्वे पदे द्वे च नाड्यश्चैकादशापराः ॥ ६७ ॥
योज्यास्त्याज्याः पुनर्योज्या वारे नाडीषु पिण्डके।
नक्षत्रे च पुनर्योज्या सिद्धिरेतावता भवेत् ॥६८॥
तिथौ वारेण संयुक्ते सप्तभिश्च विभाजिते ।
अवशिष्टो भवेद्वार एवं वारविनिर्णयः ॥ ६९ ॥
पदयुक्ते तिथौ भागं चतुर्दशभिराहरेत् ।
चतुर्दशावधि ज्ञेयं धनं शिष्टमृणं भवेत् ॥ ७० ॥
आद्ये त्रयोदशे पञ्च द्वितीये द्वादशे दश ।
एकादशे तृतीये च नाड्यश्चैकादश[1] स्मृताः॥७१॥
चतुर्थे दशमे च स्यादेकोनाविंशतिस्तु ताः ।
पञ्चमे नवमे नाड्यो द्वाविंशतिरुदीरिताः ॥ ७२ ॥
षष्ठेऽष्टमे च घटिकाः चतुर्विंशतिरीरिताः ।

---

[1] नाड्यः पञ्चदश·

सप्तमे घटिका ज्ञेया सङ्ख्यया पञ्चविंशतिः ॥७३॥
मकरे सूर्यघटिकास्तिस्रष्षट्च प्रवेशयेत् ।
कर्कटेऽप्येवमेव स्यात् घटिकास्तु वियोजयेत् ॥
कुम्भे द्वादश विज्ञेयाः संयोज्या रविनाडिकाः ।
तावत्यो घटिकास्सिंहे योजनीया विचक्षणैः ॥७५
मीने रुद्राश्च रुद्राश्च योज्यास्सूर्यस्य नाडिकाः ।
तावत्य एव कन्यायां स्फोटनीया मनीषिभिः ॥
मेषे रुद्रा दिशो नाड्यो मेलनीया धनाभिधाः ।
तुलायां नाडिकास्तास्तु वारणीयाः कृपा[1]भिधाः ॥
वृषेऽष्टौ षाड्विनाड्यश्च मिश्रणीया विपश्चिता ।
अपसार्यास्तु ता नाड्यो वृश्चिके परिकीर्तिताः ॥
युग्मे तिस्रश्च शून्यं च घटयेद्गणकोत्तमः ।
तदेव वारयेद्राशौ कोदण्डाख्यैर्विचक्षणः ॥ ७९ ॥
रविवारं प्रवक्ष्येऽत्र चतुर्भिर्गुणयेत्तिथिम् ।
तृतीयं तु तिथेर्भोगं[2] नक्षत्रघटिका अपि ॥ ८० ॥
धनाख्या रविनाड्योऽत्र योज्यास्त्याज्याः कृपा[3]-
भिधाः ।
संयोज्य विभजेत् षष्ट्या लब्धमृक्षेण योजयेत् ॥

[1] क्षणा॰ [2] भागं॰ [3] क्षणा॰

वक्ष्यामि शशिनक्षत्रं सूर्यर्क्षे योजयेत्तिथिम् ।
तिथिं सङ्गुणयेत् षड्भिर्योजयेत्तिथिनाडिभिः ॥८२॥
शोध्यं तद्रविनाडीषु ततश्शशिभमाप्यते ।
शशिरवियोगे योगे नाडीयोगेऽस्य नाडिकाः ॥८३
हन्याद्द्वाभ्यां तिथिं तत्र त्याज्यमेकं ततो घटिम् ।
दिनस्य स्फोटयेत्तत्र सप्तभिः परिभाजिते ॥८४॥
करणं जायते शिष्टं भुक्तिस्सूर्योदयात्पुनः ।
करणं घटिकात्रिंशत्तिथि[1]पञ्चाङ्गनिर्णयः ॥ ८५ ॥
अनेन विधिनाऽऽनीय तिथिं वारसमन्वितम् ।
नक्षत्रं च तथा योगं करणं गणकोत्तमः ॥ ८६॥
अभिषेके पट्टबन्धे विवाहे जातकादिषु ।
गृहप्रवेशे यात्रायां गृहारम्भे च सङ्गरे ॥ ८७
शुक्ले चन्द्रबलं मुख्यं कृष्णे ताराबलं बलम् ।
शतानि पञ्च दोषाणां बुधो हन्ति विनिश्चितम् ॥
शुक्रः पञ्च सहस्राणि दोषाणां हन्तिं निश्चितम् ।
लक्षमेकं तु दोषाणां सुराचार्यो व्यपोहति ॥ ८९ ॥
एवं ग्रहबलं ज्ञात्वा दुर्बलत्वं च पापिनाम् ।
लग्नं यः कथयेत्सम्यक् स कार्यो गणको नृपैः ॥

[1] दिति.

कुलजश्शीलवान् वीरश्चतुर्भाषाविशारदः ।
गजाश्वारोहणे दक्षश्शस्त्रशास्त्रविशारदः ॥ ११ ॥
शकुने च निमित्ते च चिकित्सायां च वेदिता ।
व्यूहभेदविधानज्ञः सारेतरविशेषवित् ॥ १२ ॥
दाता प्रियंवदो दान्तो मतिमान् दृढनिश्चयः ।
राज्ञा सेनापतिः कार्यश्शूरो भृत्यविशेषवित् ॥ १३
नीतिशास्त्रार्थकुशला रागद्वेषविवर्जिताः ।
धर्माधिकारिणः कार्या विलोभभयवर्जिताः ॥ १४ ॥
स्मार्तैस्सह समालोच्य यथोक्तं दण्डमाचरेत् ।
ततो राज्ञा[1] विचारज्ञः कार्यो दण्डधरो द्विजः ॥ १५
लोहवस्त्राजिनादीनां रत्नानां च विभेदवित् ।
व्यये च तद्विशेषज्ञो रक्षणे निपुणश्शुचिः ॥ १६ ॥
अनाहार्यः सुसन्तुष्टश्चाप्तो बहुकुटुम्बकः ।
सावधानो गणितविद्भाण्डागारे नियुज्यते ॥ १७ ॥
एकाद्या नवपर्यन्ता नवैवाङ्काः[2] स्वरूपतः ।
दशोत्तरक्रमेणैते वर्धन्ते बिन्दुवृद्धितः ॥ १८ ॥
बिन्दुरेको दशस्थाने शते बिन्दुद्वयं भवेत् ।
बिन्दुत्रयं सहस्रे स्यादयुते तच्चतुष्टयम् ॥ १९ ॥

---

1 शक्तो. 2 नवैकाङ्काः.

बिन्दवः पञ्च लक्षे स्युः प्रयुते बिन्दवस्तु षट् ।
बिन्दवः सप्त कोटौ स्युरर्बुदेचाष्टबिन्दवः ॥ १०० ॥
बिन्दवो नव पद्मेस्युः खर्वे स्युर्दश बिन्दवः ।
एकादश निखर्वे तु द्वादशास्युर्महार्बुदे ॥ १०१ ॥
शङ्खे त्रयोदश प्रोक्ताः समुद्रे मनुबिन्दवः ।
आय[1]संज्ञे समाख्याता बिन्दवस्तिथिसंख्यया ॥
द्विरष्टबिन्दवो मध्ये परार्धे दश सप्तच ।
एवमष्टादशस्थानं गणितं व्यावहारिकम् ॥ १०२ ॥
एकाङ्के बिन्दुरेकश्च दशाकं तत्प्रकीर्तितम् ।
द्वितीयाङ्के पुरो बिन्दौ सङ्ख्या विंशतिरिष्यते ॥
एवं तृतीयाद्यङ्केषु बिन्दुः स्यात्पुरतो यदि ।
त्रिंशदाद्या तदा सङ्ख्या नवत्यन्ता प्रकीर्तिता ॥
शताधिके परार्धान्ते यावन्तो बिन्दवस्स्थिताः ।
यस्य कस्य पुरोभागे तावत्सङ्ख्या तु सा भवेत् ॥
अङ्काः कतिपये स्थाप्या गुणनीयतया स्थिताः ।
अधस्तात् प्रथमाङ्कस्य गुणकस्याङ्कमालिखेत् ॥
एकैकं गुणयेत्सर्वैरुपरिस्थमधस्स्थितैः ।
लब्धं निवेशयेत्तत्र स्वाङ्कस्योपरि लेखवित् ॥ १०८

1 अन्त्य·

एकादिगुणना वाच्या बुधैरङ्कविपर्ययात् ।
लब्धं तु दशमस्थानं पूर्वेणाङ्केन योजयेत् ॥१०९
गुणकार[1]क्रमेणादावङ्कान्कतिपयान्न्यसेत् ।
विभाजकानधस्तेषां सुसमं विन्यसेद्बुधः ॥११०॥
अधोङ्कहृदये कृत्वा तर्कयेदङ्कमूर्ध्वगम् ।
विभागो येन लभ्येत तेन भागं प्रकल्पयेत् ॥१११
अनेन क्रमयोगेन भजनीयं विभाजयेत् ।
एकत्र स्थापयेल्लब्धमवशिष्टं तथाऽन्यतः ॥११२॥
अवशिष्टं पुनर्भक्तं यथाभागानुसारतः ।
लब्धेन मेलयेत्तत्तु भागहारोऽयमीदृशः ॥ ११३ ॥
प्रमाणं फलमिच्छेति राशित्रितयमुच्यते ।
इच्छया गुणितं वस्तु प्रमाणेन विभाजयेत्॥११४
प्रमाणं द्रव्यमाख्यातं फलं द्रविणमुच्यते ।
द्रव्यजातिविभागेच्छामिच्छामिच्छन्ति सूरयः ॥
त्रैराशिकमिदं प्रोक्तं गणितं गणिकोविदैः ।
पञ्चराशिकमत्रैव सप्तराशिकमेव च ॥ ११६ ॥
नवराशिकमप्यस्मिन् ज्ञेयं त्रैराशिके विधौ ।
सकलं गणितं प्रोक्तं संक्षेपेण प्रसङ्गतः ॥११७॥

---

1 गुणाकार

वक्ष्यामि गणितं भिन्नमुद्देशो खण्डितं हि यत् ।
रूपमंशस्तथा छेदो नामैतद्व्यावहारिकम् ॥ ११८
रूपमूर्ध्वमधश्चांशस्तस्यांशाच्छेद इष्यते ।
राशिद्वयं प्रकर्तव्यं गुण्यं गुणकमेव च ॥ ॥११९॥
सम्पूर्णं कथ्यते रूपमंश उद्धारितो भवेत् ।
तस्यांशस्य विभागो यः स छेदः परिकीर्तितः ॥
गुणयेदंशमंशेन छेदं छेदेन बुद्धिमान् ।
फलांशं विभजेत्तज्ज्ञः फलेन छेदजन्मना॥१२१
गुणनं भिन्नमाख्यातं भिन्नभागोऽभिधीयते ।
रूपाणां छेदमार्गेण ह्यन्यो[1] राशिर्विधीयते॥१२२
भाजकस्य तथा चान्यो राशिर्लेख्यो विपश्चिता।
छेदेन गुणयेद्रूपं लब्धमंशेन मेलयेत् ॥ १२३ ॥
छेदेनांशं विपर्यासाद्गुणयेद्राशियुग्मके ।
भाजकेन भजेद्भाज्यं भिन्नभागोऽयमीदृशः ॥१२४
ईदृशं गुणकारं च भागहारं च तत्त्वतः ।
त्रैराशिकविधानं च यो जानाति विनिश्चितम् ॥
अलुब्धः सावधानश्च रागद्वेषविवर्जितः ।
राज्ञा च गणकः कार्यः कोशे राष्ट्रे च धीमता ॥

1 भाज्यो.

आलापो हृदयं चक्षुः दारणं दृष्टिलाघवम् ।
उन्नतो रूपवान् दक्षः प्रियवान् दर्पवर्जितः ॥१२७
ग्राही चित्तस्य सर्वेषां प्रतिहारः प्रशस्यते ।
प्रगल्भो भक्तिमान् दक्षः सर्वभाषाविशारदः ॥
सन्धिविग्रहतत्त्वज्ञो लिपिज्ञोऽक्षरवाचकः ।
सामन्तमण्डलेशानां मान्यकानां विशेषतः ॥
आवाहने विसर्गे च स्थापने [1]चापि शक्तिमान् ।
षाड्गुण्यविधितत्त्वज्ञो देशकालविभागवित् ॥
आयं व्ययं च लोकं च देशोत्पत्तिं च वेत्ति यः ।
अर्थरक्षापरो भृत्यकृत्याकृत्यविवेकवित् ॥ १३१
सन्धिविग्रहयोः कार्ये राज्ञो नयविशारदः ।
सर्वदेशलिपिज्ञाता लेखने कुशलः पटुः ॥ १३२ ॥
अन्वितो वाचिके धीमान् योज्यो राज्ञा स लेखकः।
आयुर्वेदविदश्वानां निमित्तशकुनादिवित् ॥ १३३॥
शिक्षावेदी तुरङ्गाणां भूमिभागविशारदः ।
बलाबलरथाभिज्ञः प्रियवाक् स्थिरदर्शनः ॥१३४॥
कृतविद्यश्च शूरश्च सारथिः पार्थिवोचितः ।
असम्भेद्यश्शुचिर्दक्षः कृतान्नस्य परीक्षकः ॥ १३५

[1] निपुणो भृशं.

सूदानां च विशेषज्ञः सूदाध्यक्षोऽभिधीयते ।
कुलक्रमसमायातास्तुष्टेष्टास्सानुरागिणः ॥ १३६ ॥
कृत्तकेशनखा दान्ताः पराभेद्या नृपे रताः ।
अन्नपानविशेषज्ञाः मांसपाकविशारदाः ॥ १३७ ॥
शाकपाककलादक्षाः पक्कान्नकरणे बुधाः ।
पानव्यञ्जनतत्वज्ञाः खण्डपाकस्य वेदिनः ॥१३८॥
क्षीरप्रकारबोद्धारः सूदाः कार्या महीभुजा ।
नराणां च गजानां च वाजिनां च गवामपि ॥
मृगाणां च खगानां च ये जानन्ति चिकित्सितम् ।
परम्परागतास्सम्यगष्टाङ्गे तु चिकित्सिते ॥१४०॥
शास्त्रकर्मकलादक्षाः मन्त्रतन्त्रे च कोविदाः ।
देहे च शीर्ष्णि फाले च विषे शल्ये ग्रहेऽपि च ॥
वृष्ये रसायने चैव कुशला भिषजोऽष्टसु ।
रोगनामनिदानं च रुजं जानन्ति तत्वतः ॥१४२
औषधं रूपनामभ्यां जानन्तो भिषजो वराः ।
वमौ विरेचने नस्ये वस्तौ शास्त्रक्रियास्वपि ॥
शस्यन्ते भिषजस्सम्यक् निष्णाताः पञ्चकर्मसु ।
यत्किञ्चिदौषधैस्साध्यं शरीरेषु हिताहितम् ॥१४४
सम्यग्विदान्ति ये वैद्या नृपयोग्या भवन्ति ते ।

कृच्छ्रसाध्यमसाध्यं वा जाड्यं जानाति तत्वतः ॥
देशं कालं वयोऽवस्थां प्रकृतिं सात्म्यमेवच ।
असाध्याः परक्रियाणां आत्मस्वामिहिते रताः ॥
धर्मज्ञा दृढचित्ताश्च वैद्याः कार्या महीभुजा ।
विरूपो लोभहीनश्च सावधानो जितेन्द्रियः ॥१४७
इङ्गिताकारकुशलः शुद्धान्ताध्यक्ष इष्यते ।
अर्थकामोपधाशुद्धाः पुरुषाः कृतबुद्धयः ॥ १४८ ॥
अन्तःपुरेक्षकाः कार्या नृपेण शुचयोऽभयाः ।
धर्मज्ञाश्शुचयो धीराः प्रभुभक्ता जितेन्द्रियाः ॥
कार्या राज्ञा कुमाराणामध्यक्षाः सुपरीक्षिताः ।
कर्मस्वन्येषु सर्वेषु दक्षाश्च शुचयस्तथा ॥ १५० ॥
शूराश्च बुद्धिमन्तश्च शस्त्रशास्त्रकलाविदः ।
योगक्षेमसुखार्थाय दुष्टसंयमनाय च ॥ १५१ ॥
आत्मनश्च विनोदाय राज्ञां योज्या यथार्हतः ।
वर्धितो भूगुणैर्देशो देशवृद्धिर्नृपर्धये ॥ १५२ ॥
भूमिं गुणवतीं तस्मादावसेद्भूतये नृपः ।
सर्वसस्यवती सेव्या खनिद्रविणगर्भिणी॥ १५३ ॥
वस्तव्या बहुपानीया पुण्यवद्भिर्जनैर्युता ।
स्तम्बेरमवनोपेता बहुधान्य[1] सुशोभिता ॥ १५४ ॥

[1] बहूद्यान.

भूर्नदीमातृका शस्ता सर्वदा धरणीभुजः ।
ईदृग्भूमियुतं राष्ट्रं महापत्तनभूषितम् ॥१५५॥
पालनाद्वर्धयेद्राजा स्वकोशस्याभिवृद्धये ।
स्वराष्ट्रं पालयेद्राजा प्रजाः पुत्रानिवौरसान् ॥
चोरेभ्यो मान्यकेभ्यश्च तथैवार्थाधिकारितः ।
चोरैस्साहसिकैश्चाढ्यैः दुराचारैस्तथा परैः ॥१५७॥
विशेषेण च कायस्थैः पीडिताः पालयेत्प्रजाः ।
स्वराष्ट्रं यो नृपो मोहात् पीडयेदनवेक्षया ॥१५८
राज्यात्स च्यवते शीघ्रं प्राणेभ्यः सह बन्धुभिः ।
यथैव प्राणिनां प्राणा हीयन्ते देहपीडनात् ॥१५९
तथैव भूभुजां प्राणा हीयन्ते देशपीडनात् ।
एकग्रामप्रभुं कुर्यात् दशग्रामप्रभुं तथा ॥१६०॥
ग्रामाणां विंशतेः कुर्यात्प्रभुं शतसहस्रयोः ।
ग्रामदोषं समुत्पन्नमशक्तश्शासितुं यदि ॥१६१॥
दशग्रामेशितुः शंसेद्दशेशो विंशतीश्वरे ।
विंशतीशः शतेशाय तत्सर्वं विनिवेदयेत् ॥१६२॥
ब्रूयाद्ग्रामशतस्वामी सहस्रस्वामिनेऽखिलम् ।
उत्पन्नांस्तु तथा दोषान् ग्रामाधीशे निवेदितान् ॥
ज्ञात्वा तत्रास्थिताः सर्वे कुर्युस्तेषां प्रतिक्रियाम् ।

पञ्चाशत्तम आदेयो भागः पशुहिरण्ययोः ॥१६४॥
अष्टमो द्वादशो वाऽपि षष्ठो वा धान्यतो नृपैः ।
फलक्षेत्रानुरूपेण गृह्णीयात्तत्करं नृपः ॥१६५॥
स्वीकुर्यादथ षड्भागं पण्यानां पूगसर्पिषाम् ।
रसगन्धौषधीनां च मूलपुष्पफलस्य च ॥१६६॥
तृणानां शाकपत्राणां कर्मणां चर्मणामपि ।
मृत्तिकाकृतभाण्डानां भाण्डस्याश्मभवस्य च ॥
आपत्स्थितोऽप्याददीत श्रोत्रियान्न करं नृपः ।
भूप्रदेशमकृष्टं तु गवां चाराय कल्पयेत् ॥१६८॥
देवोद्यानं सुप्रतिष्ठं मुनिभ्यो वितरेन्नृपः ।
अग[1]सङ्घातसम्पन्नं क्रूरसत्त्वैर्विवर्जितम् ॥१६९॥
वनमात्मविहारार्थं पालयेत्पुरपार्श्वगम् ।
प्रत्यन्तदेशसम्भूतं वनं गिरिदरीयुतम् ॥१७०॥
सर्वेषां गृहकॢप्त्यर्थं पार्थिवः प्रतिपादयेत् ।
फलैर्मूलैस्तृणैः काष्ठैः शाकैस्तत्रोत्थितैर्नरः ॥१७१
जीवेत यस्ततो ग्राह्यो दशमोंऽशो महीभुजा ।
द्विपजन्मवनं श्रेष्ठं वर्तमानगजं च यत् ॥१७२॥
अटवीवर्तिभिर्लोकै रक्षणीयं क्षमाभुजा ।

---

[1] मृग॰

गङ्गासागरहेमाद्रिप्रयागाणां च मध्यतः ॥ १७३ ॥
वनं प्राच्यमिति प्रोक्तं लोहिताब्धिश्च पश्चिमे ।
त्रिपुर्यां कोसलादौ च चेदिकारूशकं वनम् ॥
श्रीक्षेत्रं गौडवङ्गालमाङ्गिरेयं वनं स्मृतम् ।
विन्ध्याद्रिचित्रकूटेन्द्रकलिङ्गद्राविडाश्रितम् ॥१७५॥
वनं कालिङ्गकं नाम समुद्रावधि कीर्त्यते ।
श्रीशैले वेदशैले च मलयाद्रौ तथैव च ॥ १७६॥
वनं दशार्णवं नाम करिणां जन्मकारणम् ।
सह्याद्रिभृगुकच्छान्तमपरान्तं वनं स्मृतम् ॥ १७७
द्वारवत्यामवन्त्यां च सौराष्ट्रं वनमुच्यते ।
कालञ्जरे कुरुक्षेत्रे सिन्धुसागरसङ्गमे ॥ १७८ ॥
वनं पञ्चनदं प्रोक्तं हिमालयकृतावधि ।
कालिङ्गचेदिकारूशं दाशार्णं च वनं परम् ॥ १७९
आङ्गिरेयं तथा प्राच्यं मध्यमं वनमिष्यते ।
अपरान्तं पञ्चनदं सौराष्ट्रं चाधमं वनम् ॥ १८० ॥
एवमष्टौ वनान्याहुर्गजानां जन्मनः पदम् ।
घ्नन्ति ये करिणः पापा घातयेत्तान् महीपतिः ॥
दैवान्मृतेषु नागेषु तेषां दन्तान् समाहरेत् ।
करेणु[1]मूत्रशकृता लिप्ताङ्गैरटवीचरैः ॥१८२॥

---

[1] करिणो

अरुष्करदलच्छन्नैः जानीयादिभयूथकम् ।
पदप्रचारैर्लण्डैश्च तदाघातैर्हतद्रुमैः ॥१८३॥
बुध्येत शयनस्थानैः गजांस्तद्विहृतैरपि ।
वारिकर्मयुतः पादः पाशजालैस्समन्वितः ॥१८४
करिणीतुरगारूढैर्यन्त्रिभिर्बहुभिर्वृतः ।
समादिष्टः क्षितीशेन करिलक्ष्मविचक्षणः ॥१८५॥
द्विरदांश्चारयेद्ग्रीष्मे यत्नतो लक्षणान्वितान् ।
धारयेत्त्रिविधैर्बन्धैर्द्विपानामधिपादिभिः ॥१८६॥
पार्थिवेन विधातव्यं पुरुषैर्बन्धवेदिभिः ।
वशा[1] बन्धो वारिबन्धो बन्धश्चानुगतोऽपरः ॥१८७
उत्तमस्त्रिप्रकारोऽपि बन्धः करटिनामयम् ।
आपातश्चावपातश्च द्वौ बन्धौ निन्दितौ मतौ ॥
विनश्यन्ति गजास्ताभ्यां तस्मात्तौ परिवर्जयेत् ।
चारस्थानं समालोक्य घासं हृद्यं ततः क्षिपेत् ॥
सल्लकीकदलीदण्डानिक्षुकाण्डान् सुधासमान् ।
नलिनीकन्दकान्मृष्टान् नवपिप्पलपल्लवान् ॥१९०
वैणवं हरितं पत्रं तथैवान्यद्गजाप्रियम् ।
द्विपयूथं समागच्छेदार्द्रग्रासस्य लम्पटम् ॥१९१॥

---

[1] वंश.

प्रत्यहं दृश्यते तत्र तदा मार्गो निरुध्यते ।
क्रोशमात्रायतां भूमिं विस्तारेण च तत्समाम् ॥
वृक्षैः परिखया वाऽपि समन्तात्परिवेष्टयेत् ।
द्वारं तत्र प्रकुर्वीत निवर्तनमहीमितम् ॥१९३॥
कुञ्जराणां प्रवेशार्थं वारिबन्धविचक्षणः ।
प्रविष्टान् द्विरदांस्तत्र सम्यगालोक्य बुद्धिमान् ॥
वारिद्वारं निरुन्धीत वारिवृक्षैस्तिरस्कृतैः ।
अन्तस्स्थान् बन्धयेन्नागान् सर्वलक्षणसंयुतान् ॥
ईदृग्बन्धस्तु यो बन्धो वारिबन्धस्स उच्यते ।
सप्ताष्टौ वा वशा वश्या महाकाया महागजाः[1] ॥
आरूढाः पत्रसंछान्नाः पाशहस्ताश्च हस्तिपाः ।
करिणीनां करे पाशान् हस्तिबन्धाय दापयेत् ॥
पायोरधश्शनैर्गच्छेद्गजानामान्तिकं बुधः ।
घटायित्वा वशां नागैर्बध्नीयात्तत्र कुञ्जरान् ॥१९८॥
एष बन्धस्समाख्यातो वशाबन्धसमाह्वयः ।
वीक्ष्य पारर्धिकैर्यत्नान्निद्रितं द्विपयूथकम् ॥१९९॥
बहुभिः पाशहस्तैश्च कूर्चहस्तैः समावृतः ।
शृङ्गहस्तैस्तथा कैश्चिद्दारुहस्तैश्च कैश्चन ॥२००॥

[1] जवाः.

वाद्यकैः विविधैस्सार्धं गच्छेन्मातङ्गबन्धकः ।
अश्वारूढैर्गजारूढैर्वृषारूढैश्च पत्तिभिः ॥ २०१ ॥
सङ्गतो गजबन्धार्थं गच्छेद्राज्ञा नियोजितः ।
तोयस्थानेषु सर्वेषु समीपस्थेषु शाखिषु ॥ २०२ ॥
आरोपयेद्बहून् भृत्यान् तूर्यहस्तान् विचक्षणान् ।
निद्रावश्यं समापन्नं यत्र यूथं व्यवस्थितम् ॥ २०३
प्रातः काले शनैर्गच्छेन्निदाघे समुपस्थिते ।
सदा गच्छेदधोभागे निवार्य जननिस्स्वनम् ॥
सहसा वादयेत्तूर्यं काहलारवसंयुतम् ।
उत्थाय चकितं वेगात् गजयूथं विनिद्रितम् ॥
संभ्रान्तमानसं भीतं पलायनपरं भवेत् ।
ततस्तदनुगच्छेयुर्वारिबन्धविशारदाः ॥ २०६ ॥
येन मार्गेण संत्रस्तं गतं यूथं वनान्तरे ।
यूथं विहाय यो गच्छेत् भयसंत्रस्तमानसः ॥
तं नागमनुगच्छेयुः पाशकूर्चकधारिणः ।
पिपासितः परिश्रान्तस्तोयान्तिकमुपागतः ॥ २०८
श्रुत्वा तूर्यकृतं नादमन्यतः प्रपलायते ।
शुष्के लालाजलेऽत्यर्थं गजे च जडतां गते ॥
तथा करे च पुच्छे च निश्चले कर्णपल्लवे ।

ततो वेगयुता वश्या वशाश्चाधोरणेरिताः ॥ २१०
शान्तं द्विपं समागत्य वेष्टयन्ति समन्ततः ।
ततः पाशधरा दक्षा वशागात्रतिरोहिताः ॥ २११
निबध्नन्ति नराश्शूराः तं गात्रपिहिता द्विपम् ।
कक्षभागे च कण्ठे च निगलैश्चर्मनिर्मितैः॥ २१२
समीपस्थस्य वृक्षस्य स्कन्धे बध्नन्ति सिन्धुरम् ।
अनेन विधिना यत्तु क्रियते गजबन्धनम् ॥ २१३
[1]स बन्धोऽनुगतो ज्ञेयो बन्धविद्यासु कोविदैः ।
नालिकेरफलोद्भूतवल्ककल्पितपाशकम् ॥ २१४ ॥
षष्टिहस्तायतं स्थौल्ये प्रकोष्ठसमतां गतम् ।
तस्यार्धं निक्षिपेद्गर्ते पूरयेच्च धृढं मृदा ॥ २१५ ॥
शेषार्धं पाशवत्कुर्यात् गजग्रीवाङ्घ्रिरोधकम् ।
तेन पाशेन यो बद्धः स भृशं पीडितो भवेत् ॥
प्रमादोऽपि भवेत्क्वापि क्वापि जीवन्ति कुञ्जराः ।
आपाताख्यस्समाख्यातो बन्धोऽयं हस्तिबन्धकैः ॥
निन्दितश्च भवत्येष सद्भिस्संशयिताऽपि च ।
चतुर्हस्तामितं खातं विस्तरेण करद्वयम् ॥ २१८ ॥
पञ्चबाहुप्रमाणेन दीर्घं कुर्वीत बुद्धिमान् ।

[1] स बन्धस्तु गजो ज्ञेयो.

गोपनीयं प्रयत्नेन यष्टिभिस्तृणपल्लवैः ॥ २१९ ॥
यस्तत्र निपतेन्नागो विघ्नं तस्यापि संभवेत् ।
खञ्जो वा जायते पादैः वक्षोवाऽस्य प्रभज्यते ॥
दन्तैर्वियुज्यते वाऽपि कोऽपि जीवति वा न वा ।
बन्धोऽयमवपाताख्यस्तेनात्यर्थं विगर्हितः ॥२२१
यस्मान्नागाः प्रणश्यन्ति तेनैनं वर्जयेद्बुधः ।
प्रबुध्य कुञ्जरान् राजा तेषां लक्षणमुत्तमम् ॥
अनुक्रमांशकं[1] सत्वं कुलं सम्यग्विचारयेत् ।
सप्तारत्निसमुत्सेधो नवारत्न्यायतश्च यः ॥ २२३ ॥
दशारत्निपरीणाहः स गजो मानतश्शुभः ।
अरत्निमात्रेणाधिक्यादरालः परिकीर्तितः ॥२२४॥
अत्यरालो द्वयाधिक्यान्निन्द्यौ मानाधिकाविमौ ।
अरत्निमात्रहीनो यः स मध्यो मानतो गजः ॥
अरत्निद्वयहीनस्तु कनिष्ठः परिकीर्तितः ।
कनिष्ठादपि यो हीनो वामनस्स निगद्यते ॥२२६
वामनादपि यो हीनः कुब्जौ निन्द्यौ गजाविमौ ॥
पञ्चोन्नतिस्सप्त मृगस्य दैर्घ्यं
अष्टौ च हस्ताः परिणाहमानम् ।

1 अनूकमंशकं.

एकद्विवृद्धाविह भद्रमन्द्रौ
स कर्णनागो नियतप्रमाणः ॥ २२७ ॥
सुस्निग्धौ रदनौ वृत्तौ दक्षिणश्च समुन्नतः ।
अकृष्णं तालु ताम्रं च दशाष्टौ नखराश्शुभाः ॥
आपाण्डु मेहनं शस्तं वालयुक्तश्च वालधिः ।
अच्छिद्रौ विस्तृतौ कर्णौ मधुपिङ्गे विलोचने ॥
बृंहितं मेघगम्भीरं लोहितं पुष्करं परम् ।
अङ्गुली च सुदीर्घा स्यात् गौरश्यामा तनोश्छविः ।
शुभलक्षणमेतत्स्याद्गजानां जयकारणम् ।
तस्माल्लक्षणसंयुक्ता गजा ग्राह्या महीभुजा ॥ २३१
अतो यदन्यत्तत्सर्वं विरूपं विकृतं च यत् ।
न्यूनाधिकं च यद्रूपं तत्सर्वमशुभं विदुः ॥ २३२ ॥
हीनलक्षणसंयुक्ता गजास्त्याज्या महीभुजा ।
दुर्भिक्षशोकभयदा लोचनोद्वेगकारिणः ॥ २३३ ॥
गतिचेष्टास्वरोऽन्यस्य सत्वस्यानुकरोति यः ।
अनूकमिति तज्ज्ञेयं गजचेष्टितकोविदैः ॥ २३४ ॥
शुभानां प्राणिनां चेष्टा शुभानूकं वरं हि तत् ।
निन्दितानां तथा चेष्टामनूकं निन्दितं विदुः ॥
सुव्यक्तबिन्दवो यस्य गौरवर्णा मनोहराः ।

लोहितौ नेत्रयोः प्रान्तौ स्निग्धौ च बलिनौ रदौ॥
एवं लक्षणसंयुक्तो गजो ब्रह्मांशको मतः।
पूजार्होऽसौ नरेन्द्राणां विजयारोग्यवर्धनः॥२३७
कक्षभागे तथा कर्णे[1] यस्समः पृथुलासनः।
मुखे कोकनदच्छायो युग्मरोमविराजितः॥२३८॥
बहुकालमदश्शूरो मेघनादेन हृष्यति।
प्राजापत्यांशको नागः प्रजावृद्धिं करोत्यसौ॥
बिन्दवो वलिरेखा वा दृश्यन्ते यत्र चर्मणि[2]।
स्वस्तिकैर्वर्धमानाद्यैर्नन्द्यावर्तैश्च सन्निभाः॥२४०
रक्तोत्पलसमे नेत्रे स स्यादिन्द्रांशको गजः।
समरे विजयं दद्यात्परभूपालसम्पदः॥२४१॥
ताम्रावोष्ठौ तथा जिह्वा धात्रीफलसमद्युतिः।
नयने रदनौ यस्य कुसुम्भोदरसन्निभौ॥२४२॥
धनदांशसमुद्भूतो धनरत्नसमृद्धिकृत्।
नृपाणां भवने तिष्ठन् पूजितः कुञ्जरोत्तमः॥२४३
कृष्णमेघनिभो वर्णो स्त्यानसर्पिर्मदग्रहः।
आसने सुभगो मूर्ध्नि गम्भीरघनगर्जितः॥२४४॥
स्रवति प्रचुरं दानं वरुणांशकसंम्भवः।

[1] कण्ठे. [2] वर्ष्मणि.

आहवे रिपुसंहारी निजभर्तुर्जयप्रदः ॥ २४५ ॥
त्रिवलीमण्डितः कर्णे[1] क्षौद्रपिङ्गललाञ्छनः ।
केतकच्छायदशनः पृथुरक्ताग्रपल्लवः ॥ २४६ ॥
बिन्दुमान् पाण्डुवर्णश्च शशाङ्कांशसमुद्भवः ।
सङ्गरप्राङ्गणे राज्ञां गजोऽयं विजयप्रदः ॥२४७॥
अग्निज्वालासदृग्रोमा केशवालेषु पिङ्गलः ।
पिङ्गाक्षः पिङ्गपुच्छश्च[2] पिङ्गपुष्करशोभितः ॥२४८
अग्न्यंशकसमुद्भूतः साक्षाद्वह्निरिवाहवे ।
भस्मसात्कुरुते सैन्यमशेषं द्विषतां सदा ॥ २४९ ॥
कृष्णा यस्य तनुच्छाया गौरमक्ष्णोश्च कर्णयोः[3]
नखा दीपशिखाभासा निबिडा मांसला तनुः ॥
अग्निमारुतयोरंशात्सञ्जातः कोपनो जवी ।
तस्य दोषोऽयमेकस्स्यादङ्कुशं यन्न मन्यते ॥ २५१
दोषाभासो गुणस्तस्य सञ्जाते समरोत्सवे ।
प्रचण्डत्वाद्भयं दत्ते रिपुसैन्येष्वयं गजः ॥ २५२ ॥
दन्तमध्यात्समारभ्य क्रमशो हीयते करः ।
ताम्रपुष्करपर्यन्तः सुप्रमाणायताङ्गुलिः ॥ २५३ ॥
सुगन्धशीकराकारो दीर्घनिश्श्वाससन्ततिः ।

1 कण्ठे. 2 तालुश्च. 3 गौरी चाक्ष्णोश्च कर्णयोः ।

घनवद्बृंहितध्वानो वलिहीनं वपुर्दृढम् ॥ २५४ ॥
मृदुसूक्ष्माञ्जनश्यामं सर्वाङ्गगतनूरुहम् ।
श्रीगर्भपुष्करच्छाया कान्तिस्सर्वाङ्गसाङ्गिनी ॥२५५
सुवर्णकेतकद्योतौ रदनौ वर्तुलौ दृढौ ।
आयतः प्रोन्नतो मध्ये निम्नस्स्यात्पादकुम्भकः ॥
आयतो रोमवानोष्ठः करौ च समौ शुभौ ।
मुखमण्डलमत्यर्थं रम्यं दृष्टिमनोहरम् ॥ २५७।
पुष्पसारसमे नेत्रे पक्ष्मले प्रान्तलोहिते ।
बलिनौ मृदुविस्तीर्णौ समौ स्वेद[1]विवर्जितौ ॥
सिराविरहितौ कर्णौ तालदुन्दुभिनिस्वनौ ।
वर्तुलावुन्नतौ कुम्भौ समौ लक्ष्मीकुचोपमौ ॥२५९
रम्यौ पद[2]तलन्यासौ विपुलं चासनं समम् ।
ऋजुर्ह्रस्वो गलोद्देशो दीर्घावंसौ च मांसलौ ॥
बाहू दीर्घौ वज्र[3]पीनावधोधः क्रमशः कृशौ ।
कूर्माकारतलालग्नाः स्निग्धार्धेन्दुनिभा नखाः ॥
विंशतिर्वा दशाष्टौ वा शोभनाः परिकीर्तिताः ।
उरो विशालहृद्बन्धमुदरं प्रतनू कुचौ ॥ २६२ ॥
अस्रस्तं मेहनं शस्तं वराहजघनं परम् ।

[1] छेद. [2] फाल. [3] ऋजू.

सज्यचापनिभावंसौ वालधिश्चायतः कृशः ॥२६३
शङ्खचक्रगदाकारा बिन्दवो वलयोऽथवा ।
दृश्यन्ते यस्य नागस्य स विष्णवंशकसंभवः ॥
अभिषेकोचितः पूज्यस्सर्वकार्यप्रसाधकः ।
पुनाति रत्नदो राष्ट्रं धनधान्यसमृद्धिकृत् ॥ २६५॥
रुच्या[1] हारस्तो नित्यं वलिरेखाविवर्जितः ।
अनामयस्स्थिरश्शूरो देवसत्वो भवेद्गजः ॥ २६६
मेधावी च क्रियादक्षः कामुकश्चपलः पटुः ।
स्तम्भप्रेक्षणके सक्तो गजो गन्धर्वसत्वकः ॥ २६७
जलावगाहने सक्तः कोपनः कातरो भृशम् ।
भोजने लम्पटो नित्यं कुञ्जरो विप्रसत्वजः ॥
शान्त[2] श्शूरस्सदोत्साहो बली युद्धविशारदः ।
अभीरुराहवे धीरः क्षत्रसत्वो मतङ्गजः ॥ २६९ ॥
चत्वार्येतानि सत्वानि सात्विकानि भवन्ति हि ।
सात्विकः फलसंयुक्तः श्लेष्मलस्तिग्मदीधितिः ॥
साश्विन्वन् कवलं वक्त्रे दन्तसन्धौ तथा करे ।
प्राज्ञावान् दीर्घरोषश्च वैश्यसत्वो भवेद्द्विपः ॥२७१
दण्डसाध्यस्सदा नीचो मूर्खश्च मलिनाशयः[3] ।

[1] शुच्या. [2] दान्त [3] शनः.

आहवे नितरां शूरः शूद्रसत्वो भवेत्करी ॥२७२॥
विश्वासघातुकः क्रूरो गमने कुटिलक्रमः ।
न भुङ्क्ते च मदेऽत्यर्थं सर्पसत्वः करी मतः ॥२७३
एतानि त्रीणि सत्वानि राजसानि भवन्ति हि ।
राजसः पित्तभूयिष्ठः पित्तलस्तप्तविग्रहः ॥ २७४ ॥
उन्मार्गेण सदा याति विवेकरहितो भृशम् ।
उन्मत्त इव चेष्टायां द्विपः पैशाचसत्वजः ॥ २७५
निशायां चरति स्वैरं मनुष्यस्य[1] वधे रतः ।
वेगवान् सवलो हस्ती रक्षस्सत्वसमुद्भवः ॥२७६॥
एते द्वे तामसे सत्वे तामसो वाततो भृशम् ।
सवातो दृश्यते रूक्षो निद्रालुश्चपलो गजः ॥२७७
जायते पाण्डुरो यस्तु केशे रोमणि वालधौ ।
वर्णे च नेत्रयोश्चैव स स्यादैरावतान्वयः ॥२७८॥
अध्वक्षमस्सारसदृक् कोपी युद्धविशारदः ।
पुष्पलोमा स्थूलशीर्षः पुण्डरीकान्वयो गजः ॥
श्यामवर्णस्सुदेहश्च कृष्णकेशः कृशोदरः ।
स्थूल इन्द्रधनुर्वंशः[2] पुष्पदन्तान्वयः करी ॥२८०
अग्निवर्णस्सुवर्णाभो[3] वेगवान् जललम्पटः ।

1 ष्याणां· 2 धनुस्तनु·· 3 सुवर्णाक्षो·

आयतो विस्तृतोऽत्यर्थं वामनो वामनान्वयः[1] ॥
प्रचण्डः कुमुदच्छायः कपोतनयनच्छविः ।
मेधावी तनुरोमा च सुप्रतीकान्वयो गजः ॥२८२
स्निग्धवालधिदन्तो यः श्वेतोर्ध्वस्वकरान्वितः[2] ।
उन्नतस्थूलजघनस्सोऽञ्जनान्वयसम्भवः ॥२८३॥
रौद्रः पृथुतरो[3] ह्रस्वश्रोत्रहस्तसमन्वितः ।
पुच्छकेऽल्पस्स्थूलकटस्सार्वभौमान्वयो गजः ॥
कुमुदाभस्स्थूलतनुः स्निग्धलोहितलोचनः ।
कृष्णविस्तीर्णहस्ताग्रः कुञ्जरः कुमुदान्वयः ॥
एवं परीक्ष्य यत्नेन लक्षयेदु[4]त्तमान्गजान् ।
स्वीकुर्यादवनीपालो विपरीतान् परित्यजेत् ॥
स्वीकृतानुत्तमान्वर्थान्[5] सिन्धुरान् शिक्षयेन्नृपः ।
अथर्ववेदविधिना वाक्पदाङ्कुशभाङ्गिभिः ॥२८७॥
शुभे दिने शुभे क्षेत्रे सौम्याशासम्मुखं गजम् ।
प्रातः कृत्वा द्विजश्रेष्ठान् मन्त्रसामानि वाचयेत् ॥
दधिदूर्वाक्षतैः पुष्पैश्चन्दनैः कुङ्कुमान्वितैः ।
अर्चयेत्सिन्धुरं राजा सम्यग्दिनचतुष्टयम् ॥ २८९

1 वामनान्वयजो द्विपः· 2 चेतोहरकरान्वितः· 3 शिराः. 4 लक्षणैरु·
5 स्वीकृताननुबद्धांस्तान्·

ततश्चास्य स्मरेज्जन्म सामजन्मा मतङ्गजः ।
अभिनन्देद्गृहावासं त्यजेत्कान्तारजं सुखम् ॥
उत्तमेऽहनि नागानामपराणि प्रबन्धयेत् ।
निगलैश्चर्मनिर्माणैर्दृढं गात्रं यथासुखम् ॥२९१॥
पुरोभागे त्रयस्स्थाप्याः कण्ठदेशे नरावुभौ ।
पश्चाद्भागे तथा द्वौ च सप्त आधोरणाः क्रमात् ॥
पक्षयोरुभयोस्स्थाप्यौ करिण्यावतिशिक्षिते ।
आहारैस्तैस्ततस्सर्वैर्नियम्योऽसौ मतङ्गजः ॥२९३
शिक्षयेच्च ततो भाषां कर्मज्ञानां च[1] दन्तिनाम् ।
अनालस्येन निर्बन्धात्प्रत्यहं गजपोषकः ॥२९४॥
वही वहीति[2] सञ्चारे स्थितावप्यवसारणे ।
हेठ हेडिति वक्तव्यं गजशिक्षाविशारदैः ॥२९५॥
पार्श्वद्वयावसारे च 'फलेति' विनियोजयेत् ।
उपवेशे प्रयोक्तव्यं "चिश्चीति" वचनं स्फुटम् ॥
'गग्गुलु' स्थापने वाच्यं गजशिक्षाविशारदैः ।
द्विर्द्विर्वाक्यं "जहाचेति" "पाडिहारेति" शिक्षकैः॥
"भिरिहेति" प्रयोज्यं द्विः करस्योत्क्षेपणं प्रति ।
स्तम्भादिलगने वाच्यं "भिजभीजेति" शिक्षकैः॥

[1] ज्ञानाय·

[2] "एह्येहीति च" "हरि एहि च".

गात्रस्योत्क्षेपणे वाच्यं "भल्लभल्लेति" यन्त्रिभिः ।
प्रवरानमने 'किःकित्' भणनीयं विचक्षणैः ॥
याचनार्थं महामात्रो "येये"[1] शब्दमुदीरयेत् ।
करप्रधारणे शिक्ष्यो "देदेहीति"[2] द्विरुक्तितः ॥
कबलग्रहणे दिर्दिर्यवग्रासो निगीर्यते ।
परित्यागे प्रयोक्तव्या "बुद्धबुद्धेति"[3] भारती ॥
"मा मा" निवारणे वाच्यो गजशिक्षाविशारदैः ।
"हिगे हीगेति" वक्तव्यो भूमौ दन्ताभिघातने ॥
बहिर्दण्डाभिघाते तु "द्रुद्रु" वाक्यं प्रयोजयेत् ।
शनैस्सञ्चारणे बोध्यो "लेचलेचेति" कोविदैः ॥
आह्वाने कुञ्जरो ज्ञाप्यः "छछभीभेति" यन्त्रिभिः।
कस्यापि ग्रहणे बोध्यो "घेघे" शब्दैर्मतङ्गजः॥
ईदृशीं प्रथमं भाषां शिक्षयेत मतङ्गजम् ।
भाषाभिज्ञं मतं तं तु[4] पश्चात्कर्मणि योजयेत् ॥
पुरस्स्थितेन शुण्डायामारतोदश्शनैश्शनैः ।
कर्तव्यस्तद्भयान्नागः करं सङ्कोच्य तिष्ठति ॥ ३०६
आराभ्यां मुखपार्श्वस्थौ तुदतो हनुयुग्मकम् ।
उन्नमय्य मुखं नागस्स्तब्धपादोऽवतिष्ठते ॥३०७॥

---

1 "दे दे". 2 "हे है इति". 3 "चुरचोरेति". 4 गजं जात.

ततः कर्णसमीपस्थे कर्णमूले प्रतोदनम् ।
कुरुतस्तद्भयाद्दन्ती कर्णावुत्थाप्य तिष्ठति ॥३०८॥
आगघातभयत्रस्तो यदि पश्चाद्व्रजेद्गजः ।
आराभ्यां तोदनं तस्य कुर्वाते पश्चिमस्थितौ ॥
ततस्स्थानकसंसिद्धसौष्ठवं लभते गजः ।
शिक्षयेत्तं ततो नागं यन्त्रितं सर्वकर्मसु ॥ ३१०॥
ततः कर्मकरो दक्षः पाणिभ्यां धृतभस्त्रिकः ।
स्थानके तिष्ठतस्तस्य प्रविश्य करिणोऽग्रतः॥३११
आस्फाल्य भास्त्रिकां पूर्वं दर्शयेदेकभास्त्रिकाम् ।
हुहुकारैर्द्विपं यत्नाद्भास्त्रिकाहननेन नुदेत् ॥ ३१२ ॥
करं कुण्डालितं नागः प्रसार्य धृतभास्त्रिकम् ।
प्रहरेद्बाह्यहस्तेन प्रेरितस्सान्निषादिना ॥ ३१३ ॥
हस्तमुत्क्षिप्य नागेन्द्रं यन्ता वाक्यैस्सुशिक्षितैः ।
अतः करेण भस्त्रायां ताडनं कारयेद्दृढम् ॥३१४॥
पार्श्वद्वयसमायुक्तौ ततः कर्मकरावुभौ ।
भस्त्रिकापाणिकौ नागमात्मानं प्रतिकर्षतः॥३१५
बाह्यहस्तेन तत्रैकां भस्त्रिकां ताडयेद्गजः ।
अन्तर्हस्तेन चाप्यन्यां प्रहरेत पुनःपुनः ॥ ३१६ ॥
क्रमेणानेन तिष्ठन्ति भस्त्रिकापाणयस्त्रयः ।

चत्वारः पञ्च वा दक्षाः दर्शयन्तस्स्वभास्त्रिकाः ॥
अन्तर्हस्तेन तत्रैकां बाह्यहस्तेन चापराम् ।
प्रहारयेत्तमारूढो भस्त्रिकास्ता यथाक्रमम् ॥३१८॥
ततः प्रहरणे दक्षो भवेन्मातङ्गकुञ्जरः ।
पश्चात्प्रहरतेऽङ्गानि नरोष्ट्रगजवाजिनाम् ॥ ३१९ ॥
ततोऽङ्गधारणे शिक्ष्यः तज्ज्ञैः कर्मकरैः करी ।
घासं चेष्टं गुडं शालिमिक्षुकाण्डमथापि वा ॥३२०
दर्शयित्वा प्रलोभ्यैनं प्रसारितकरं गजम् ।
विवेष्टयेन्निजं गात्रं घासलोभं प्रदर्शयेत् ॥ ३२१ ॥
करेण चेष्टितं गाढं दद्याद्घासं करास्थितम् ।
अल्पाल्पं च करं तस्य स्वयमुद्धृत्य गच्छति ॥
धारणेऽपि गताशङ्कं वारयेत्प्रहरैर्विना ।
स्वाङ्गं च विधृतं यत्नात् वञ्चयेत्परिवर्तनैः ॥३२३॥
ततोऽङ्कुशेन संरुद्धः प्रतोदेन च पीडितः ।
'भिकाभिकेति' संप्रोक्तो धृत्वा कर्मकरो दृढम् ॥
मुखं निक्षिप्य भूभागे पादावाकुञ्च्य तिष्ठति ।
हस्तेन वेष्टयेदङ्गं कर्मकारस्य कुञ्जरः ॥ ३२५ ॥
पश्चाच्चर्मविनिर्माणं प्रतिकूलं नराकृतिम् ।
निक्षिपेदग्रतस्तस्य कुञ्जरस्य वधैषिणः ॥ ३२६ ॥

ततश्शुण्डाभिघातेन दन्ताग्रव्यथनेन च ।
मर्दनेन च गात्राभ्यामपराभ्यां च पेषणैः ।३२७
चूर्णीकरोति तं नागो वधकर्मणि शिक्षितः ।
ततोऽसौ मारयेज्जन्तून् कृतान्त इव शिक्षितः ॥
चतुरश्रं चर्मक्लृप्तं वालुकापूरितं मनाक् ।
दन्ताग्रिमे स्थितं कुर्यात्तल्लाक्षेत्यभिधीयते ॥३२९॥
दन्ताग्रे दर्शयेल्लाक्षां कम्पयेच्च सशब्दकम् ।
निषादिप्रेरितो नागो रदनाभ्यां निहन्ति ताम् ॥
समुन्नतैस्तथा नीचैर्घनैः पार्श्वसमाश्रितैः ।
विविधैः प्रहरैर्लाक्षां दन्तघातेषु शिक्षितः ॥३३१
उन्मुच्य बन्धनं पश्चात्पूर्वावस्थानमास्थितम् ।
सञ्चारयेत्तथा वीध्यामङ्गुष्ठाभ्यां नुदन् गजम् ॥
कम्बलं दर्शयित्वा तु धावयेदनुधावतः ।
पार्श्वाभ्यां वर्तनैः पश्चान्मण्डलेषु प्रचारयेत् ॥
एवं संशिक्षितो नागो वध्यावध्येषु कर्मसु ।
जयत्येकोऽपि सङ्ग्रामे नरवाजिगजान् बहून् ॥
शुभलक्षणसंयुक्ताः कुञ्जरा भद्रजातयः ।
शिक्षितास्सर्वलोकेषु वशीकार्या महीभुजा॥३३५
रजतस्य सुवर्णस्य रत्नानां रक्षयेत् वनीम् ।

तत्संहृतेषु सर्वेषु करं[1] राजा समाहरेत् ॥ ३३६ ॥
द्रव्यं भूमिगतं विद्याद्विविधैर्लक्षणैर्नृपः ।
लक्षणानि प्रवक्ष्यामि निधीनां प्रतिपत्तये ॥३३७॥
वर्षासु शीतकाले च यत्र गोधा निरन्तरम् ।
वृश्चिकः पन्नगो वाऽऽस्ते तत्र भूमौ भवेन्निधिः ॥
दृश्यते खञ्जरीटानां सम्भोगो यत्र भूतले ।
निरिन्धनो ज्वलेद्वह्निः ध्रुवं तत्र भवेन्निधिः ॥३३९
आवर्तो दृश्यते यत्र विना हेतुं जलाशये ।
पङ्कजानि द्विशीर्षाणि तत्र तोये भवेन्निधिः ॥
अप्ररोहस्य वृक्षस्य प्ररोहो यत्र दृश्यते ।
रम्भा कण्टकिनी यत्र भूमौ तत्र भवेन्निधिः ॥
शिखाद्वयसमायुक्तस्तालो यत्र प्रदृश्यते ।
पुष्पस्योपरि पुष्पं वा क्षितौ तत्र भवेन्निधिः ॥
दृष्ट्वाऽर्कं भुवमाघ्राय वृषभो यत्र नर्दति ।
वारं वारं प्रहृष्टात्मा क्षोण्यां तत्र भवेन्निधिः ॥
हस्तद्वयसमुत्सेधो बाष्पो यत्रानिमित्तकः ।
रूढिर्वा लौकिकी यत्र निधिं तत्र खनेन्नृपः ॥
खनिशास्त्रेषु सर्वेषु लक्षणेन निरूप्यते ।

---

1 वरं

तत्रापि वीक्ष्यते तज्ज्ञैः निधिर्विध्युक्तमार्गतः ॥
लक्षणैर्व्यञ्जिते द्रव्ये स्थाननिश्चयहेतवे ।
अस्ति नास्तीति शङ्कायां निर्धृत्यै वर्तिरुच्यते ॥
उलूकस्य वसा कोलतैलं कमलतन्तवः ।
एतैर्विहितया वर्त्या कज्जलं परिकल्पयेत् ॥३४७।
कज्जलेनाञ्जयेत्तेन लोचने प्रयतो नरः ।
करस्थमिव भूमिस्थं निधिं पश्यति निश्चितम् ॥
सितार्कतूलकस्यापि यत्र सूत्रविवेष्टितम् ।
सप्तकृत्वो वराहस्य वसया परिभावितम् ॥३४९॥
कपिलासर्पिषा दीप्तं कज्जलं जनयेद्यदा ।
तत्कज्जलाक्तनयनो निधिं पश्येद्भुवि स्थितम् ॥
हृदयं कृष्णकाकस्य जिह्वां चादाय पेषयेत् ।
अञ्जयेन्मधुना सार्धं नेत्रे पश्येत्ततो निधिम् ॥
रात्रौ कृष्णचतुर्दश्यामुलूकवसयोक्षिताम् ।
पद्मसूत्रकृतां वर्तिं कज्जलार्थं प्रदीपयेत् ॥ ३५२ ॥
तेनाञ्जिताक्षियुगलो निधिं वै स विलोकयेत् ।
शर्वर्यां दृश्यते बाढं निधिर्भूमितलास्थितः ॥३५३॥
कुनटीं गन्धकं तालं शशकस्य च लण्डकम् ।
पद्मसूत्रार्कतूलेन वर्तिमेतैः प्रकल्पयेत् ॥ ३५४ ॥

कपिलासर्पिषा दीप्ता वर्तिर्निधिसमीपगा ।
उत्पतेत्प्रस्फुटे द्रव्ये निपतेत्सा महानिधौ ॥३५५
अर्कशाल्मलिकार्पासतूलकाल्पितन्तुभिः ।
पट्टपङ्कजसूत्रैश्च वेष्टयेच्छिखिनश्शिखाम् ॥३५६॥
महातैलप्रदीप्ता सा निधिस्थाने प्रवेशिता ।
त्रिशिखा जायते सद्यो निपतेद्वा निधिस्थले ॥
एवं ज्ञात्वा निधिस्थानं पुष्पधूपाक्षतैः फलैः ।
यथायोग्यं च बलिभिः पूजयेत्त्रिदिवौकसः ॥३५८
श्रीधरं च श्रिया युक्तमुमया च महेश्वरम् ।
ब्रह्माणं च सरस्वत्या सहितं पूजयेद्बुधः ॥ ३५९ ॥
गणेशं च गणैस्सार्धं तत्स्थानाधिष्ठितं[1] तथा ।
भूतवेताळसहितं क्षेत्रपालं च पूजयेत् ॥ ३६० ॥
धनेशं यक्षसङ्घातपरिवारसमन्वितम् ।
जलस्थाने विशेषेण वरुणं चैव पूजयेत् ॥ ३६१॥
त्रिभिर्वा पञ्चभिर्वाऽपि सप्तभिर्नवभिस्तथा ।
अधिकैर्विषमैर्वाऽपि साधकैः खननोद्यतैः ॥३६२॥
उपोषितैश्शुचीभूतैः शक्तैर्भयविवर्जितैः ।
खनिशास्त्रानुसारेण निजाङ्गकृतरक्षणैः ॥३६३॥

---

1 धिपतिं.

समुद्धरेन्निधिं राजा निजाध्यक्षपुरस्सरम् ।
एवं सिध्यन्ति सर्वाणि धनान्यत्र[1] न संशयः ॥
धनानामीश्वरो राजा ब्रह्मणा परिकल्पितः ।
भूगतानां विशेषेण यतोऽसौ वसुधाधिपः ॥३६५॥
मौक्तिकानां समुत्पत्तिः स्थानेस्थाने महोदधौ ।
तानि स्थानानि संरक्षेदाहरेच्च ततो धनम् ॥३६६
विचित्ररत्नगर्भस्य नानासत्त्वौघजन्मनः ।
शरदभ्रप्रतीकाशतरङ्गोल्लासभासिनः ॥ ३६७ ॥
अमरीकृतगीर्वाणनिवहस्य सुधारसैः ।
बडबाग्निशिखाजालनिह्नुताहिफणामणेः ॥
इन्द्रनीलनिभोत्तुङ्गतरङ्गालिङ्गितं वपुः ।
बिभ्राणस्येन्दिराभर्तुः विस्रम्भस्वापसद्मनः ॥३६९
वज्रपातभयात्तत्र कुलाचलकृतास्थितेः ।
रत्नौघदीप्तिसंमिश्रां फेनप्राप्तिं वितन्वतः ॥३७०॥
सुधासूतिकलादानकृतार्थीकृतशूलिनः ।
[2]उल्लिखद्भिर्जलेभानां बृन्दैः फेनलवोज्ज्वलैः ॥
आकुलस्य गिरेश्शृङ्गैर्मैनाकस्य विराजितैः ।

---

[1] निधानानि.  [2] पातालपर्यन्तसंप्राप्तजलधारिणः । प्रलयविद्रुमलता-सिन्दूरव्रातत्विषः । शङ्खैश्च बडबावह्निभूतिजाम् । इत्याधिकः पाठः.

अनन्तत्वान्महत्वाच्च बिभ्रतो गगनोपमाम् ॥३७२
उद्दामस्फुरितोत्तुङ्गतरङ्गत्रासकारिणः ।
पक्षच्छेदभयायातभूभृद्रक्षाविधायिनः ॥ ३७३ ॥
उपमां वहतस्साक्षात्सोमेश्वरमहीभुजः ।
ऐरावतसुधालक्ष्मीशीतदीधितिजन्मनः ॥
शयितस्य हरेरङ्गभङ्गव्याप्तावियद्दिशः ।
पारिजातं सुधां लक्ष्मीं वारुणीं शीतदीधितिम् ॥
दत्वा त्रिजगतो भावान् संप्राप्तस्य वदान्यताम् ।
वेलापूरेषु सर्वेषु समीपस्थेषु वारिधेः ॥
रक्षां विधाय यत्नेन राज्ञा सम्पदमिच्छता ।
निजवेलातटस्थानां पोतवाहनकर्मणाम् ॥ ३७७॥
पोते प्रत्यागते तस्माद्दशमांशं हरेन्नृपः ।
प्रतीपमारुतानीतपोतानां स्वेच्छया नृपः ॥
स्वीकुर्यात्सकलं द्रव्यं किञ्चिद्दद्याच्च भूपतिः ।
धातुवादप्रयोगैश्च विविधैर्वर्धयेद्धनम् ॥
तारेण[1] साधयेत्स्वर्णं रौप्यं वङ्गेन साधयेत् ।
शुष्कपुष्पपलाशस्य पुष्पं संशोध्य चूर्णयेत् ॥
छागमूत्रेण[2] तच्चूर्णं त्रीन् वारान् परिभावयेत् ।

---

[1] ताम्रेण. [2] दुग्धेन.

"वङ्गषष्ठांशचूर्णेन पिष्टेनैतत् प्रलेपयेत् ॥
पुटपाकेन तद्दग्धं तारं भवति शोभनम् ।
श्वेतब्रह्मतरोः पुष्पं स्वरसेन विभावयेत् ॥३८२॥
तारं द्वात्रिंशतं वारं तेन वङ्गं प्रलेपयेत् ।
पुटपाकेन तद्दग्धं वङ्गं व्रजति तारताम् ॥
मार्दवं कालिमानं च वङ्गं त्यजति निश्चितम् ।
श्वेतब्रह्मतरोर्बीजतैलेन परिभावयेत्" ॥ ३८४ ॥
गन्धकं सप्तकृत्वोऽथ तेन ताम्रदलानि च ।
प्रलिप्तं तत् पुटे दग्धं शुल्बं काञ्चनतां व्रजेत् ॥
दाहच्छेदनिघर्षादिकर्मयोग्यं भवेत्ततः ।
तस्य तैलेन दरदं गन्धकं पारदं तथा ॥
मर्दयेत्खल्वपाषाणे यावत्तत् कल्कतां व्रजेत् ।
लेपयेत्तेन कल्केन वङ्गपत्राणि सर्वतः ॥ ३८७ ॥
दग्ध्वा दग्ध्वा पुनर्लिम्पेद्वारं द्वात्रिंशतं बुधः ।
ततो वङ्गं भवेत्स्वर्णं रजतं दरदादिभिः ॥ ३८८ ॥
व्यवहारक्षमं शुद्धं कर्मयोग्यं भवेच्च तत् ।
निर्यासं शाकवृक्षस्य श्लक्ष्णवस्त्रेण गालयेत् ॥
समूलशिग्रुचूर्णेन निर्याससहितेन च ।

1 " " इत्याधिकः पाठः.

परितस्ताम्रपत्राणि दग्ध्वा दग्ध्वा विलेपयेत् ॥
दाहैः पञ्चभिरेतत्तु काञ्चनं जायते शुभम् ।
फलानि शाक[1] वृक्षस्य पक्वान्यादाय भावयेत् ॥
तद्रसेन रसेनापि मञ्जिष्ठासहितेन च ।
तेन कल्केन पत्राणि शुल्बजानि प्रलेपयेत्॥३१२
दहेच्च पुटपाकेन यावद्द्रवति काञ्चनम् ।
सञ्चूर्ण्य कल्कं शाकीयं तद्रसेन विभावितम् ॥
करवीररसैर्युक्तं तेन पत्रं विलेपितम् ।
ताम्रं सञ्जायते तारं पुटपाकेन ता[2]पितम् ॥३१४
तारोत्तरं भवेत्सम्यक् व्यवहारक्रियोचितम् ।
एवमादिभिरन्यैश्च वादग्रन्थक्रियाक्रमैः ॥ ३१५ ॥
कारयेत्कनकं तारं धनवृद्ध्यै धनाधिपः ।
सुवर्णै रजतै रत्नैर्वस्त्रैराभरणैस्तथा ॥ ३१६ ॥
पूर्णो व्ययसहः कार्यः कोशो नित्यं महीभुजा ।
पुटीकृत्यानले तप्तं यत्स्वर्णं निरुपक्षयम् ॥३१७॥
यत्स्यात् षोडशवर्णाख्यं कोशे स्थाप्यं तदेव हि ।
बालार्कद्युतिसङ्काशं विद्युद्दीप्तिसमप्रभम् ॥३१८॥
शुद्धं भूषणयोग्यं स्यात् त्रिदशानां महीभुजाम् ।

[1] लोक. [2] के प्रता.

कृतं वा निष्करूपेण घनं वा पण्य[1] रूपकम् ॥
भूषणत्वेन वा सिद्धं कोशे तत्तु विधारयेत् ।
धर्मस्यार्थस्य कामस्य साधनं जनरञ्जनम् ॥ ४००
रम्यं सुवर्णं कोशस्थमायुर्लक्ष्मीप्रदं भवेत् ।
धात्वन्तरसमायुक्तमशुद्धं नैव धारयेत् ॥ ४०१ ॥
अशक्तं स्वर्णकार्येषु गृहलक्ष्मीविनाशनम् ।
नागेन मिश्रितं रौप्यं वह्निना परिशोधितम् ॥ ४०२
चन्द्रमण्डलसङ्काशं कोशे स्थाप्यं मनोहरम्[2] ।
यशस्सौभाग्यजनकं श्रेष्ठं पुत्रप्रदायकम् ॥
गृहे विधारितं रौप्यं मलिनं (?) च सुखप्रदम् ।
रत्नानि धारयेत्कोशे शुद्धानि गुणवन्ति च ॥ ४०४
सम्भवं च तथा जातिं गुणं तेषां परीक्ष्य च ।
कृते युगे कलिङ्गेषु कोसले वज्रसम्भवः ॥ ४०५ ॥
हिमालये मतङ्गाद्रौ त्रेतायां कुलिशोद्भवः ।
पौण्ड्रके च सुराष्ट्रे च द्वापरे या च सन्ततिः ॥
वैराकरे च सौवीरे हीररत्नं कलौ युगे[3] ।
गुणाः पञ्च समाख्याताः दोषाः पञ्च प्रकीर्तिताः ॥
छायाश्चतस्रो विज्ञेया वज्राणां रत्नकोविदैः ।

[1] पिण्ड. [2] महीभुजा. [3] कलौ हीरकसम्भवः.

षट्कोणत्वं लघुत्वं च समाष्टदळता तथा ॥१०८
तीक्ष्णाग्रता निर्मलत्वमिमे पञ्च गुणास्स्मृताः ।
मलो बिन्दुस्तथा रेखा त्रासः काकपदं च यत् ॥
एते दोषास्समाख्याताः पञ्च वज्रेषु कोविदैः ।
श्वेता रक्ता तथा पीता कृष्णच्छाया चतुर्विधा ॥
विप्रक्षत्रियवैश्यानां शूद्रजातेर्यथाक्रमम् ।
यज्ञैर्दानैस्तपोभिश्च यदाप्नोति तदाप्नुयात् ॥१११॥
गुणयुक्तस्य वज्रस्य विप्रजातेर्विधारणात् ।
जयः पराक्रमस्तस्य शत्रुनाशश्च जायते ॥ ११२
गुणवत् क्षत्रजातीयं वज्रं वसति यद्गृहे ।
कलाकुशलता द्रव्यं प्रज्ञा क्षेमो यशो भवेत्॥११३
गुणिनः पवित्रस्य वैश्यजातेर्विधारणात् ।
परोपकारता दाक्ष्यं धनधान्यसमृद्धयः ॥ ११४ ॥
गुणयुक्तस्य वज्रस्य शूद्रजातेर्विधारणात् ।
मलं मलिनता ख्याता धारणाद्दंष्ट्रिणो भयम् ॥
कोणे व्याधिभयं प्रोक्तं मध्ये वह्निभयं भवेत् ।
दोषेषु बिन्दुरावर्तः परिवर्तो यवाकृतिः ॥ ११६ ॥
चतुर्धैवं समाख्याता बिन्दवो वज्रसंश्रयाः ।
रक्तोऽत्र वर्तुलो बिन्दुरावर्तः सव्यवर्तनः ॥११७॥

संरक्तः परिवर्तस्तु रक्त एवापसव्यकः ।
बिन्दुरापद्धनं हन्यादावर्तो भयमादिशेत् ॥४१८॥
परिवर्ते भवेद्व्याधिर्यवे तु फलमुच्यते ।
स च रक्तस्तथा पीतः श्वेतश्चेति त्रिधा मतः ॥
रक्तवर्णो यवः ख्यातः गजाश्वस्य विनाशनः ।
यवे पीते कुलस्यान्तो धनमायुस्सिते भवेत् ॥
एवं दोषा गुणाश्चोक्ता यवबिन्दोरशेषतः ।
सव्यवक्रा शुभा रेखा वामवक्रा भयंकरी॥४२१॥
खेदभ्रान्तिकरी छेदः रेखा शस्त्रभयप्रदा ।
पक्षद्वये प्रदृश्या या छेदाभा सा प्रकीर्तिता॥४२२
रेखा बन्धुविनाशाय जायते वज्रसंश्रया[1]।
अङ्कः काकपदाकारो दृश्यते यः पवौ स्थितः ॥
स मृत्युमाविशत्याशु धनं वा सकलं हरेत् ।
भग्नाग्रं भग्नधारं च दलहीनं च वर्तुलम् ॥ ४२४ ॥
कान्तिहीनं च यद्वज्रं दोषाय न गुणाय तत् ।
भिन्नो भ्रान्तिकरस्त्रासः संत्रासं जनयेत् स्फुटम् ॥
एवं दोषा गुणाः प्रोक्ताः वज्राणां सोमभूभुजा ।
कोलाहिकरिमत्स्यानां शीर्षे मुक्ताफलोद्भवः ॥

1 संश्रिता.

त्वक्सारशुक्तिशङ्खानां गर्भे मुक्ताफलोद्भवः ।
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः ॥ ४२७
दुर्लभं तन्महारत्नं देवैस्तन्नीयतेऽम्बरात् ।
गजादिजं सुदुष्प्रापं मौक्तिकं तपसा विना ॥ ४२८
मौक्तिकं शुक्तिजं लभ्यमाकरेषु कलौ नृभिः ।
कुक्कुटाण्डसमं वृत्तं मौक्तिकं निबिडं गुरु ॥ ४२९ ॥
घनजं भानुसङ्काशं देवयोग्यममानुषम् ।
काम्भोजकुम्भसम्भूतं धात्रीफलनिभं समम् ॥
आताम्रपिञ्जरच्छायं मौक्तिकं मणिदीधिति ।
फणिजं वर्तुलं रम्यं नीलच्छायं महाद्युति ॥ ४३१
पुण्यहीना न पश्यन्ति वासुकेः कुलसम्भवम् ।
कोलजं कोलसदृशं तद्दंष्ट्रासदृशच्छवि ॥ ४३२ ॥
अलभ्यं मनुजै रत्नं मौक्तिकं पुण्यवर्जितैः ।
गुञ्जाफलसमस्थौल्यं तिमिजं मौक्तिकं लघु ॥
पाटलीपुष्पसदृशं मन्दकान्ति सुवर्तुळम् ।
वंशजं शशिसङ्काशं तक्कोलफलमात्रकम् ॥ ४३४ ॥
प्राप्यते बहुभिः पुण्यैस्तद्रक्ष्यं वेदमन्त्रतः ।
वर्षोपलसमं दीप्तया पाञ्चजन्यकुलोद्भवम् ॥ ४३५ ॥
कपोताण्डप्रमाणं तत्कान्तं पापहरं शुभम् ।

शुक्तिजन्माम्बुधेर्मध्ये सिंहले चारवाटके ॥४३६॥
पारशीके बर्बरे च भवेन्मुक्ताफलं शुभम् ।
स्वात्यां स्थिते रवौ मेघैर्ये मुक्ता जलबिन्दवः ॥
ते गीर्णाश्शुक्तिभिर्मुक्ता जायन्ते निर्मलत्विषः ।
स्थूलमध्यास्तथा सूक्ष्मा बिन्दुमानानुसारतः ॥
भवन्ति मुक्तास्तासां च मूल्यं तन्मानरूपतः ।
रुक्मिण्याख्या भवेच्छुक्तिस्तस्यां जातं च मौक्तिकम्
निर्मलं कुङ्कुमच्छायं जातीफलसमं वरम् ।
अमूल्यं तद्विनिर्दिष्टं रत्नलक्षणवेदिभिः ॥ ४४० ॥
दुर्लभं नृपयोग्यं स्यात् स्वल्पभाग्यैर्न लभ्यते ।
सुस्निग्धं मधुरच्छायं मौक्तिकं सिंहलोद्भवम् ॥
आरवाटसमुत्पन्नं पीतच्छायं सुनिर्मलम् ।
पारशीकोद्भवं स्वच्छं सितं मुक्ताफलं शुभम् ॥
ईषच्छायं च रूक्षं च मौक्तिकं बर्बरोद्भवम् ।
चत्वारस्स्युर्महादोषाः षट् च मध्याः प्रकीर्तिताः॥
एवं दश समाख्यातास्तेषां वक्ष्यामि लक्षणम् ।
यत्रैकदेशे संलग्नः शुक्तिखण्डो विभाव्यते॥४४४॥
शुक्तिलग्नस्समाख्यातः स दोषः कुष्ठकारकः ।
मीनलोचनसङ्काशो दृश्यते मौक्तिके तु यः ॥

मत्स्याक्षस्स तु दोषस्स्यात् पुत्रनाशकरो ध्रुवम् ।
दीप्तिहीनं गजच्छायं जठरं तद्विदुर्बुधाः ॥ १४६ ॥
दारिद्र्यदायकं यस्मात्तस्मात्तत्परिवर्जयेत् ।
मौक्तिकं विद्रुमच्छायमतिरक्तं विदुर्बुधाः ॥१४७॥
तस्मिन् सन्धारिते मृत्युर्जायते नात्र संशयः ।
उपर्युपरि तिष्ठन्ति वलया यत्र मौक्तिके ॥१४८॥
त्रिवृत्तं नाम तत्ख्यातं दुर्भगत्वविधायकम् ।
स्वच्छं तु पारशीकं यत्पर्पटं तन्निगद्यते ॥ १४९ ॥
मौक्तिकं ध्रियते येन तस्य कीर्तिर्भवेत्सदा ।
त्रिकोणं त्र्यश्रमाख्यातं सौभाग्यक्षयकारकम् ॥
दीर्घं यत्तत्तु संप्रोक्तं प्रज्ञाविध्वंसकारकम् ।
निर्भिन्नमेकतो यत्तु कृशपार्श्वं तदुच्यते ॥ १५१ ॥
सदोषं मौक्तिकं निन्द्यं निरुद्योगकरं हि तत् ।
आवृत्तपीठकोपेतं खण्डांशं तन्निरूपितम् ॥ १५२॥
अरम्यं गुणहीनं च स्वल्पमौल्यं च मौक्तिकम् ।
तारकाद्युतिसङ्काशं सुतारं तन्निगद्यते ॥ १५३ ॥
सुवृत्तं मौक्तिकं यत्स्याद्गुणवत्तत् प्रकीर्त्यते ।
स्वच्छं दोषविनिर्मुक्तं मौक्तिकं निर्मलं मतम् ॥
गुरुत्वं तोलने यस्य घनं तन्मौक्तिकं वरम् ।

शीतांशुबिम्बसङ्काशं मौक्तिकं स्निग्धमुच्यते ॥
व्रणरेखाविहीनं यत्तत्स्यादस्फुटितं शुभम् ।
ईदृक् सर्वगुणोपेतं मौक्तिकं येन धार्यते ॥४५६॥
तस्यायुर्वर्धते लक्ष्मीः सर्वपापं विनश्यति ।
चतुर्धा मौक्तिकच्छाया पीता च मधुरा सिता ॥
नीला चेति समाख्याता छाया रत्नपरीक्षकैः ।
पीता लक्ष्मीप्रदा ज्ञेया मधुरा बुद्धिवर्धिनी ॥
शुक्ला यशस्करी छाया नीला सौभाग्यनाशिनी ।
मञ्जाली प्रोच्यते गुञ्जा तास्तिस्रो रूपकं भवेत् ॥
रूपकैर्दशाभिः प्रोक्तः कलञ्जो नाम नामतः ।
कांस्यपात्रद्वयं वृत्तं समानं रूपमानतः ॥ ४६० ॥
चतुश्छिद्रसमायुक्तं प्रत्येकं रज्जुयन्त्रितम् ।
दण्डः कांस्यमयश्श्लक्ष्णो द्वादशाङ्गुलसम्मितः ॥
पक्षद्वये समानश्च प्रान्तयोर्मुद्रिकायुतः ।
मध्ये तस्य प्रकर्तव्यः कण्टकः कांस्यनिर्मितः ॥
पञ्चाङ्गुलायतं तस्य मूले छिद्रं प्रकल्पयेत् ।
निवेश्या छिद्रिते तस्मिन् शलाकाऽङ्गुलमात्रका॥
शलाकाप्रान्तयोस्तस्याः कीलयेत्तोरणाकृतिम् ।
तोरणस्य शिरोमध्ये कर्तव्या लघुकुण्डली ॥४६४

तत्र रज्जुं निबध्नीयात्तां धृत्वा तोलयेत्सुधीः ।
कलञ्जमानकं द्रव्यमेकदेशे निवेशयेत् ॥ १६५ ॥
अन्यतो जलबिन्दूंस्तु तोलनार्थं विनिक्षिपेत् ।
कण्टके च समे जाते तोरणस्य च मध्यगे ॥
तदा समं विजानीयात्तोलनं मानकोविदः ।
चत्वारि त्रीणि युग्मं वा तथैकं वा तुलास्थितम् ॥
समं कलञ्जमानेन तदुक्तं समनुक्रमात् ।
नवमात्पञ्चमं यावत्कलञ्जेन समं यदा ॥ १६८ ॥
तत्क्रमादुत्तमं ज्ञेयं मौक्तिकं रत्नवेदिभिः ।
चतुर्दश समारभ्य दशसङ्ख्यावधि क्रमात् ॥१६९
तस्य मध्यममानत्वा[1]न्मौक्तिकं मध्यमं स्मृतम् ।
आरभ्य विंशतेस्तस्मात्क्रमात्पञ्चदशावधि ॥ १७०
लघुयस्ताः कथिता मुक्ता मौल्यं च तदनुक्रमात् ।
अतः परं च सूक्ष्माणि मौक्तिकानि प्रचक्षते ॥
तोलने क्रम एष स्यान्मूल्यमेतन्निरूपितम् ।
उत्तमस्योत्तमं मूल्यं लघूनां लघुमूल्यकम् ॥
मध्यानां मध्यमं मूल्यं गुरूणां बहुमूल्यता ।
कलञ्जद्वयमानेन यद्येकं मौक्तिकं भवेत् ॥ १७३ ॥

[1] कलञ्जस्य समानत्वात्.

न धार्यं नरनाथैस्तद्देवयोग्यमनुत्तमम् ।
उत्पत्तिराकरश्छाया गुणदोषौ शुभाशुभम् ॥४७४
तोलनं मौल्यविन्यासः कथितस्सोमभूभुजा ।
सिन्धौ रोहण[1] गङ्गायां सिंहले जन्म कीर्तितम् ॥
क्षेत्राणि तत्र चत्वारि माणिक्यस्य बुधा जगुः ।
सिंहलं प्रथमं क्षेत्रं ततः कालपुरं परम् ॥४७६॥
अन्ध्रे[2] तृतीयमुद्दिष्टं चतुर्थं तुम्बरं स्मृतम् ।
सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमम् ॥ ४७७ ॥
पीतं कालपुरोद्भूतं कुरुविन्दमिति स्मृतम् ।
अशोकफलसच्छायमन्ध्रे सौगन्धिकं विदुः ॥
तुम्बरं छायया नीलं नीलगन्धि प्रकीर्तितम् ।
उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बरोद्भवम् ॥ ४७९ ॥
मध्ययोर्मध्यमं ज्ञेयं माणिक्यं क्षेत्रभेदतः ।
माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः ॥
गुणाश्चत्वार आख्याताः छायाष्षोडश कीर्तिताः ।
छायाद्वितयसम्बन्धि द्विच्छायं बन्धुनाशनम् ॥
द्विरूपद्विपदत्वेन माणिक्येन पराभवः ।
सभेदं भिन्नमित्युक्तं शस्त्राघातविधायकम् ॥४८२॥

---

1 रावण. 2 आन्ध्रं इति सुवचम्.

कर्करं शर्करायुक्तं पशुबन्धविनाशकृत् ।
दुग्धेनेव समालिप्तं लघु वा पटमुच्यते ॥४८३॥
अशोभनं तदुद्दिष्टं माणिक्यं मणिकोविदैः ।
मधुबिन्दुसमच्छायं कोमलं परिकीर्तितम् ॥४८४
आयुर्लक्ष्मीं जयं हन्ति सदोषं तन्न धारयेत् ।
रागहीनं जडं प्रोक्तं धनधान्यापहारकृत्[1] ॥ ४८५
धूम्रं धूमसमाकारं वैद्युतं भयमावहेत् ।
ईदृग्दोषयुता निन्द्या मणयो मूल्यवर्जिताः ॥४८६
अपि प्राप्ता न ते धार्या गृहे शोभनमिच्छता ।
माणिक्यस्य गुणाः प्रोक्ताश्चत्वारो मुनिपुङ्गवैः ॥
स्निग्धच्छाया गुरुत्वं च नैर्मल्यमतिरक्तता ।
सर्वलक्षणसम्पूर्णे पद्मरागे गृहे स्थिते ॥४८८॥
अश्वमेधफलं तस्य वित्तमायुर्जयो भवेत् ।
छाया स्यात्पद्मरागस्य रक्तकोकनदप्रभा ॥४८९॥
खद्योताक्षि चकोराक्षि कोकिलानेत्रसन्निभा ।
सारसाक्षि चकोरस्य सन्निभैवं च सप्तधा ॥ ४९०
एतादृशुभफलादृछायाः सिंहलोत्थमणेः पुनः ।
सिन्दूरलोध्रपुष्पाभा गुञ्जाकिंशुकसन्निभा ॥४९१॥

---

1 धनहान्यपवादकृत्

छायास्ताः कुरुविन्दस्य चतस्रः परिकीर्तिताः ।
अवलाक्षाररसाभासा स्यात्सौवीरकसन्निभा ॥४९२
ईषद्रक्ता भवेच्छाया सौगन्धिकमणेरियम् ।
नीलोत्पलदलप्रख्या लोहाग्नित्विट्समप्रभा॥४९३
नीलगन्धिमणेः प्रोक्ते छाये द्वे मणिकोविदैः ।
इन्द्रनीलस्य सम्भूतिः सिंहलद्वीपमध्यतः ॥
नद्या रावणगङ्गायाः कूले पद्माकराकरे ।
सितच्छायो भवेद्विप्रस्ताम्रः क्षत्रियजातिकः॥
पीतस्तु वैश्यजातीयो वृषलः कृष्णदीधितिः ।
दोषांस्तस्य प्रवक्ष्यामि नामभिर्लक्षणैश्च षट् ॥
गुणांश्च कथयिष्यामि पञ्च चाष्टविधा छविः ।
अभ्रवत्पटलं यस्य तदभ्रकमिति स्थितम् ॥४९७॥
धारणे तस्य सम्पत्तिरायुश्चैव विनश्यति ।
शर्करामिश्रितं यत्तु तद्विज्ञेयं सशर्करम् ॥४९८॥
तस्मिन् धृते दरिद्रत्वं देशत्यागश्च जायते ।
भेदसंशयकृत्त्रासस्तेन दंष्ट्रिभयं भवेत् ॥ ४९९॥
भिन्नं भिन्नमिति ज्ञेयं भार्यापुत्रविनाशनम् ।
मृत्तिका यस्य गर्भस्था दृश्यते रत्नकोविदैः ॥५००
मृत्तिकागर्भकं नाम त्वग्दोषजननं भवेत् ।

दृषत्प्रलक्ष्यते यस्य गर्भे नीलस्य कोविदैः ॥५०१
अश्मगर्भं तदाख्यातं तद्धर्ता परिभूयते ।
गुरुत्वं स्निग्धकान्तित्वं सुरङ्गं पार्श्वरञ्जनम् ॥५०२
तृणग्राहित्वमित्येते गुणाः पञ्च प्रकीर्तिताः ।
नीलीरससमाभासा वैष्णवी पुष्पसन्निभा ॥ ५०३
आवली[1] पुष्पसङ्काशा नीलेन्दीवरसप्रभा ।
अतसीपुष्पनीकाशा चाषपक्षसमद्युतिः ॥ ५०४ ॥
कृष्णाद्रिकर्णिकापुष्पसमानद्युतिधारिणी ।
मयूरकण्ठसच्छाया शम्भोः कण्ठनिभा तथा ॥
विष्णुदेहसमाभासा भृङ्गपक्षसमप्रभा ।
दोषैस्त्यक्तो गुणैर्युक्त इन्द्रनीलो महामणिः ॥५०६
यस्य हस्ते भवेत्तस्य वित्तमायुर्महद्यशः ।
क्षीरमध्ये क्षिपेन्नीलं दुग्धं चेन्नीलतां व्रजेत् ॥
इन्द्रनीलस्स विज्ञेयो रविनन्दनवल्लभः ।
इन्द्रनीले धृते सौरिः प्रसन्नस्सततं भवेत् ॥५०८॥
आयुश्च महतीं लक्ष्मीमारोग्यं च प्रयच्छति ।
तुरुष्कविषयेऽम्भोधेस्समीपे विषमस्थले ॥५०९ ॥
भवेन्मरकतं रत्नं गुणो दोषश्च कथ्यते ।

---

[1] लवणी.

दोषा भवेयुस्सप्तास्य गुणाः पञ्चविधास्स्मृताः ॥
भवेदष्टविधा छाया मणेर्मरकतस्य हि ।
अस्निग्धं रूक्षमित्युक्तं व्याधिस्तस्मिन् धृते भवेत्॥
विस्फोटस्स्यात्सपिटकं विषात्तत्र हतिर्धृते ।
सपाषाणे भवेद्बन्धुनाशो मरकते धृते ॥ ५१२ ॥
विच्छायं मलिनं प्राहुर्बाधिर्यं तेन जायते ।
कर्करं शर्करायुक्तं पुत्रशोकप्रदं धृतम् ॥ ५१३ ॥
जठरं कान्तिहीनं स्याद्दंष्ट्रिवह्निभयावहम् ।
कल्माषवर्णं शबलं ततो मृत्युभयं भवेत् ॥५१४॥
इति दोषास्समाख्याता वर्ण्यन्तेऽथ गुणोदयाः ।
प्रशस्तं कथितं स्वच्छं गुरु स्याद्गुरुतायुतम्॥५१५
स्निग्धं रूक्षविनिर्मुक्तमरजस्कमरेणुकम् ।
सुरागं रागबहुळमिति पञ्च गुणाः स्मृताः ॥५१६॥
एतैर्युक्तं मरकतं सर्वपापभयापहम् ।
बर्हिपिञ्छसमाभासा चाषपक्षसमप्रभा ॥ ५१७ ॥
काचादिदोषरहिता तथा शैवालसन्निभा ।
खद्योतपृष्ठसङ्काशा बालकीरगरुत्समा ॥ ५१८ ॥
नवशाद्वलसच्छाया शिरीषकुसुमोज्ज्वला ।
एवमष्टौ समाख्याताश्छाया मरकताश्रयाः॥५१९

छायाभिर्युक्तमेताभिश्श्रेष्ठं मरकतं भवेत् ।
शैवालवल्लरीच्छायं सुरङ्गं त्रासवर्जितम् ॥५२०॥
अनर्घ्यं तन्मरकतं प्राहुस्सर्वविषापहम् ।
सुश्लक्ष्णं चैव सुच्छायं सुरङ्गं दोषवर्जितम् ॥५२१
अनर्घ्यं तन्मरकतं प्राहुस्सर्वविषापहम् ।
हिमालये सिंहले च विन्ध्ये तापीतटे तथा॥५२२
स्फटिकं जायते रक्तं नानारूपं मनोहरम् ।
हिमाद्रौ चन्द्रसङ्काशं स्वच्छं कान्तियुतं भवेत् ॥
सूर्यकान्तं तु तत्रैकं चन्द्रकान्तं तथाऽपरम् ।
सूर्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात् ॥
सूर्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः ।
पूर्णचन्द्रकरस्पर्शादमृतं क्षरति क्षणात् ॥ ५२५ ॥
चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात्कलौ युगे ।
अशोकपल्लवच्छायं दाडिमीबीजसप्रभम् ॥५२६।
विन्ध्ये तापीतटोद्देशे जायते मन्दकान्तिकम् ।
सिंहले जायते कृष्णमाकरे नीलगन्धिके ॥५२७॥
पद्मरागभवस्थाने विविधं स्फटिकं भवेत् ।
ईषत्पीतं पविच्छायं स्वच्छं कान्त्या मनोहरम् ॥
पुष्यरागमिति ख्यातं रत्नं रत्नपरीक्षकैः ।

सिताभ्रधूमसङ्काशमीशत्कृष्णं सितं तु यत् ॥
वैडूर्यं नाम तत्प्रोक्तं रत्नं रत्नपरीक्षकैः ।
मधुबिन्दुसमं वाऽपि गोमूत्राच्छसमप्रभम्॥५३०॥
गोमेदकं तदाख्यातं रत्नं सोममहीभुजा ।
सेतौ सागरमध्ये तु जायते वल्लरी तु या॥५३१॥
विद्रुमाख्या सुरक्ता सा दुर्लभा रत्नरूपिणी ।
पाषाणत्वं भजत्येषा प्रयत्नाद्बाधिता सती॥५३२॥
प्रवालं नाम तद्रत्नं वर्णाढ्यं मन्दकान्तिकम् ।
पद्मरागस्य नीलस्य ये दोषाः परिकीर्तिताः ॥
तैरेव दूषितं रत्नं संत्याज्यं स्फटिकं नृपैः ।
गौरवं स्वच्छता कान्तिः काठिन्यं रत्नजा गुणाः ॥
विहाय वज्रं नान्येषु[1] शोभनं लाघवं भवेत् ।
रत्नानां रूपसाम्यं तु धूर्ताः कुर्वन्ति युक्तितः ॥
तेषां परीक्षां वक्ष्यामि रत्नारत्नविचारणे ।
वज्रेण वेधयेद्वज्रं कृत्रिमं चेद्विभज्यते ॥ ५३६ ॥
कृत्रिमं मौक्तिकं नश्येत् क्षालितं लवणाम्भसा ।
माणिक्यादीनि रत्नानि कर्षणात्क्वथनादपि ॥
शोधयेद्रत्नवित् प्राज्ञः कृत्रिमं शुद्धमेव च ।

1 वज्रे रत्नेषु

त्यज्यते क्वथनाद्रागं कृत्रिमं तदुदीरितम् ॥५३८॥
मार्दवं दृश्यते घृष्टे ज्ञेयं तत् कृत्रिमं बुधैः ।
एवं विचार्य रत्नानि कोशे सञ्चिनुयान्नृपः ॥
आयुर्लक्ष्मीं जयं कीर्तिं प्रयच्छन्ति मनीषिणाम् ।
स्तोकस्तोकेन पूर्येत तटाकं जलबिन्दुभिः ॥५४०
मृत्तिकाकणसङ्घातैर्वल्मीकं वर्धते यतः ।
क्षौद्रं च राजवित्तं च स्तोकस्तोकेन वर्धते ॥
तस्माद्राज्ञा प्रकर्तव्यः स्वकोशे द्रव्यसञ्चयः ।
राष्ट्रादायातवित्तस्य चतुर्थांशं तु स्थापयेत्[1] ॥
धर्मार्थिकामसिद्ध्यर्थं कुर्याद्भागत्रयं नृपः ।
भागेनैकेन चावश्यं कार्यः कोशस्य सञ्चयः ॥५४२
कोशवान् सुखमाप्नोति कोशहीनस्तु सीदति ।
जले दुर्गं गिरौ दुर्गं दुर्गं पाषाणनिर्मितम् ॥ ५४४
इष्टकाभिः कृतं दुर्गं दुर्गं स्यान्मृत्तिकामयम् ।
वनदुर्गं मरुदुर्गं दुर्गं स्याद्दारुनिर्मितम् ॥ ५४५ ॥
नवमं नरदुर्गं च तेषां वक्ष्यामि लक्षणम् ।
अगाधेनाथ तोयेन वेष्टितं जलजं भवेत् ॥ ५४६
दुरारोहं च शैलाग्रमुदकेन समन्वितम् ।

[1] चतुर्भागान् प्रकल्पयेत्.

गिरिदुर्गं समाख्यातं नीतिशास्त्रविशारदैः ॥ ५४७
पाषाणघटितं दुर्गमश्मदुर्गमितीरितम् ।
इष्टकाभिः कृतं सम्यक् सुधालिप्तं सुनिर्मलम् ॥
इष्टकादुर्गमाख्यातं परिखावेष्टितं महत् ।
मृदा विरचितं यत्तु तद्दुर्गं मृत्तिकामयम् ॥५४९॥
वनदुर्गं समाख्यातं घनकण्टकशाखिभिः ।
अन्तस्थैस्साश्रितं तोयं बहिस्स्थाने च दुर्लभम् ॥
मरुदुर्गं समाख्यातं मरुदेशेन संयुतम् ।
दारुभिर्वेणुभिः कृप्तं दुर्गं दारुमयं स्मृतम् ॥५५१
शस्त्रहस्तैर्महायोधैर्निर्मितं नरदुर्गकम् ।
एतेषामुत्तमं दुर्गं गिरिजं जलजं तथा ॥ ५५२ ॥
मध्यमानीतराण्याहुः कनिष्ठं नरदारुजम् ।
दुर्गे यन्त्राणि कार्याणि नानाप्रहरणानि च ॥५५३
दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ।
सञ्चयश्चात्र सर्वेषामायुधानां विधीयते ॥ ५५४॥
अश्मनां च प्रभूतानां सिकतानां तथैव च ।
कुद्दालरज्जुवेत्राणां पिटकानां तथैव च ॥ ५५५ ॥
सर्वेषां शिल्पभाण्डानां तत्र सञ्चय इष्यते ।
औषधानां च सर्वेषां वादित्राणां तथैव च ॥ ५५६

यवसानां प्रभूतानामिन्धनानां च सञ्चयः ।
गुडस्य सर्वतैलानां घृतस्य मधुनस्तथा ॥५५७॥
तथाच सर्वधान्यानां पशुगोरसयोरपि ।
कुम्भे चाशीविषा धार्या व्याघ्रास्सिंहाश्च बन्धनैः ॥
अन्यानि सर्ववस्तूनि दुर्गे सञ्चिनुयान्नृपः ।
मौलं भृत्यं तथा मैत्रं श्रैणमाटविकं बलम्॥५५९
अमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ।
वंशक्रमागतं मौलं भृत्यं द्रविणदानतः ॥ ५६० ॥
मैत्रीकरणतो मैत्रं श्रेष्ठमेतद्बलत्रयम् ।
सम्बद्धं जन्मकर्मभ्यां निश्चितं समयैश्चयत् ॥५६१
तद्बलं श्रैणमाख्यातं तच्च मध्यममिष्यते ।
पर्वतोपान्तसंवासि निषादं म्लेच्छजातिकम् ॥
अधमं तत्समाख्यातं बलमाटविकं बुधैः ।
शत्रवस्तु भयाक्रान्ता दासभावमुपस्थिताः ॥५६३
तेषां बलं तु विज्ञेयममित्रजबलं बुधैः ।
सन्निधौ न च तत्कार्यं विश्वसेन्न कदाचन ॥५६४
युद्धेषु पुरतः कार्यं नृपैर्युद्धविशारदैः ।
लोहचर्मविनिर्माणाः कार्पासरचिता अपि ॥५६५
शल्यैश्च घटिताः कार्याः सन्नाहाः सुदृढास्सदा ।

पादत्राणैश्शिरस्त्राणैरङ्गत्राणैश्च संवृतम् ॥५६६॥
पताकाभिर्ध्वजस्तम्भैश्शोभमानं भवेद्बलम् ।
वेत्रैर्वंशैश्च काष्ठैश्च चर्मभिर्मर्मबन्धनैः ॥ ५६७ ॥
वर्तुलानि विधेयानि चर्मणा बलगुप्तये ।
व्याघ्रचर्मपिनद्धानि शातकुम्भमयानि च ॥
फलकानि विचित्राणि कारयेत्स्वे बले तथा ।
मौले बले तु ये मुख्यास्तेषां कुर्वीत माननम् ॥
रत्नैर्विभूषणैर्वस्त्रैः प्रियवाक्यैर्मनोहरैः ।
वृत्तिं तेषां प्रकुर्वीत यथायोग्यं सुपुष्कलम् ॥
ग्रामेण ग्रामयुग्मेन ग्रामैर्वा हेमसञ्चयैः ।
भृत्यानां वेतनं दद्याद्यथाकालमतन्द्रितः ॥५७१॥
प्रत्यहं प्रतिमासं वा मासत्रयमथापि वा ।
चतुर्मासोदितं वाऽपि मासषट्कमथापि वा ॥ ५७२
संवत्सरमितं चापि कार्यापेक्षी ततः परम् ।
प्रत्यहं वीक्षणं कार्यमलुप्तैराप्तपौरुषैः ॥ ५७३ ॥
पक्षेपक्षे स्वयं पश्येद्वेतनैर्विधृतान् भटान् ।
कृतश्रमान् सदोत्साहान् रणोचितधृतायुधान् ॥
जितश्रमाणां शूराणां सायुधानां नरेश्वरः ।
दद्यात्प्रसादं भृत्यानां सोत्साहास्ते भवन्त्यतः ॥

अलसानायुधैर्हीनान् दण्डयेत्तान् महीपतिः ।
सैन्धवैर्यवनोद्भूतैः काम्भोजप्रभवैरपि ॥ ५७६ ॥
शिक्षितैर्बहुभिर्वाहैस्संयुक्तं बलमुत्तमम् ।
साध्यन्ते तुरगैरेव दूरस्था अपि वैरिणः ॥ ५७७ ॥
लभ्यते तुरगैः कीर्तिर्यस्याश्वास्तस्य भूस्स्थिरा ।
वाहिताः पोषितास्सम्यक् वाहाः कार्या महीभुजा ॥
अवाहिता न योग्यास्ते मार्गे सङ्ग्रामकर्मणि ।
दूर्वादियवसैरश्वान् खादनैश्चणकादिभिः ॥ ५७९ ॥
स्नेहैर्घृतादिकैर्भक्ष्यै रसैश्च परिपोषयेत् ।
प्रत्यहं वाहयेदश्वान् प्रातःकाले प्रयत्नतः ॥ ५८० ॥
ततस्ते कर्मयोग्यास्स्युर्विनोदे समरेऽध्वनि ।
रूक्षाहारैरजीर्णेन वाहनस्यातियोगतः ॥ ५८१ ॥
वर्षातपपरिक्लेशैस्त्वश्वानां रोगसम्भवः ।
तेषां चिकित्सितं कार्यमश्वायुर्वेदकोविदैः ॥ ५८२ ॥
अविलम्बेन दातव्यमौषधं रोगशान्तये ।
उत्थायोत्थाय विशति गात्रं सङ्कोचयत्यपि ॥
आध्मातो विह्वलीभूतः शीर्षं धारयते गुरुम् ।
शकृत्त्यजति सामं च सशब्दं जठरानिलम् ॥
व्याधेर्मारुतसम्भूतेः लक्ष्मैतत्परिकीर्तितम् ।

नवद्वारेषु विक्षिप्य शुण्ठीचूर्ण तुरङ्गमम् ॥५८५॥
सञ्चार्य शनकैस्तेन प्रकृतिं याति मारुतः ।
तथाऽपि यदि न स्वस्थः तदाऽभ्यङ्गं प्रयोजयेत् ॥
सिद्धार्थलवणव्योषयुजा तैलेन वाजिनाम् ।
कुक्षिं च जठरं पृष्ठं स्वेदयेद्यत्नवान् भिषक् ॥
सार्धं कम्बलमूढेन सन्तप्तेनाश्मना मुहुः ।
तथाऽपि यदिनो शाम्येत्तदा कुर्यान्निरूहणम् ॥
चिञ्चाफलकृतं कल्कं काञ्जिकेन विमिश्रितम् ।
सिद्धार्थं सैन्धवोपेतं कन्दर्पफलसंयुतम् ॥ ५८९ ॥
शतपुष्पसमोपेतं तिलतैलेन मिश्रितम् ।
निरूहणं नियुञ्जीत तेन वायुः प्रशाम्यति ॥५९०
स्वस्थात्मा जायते वाजी यदि नानेन कर्मणा ।
भिषजैव तदा तस्य तप्तलोहशलाकया ॥ ५९१ ॥
बिन्दवो बहवः कार्याः पङ्क्तिद्वयसमाश्रयाः ।
तत्क्षणाज्जायते स्वस्थो जठरं शिथिलं भवेत् ॥
मनःप्रसादं लभते तुरगो नात्र संशयः ।
अन्येद्युर्दापयेत्पानं दीपनं पाचनं परम् ॥ ५९३ ॥
एला मागधिका शुण्ठी तीक्ष्णं लवणपञ्चकम् ।
वचाजातिविषाहिङ्गु चूर्णमेतैः प्रकल्पितम् ॥५९४

पलार्धं सुरया युक्तं सुराऽप्यर्धाढिको मतः ।
क्रमोऽयं सर्वशूलानां शान्तये परिकीर्तितः ॥५९५
गुडेन सहितां शुण्ठीं केवलां वा प्रयोजयेत् ।
त्रिफला पिप्पलीमूलं त्र्यूषणं जीरकद्वयम् ॥५९६
रामठं तिन्त्रिणीकं च यवानां गौरसर्षपाः ।
अजमोदाऽश्वगन्धा च पटोलं चाम्लवेतसम् ॥
त्रिवृन्निम्बश्च मुस्ता च पर्पटं कटुरोहिणी ।
दाडिमं कृष्णलवणं सैन्धवं बिडमेव च ॥५९८॥
सामुद्रं काचलवणं सर्वमेकत्र चूर्णयेत् ।
पलमेकं प्रयुञ्जीत वातरोगे घृतान्वितम् ॥ ५९९ ॥
पित्तोद्भवेषु रोगेषु मधु शर्करयाऽन्वितम् ।
कफजन्मसु रोगेषु दापयेत्सुरया समम्॥ ६०० ॥
आरनालयुतं दत्तं शूलाध्मानहरं परम् ।
युक्तं मांसरसेनैतत् वाजिनां पुष्टिवर्धनम् ॥ ६०१
उष्णोदकेन दातव्यं सर्वरोगहरं भवेत् ।
श्लेष्मस्समुत्कटोऽश्वानां नासारन्ध्रात् स्रवेद्यदि ॥
तदा शृङ्गाणको रोगस्तस्य वक्ष्ये चिकित्सितम् ।
तैलं सिद्धार्थकोद्भूतमजामूत्रविमिश्रितम् ॥६०३॥
सिंहीफलरसोन्मिश्रं नस्यं शृङ्गाणकापहम् ।

शुण्ठी दुरालभा मुस्ता कर्बुरं बृहतीद्वयम् ॥ ६०४
भारङ्गी कर्कटी शृङ्गी वचा पौष्करपिप्पली ।
घृतेन मधुना वाऽपि सितया च समन्वितम् ॥
चूर्णं लेहे प्रयुञ्जीत कासहिक्काविनाशनम् ।
रसाजीर्णे समुत्पन्ने सर्वगात्रं जडं भवेत् ॥६०६॥
क्लेशाद्युत्क्रमते वाजी तस्य वच्मि प्रतिक्रियाम् ।
रसार्तस्य प्रयोक्तव्यं लङ्घनं लाघवावधि ॥ ६०७॥
कृष्णमृत्तिकया लिम्पेत्सर्वगात्राणि कोष्णया ।
सिरावेधः प्रकर्तव्यः प्रबले गात्रगौरवे ॥ ६०८ ॥
उरसः पुरतो भागे पश्चाद्भाग उपाङ्गजे[1] ।
पुनः पश्चिमकायस्य गौरवे चाधिके सति ॥ ६०९
सिरास्सर्वे प्रयोक्तव्याः वंशोपाण्डगता अपि ।
पथ्यां गुडसमोपेतां पिचुमन्ददलान्विताम् ॥
प्रदद्याद्रसपाकार्थं जठराग्निप्रदीपिनीम् ।
चलत्यूर्ध्वमधो मुष्कं पीडां प्रकुरुते भृशम् ॥
यस्मिन् भागे चलेन्मुष्कं तेन पादेन रिङ्खति[2] ।
मुष्कसञ्चलनाच्चाली तस्य वच्मि चिकित्सितम् ॥
तैलाभ्यङ्गः प्रकर्तव्यः स्वेदो धान्यसमुद्भवः ।

---

1 उपाण्डजे. 2 लिङ्गति.

निवाते स्थापयेदश्वमुष्णमम्भः प्रपाययेत् ॥
उपाण्डजा वा योक्तव्या भिषजा तद्गतास्सिराः ।
तथाऽप्यशान्ते योक्तव्यो निरूहस्सानुवासनः ॥
चालिभागे त्रिके कार्यमग्निकर्म विचक्षणैः ।
शङ्कुवत्तिष्ठतः कर्णौ नेत्रयोः परिवर्तनम् ॥६१५॥
स्तम्भस्सर्वेषु गात्रेषु भवेदुत्कण्ठकोऽनिलात् ।
अभ्यङ्गो मर्दनं स्वेदः कर्तव्यश्च प्रयत्नतः ॥६१६॥
शङ्खयोर्मन्ययोः पुच्छे सिरावेधः प्रशस्यते ।
कण्ठ[1]मूलात्स्कन्धपार्श्वात्पृष्ठवंशस्य पार्श्वगे ॥
त्रिकमध्ये समायाते रेखे स्थूणावधि स्थिते ।
कारयेत्तप्तलोहेन घृतेनाभ्यञ्जनं त्र्यहम् ॥ ६१८ ॥
जलमुष्णं यवक्षारमिश्रं तैलेन पाययेत् ।
मन्ययोस्स्तब्धता यस्य स्वेदादिस्तस्य पूर्ववत् ॥
मन्यावंशसिरावेधे नस्यं यत्नेन कारयेत् ।
आभाः[2] शुण्ठी निशा रास्ना हिङ्गु कुष्ठं रसाञ्जनम् ।
कर्णा प्रियङ्गुसञ्चूर्णं रास्नाक्काथेन नावनम् ।
गोशृङ्गं बर्हिणः पिञ्छामच्छभल्लस्य दन्तिनः ॥
केशा नखाश्च दन्ताश्च सिद्धार्थैश्चेति चूर्णितैः ।

1 कर्ण. 2 आभ्यां

एतैः प्रकल्पितो धूमो[1] मन्दुरासु प्रधूपितः ॥६२२
अश्वकायगतान् सर्वान् ग्रहानुच्चाटयत्यलम् ।
वारणैर्भद्रजातीयैः कलिङ्गवनजन्मभिः ॥६२३॥
शिक्षितैस्सज्जितैश्शूरैः लभ्यते विजयो युधि ।
शूरो रूढो महाकायस्सर्वलक्षणसंयुतः ॥ ६२४ ॥
एको विजयते दन्ती मदघूर्णितलोचनः ।
मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ॥
तस्मान्निजबले कार्या बहवो वारणोत्तमाः ।
ततस्तेषां महीपालः पोषणे यत्नवान् भवेत् ॥
राजान्नैर्घृतसम्मिश्रैर्दध्ना च परिलोडितैः ।
पुष्टमांसरसोपेतैरिक्षुकाण्डैस्सुधासमैः ॥ ६२७ ॥
शुक्लपक्षप्रतीकाशशालिपूपैर्मनोहरैः ।
नयगोधूमकुल्माषैर्यावनालैः फलान्वितैः ॥६२८॥
हरितैश्च तथा शुष्कैस्तृणैः कालोचितैरपि ।
विविधैः क्षीरपानैश्च तथा तोयावगाहनैः ॥६२९॥
मृत्तिकामृदुशय्याभिः पांसुक्रीडनकैरपि ।
प्राणयेद्द्विरदान्नित्यं यथा पुष्टा भवन्ति ते ॥६३०॥
बन्धनात्ताडनाद्व्याधेर्वनसौख्यविचिन्तनात् ।

---

1 धूपो.

ग्रासाल्पादन्नतोऽजीर्णादायासाज्जागरादपि ॥६३१॥
जायन्ते करिणां रोगास्तेषां कार्यं चिकित्सितम् ।
औषधैर्वनसम्भूतैराप . . . दाहृतैरपि ॥ ६३२
चूर्णं दशपलं दद्यात्परत्रि . . . विषाणिनाम् ।
कल्कं तद्विगुणक्राथमाढकं परिभाषितम् ॥ ६३३ ॥
द्रव्ये मूलद्रवे तोयं समभागावशेषितम् ।
प्रबोधकालः कालं च मूत्रे मूत्रं च दन्तिनः ॥
नवबन्धनदुःखान्तं तोयं द्रोणीषु पाययेत् ।
या मूर्धनालिका ग्रिष्मे दिनं निस्सारयेज्जलात् ॥
आनयेच्च ततो नागं शतधौतेन सर्पिषा ।
सेचयेत्सर्वगात्रेषु दिनं सायं विचक्षणः ॥ ६३६ ।
ततो दिनद्वयादूर्ध्वं घृतेनैव प्रसेचयेत् ।
शीतार्तं सेचयेन्नागं तैलेनैकेन कोविदः ॥ ६३७ ॥
ह्रासयेत्क्रमशस्तस्य कालं तोयावगाहने ।
इक्षून् बिसमृणाळानि मधुरांश्च महीरुहः ॥६३८॥
कदळीकन्दशालूकैः शृङ्गाटककसेरुकम् ।
मधुकाकोलवाराणां मूलमारग्वधस्य च ॥६३९॥
मनःप्रीतिकरं दद्यादेतत्सन्तापशान्तये ।
व्याधियुक्तस्य नागस्य वक्ष्येऽथ विचिकित्सितम् ॥

आदौ रोगपतिं वक्ष्ये स्थावरं जङ्गमाश्रितम् ।
नामभिर्बहुभिर्युक्तं जन्मन्यन्ते च यो भवेत् ॥
ज्वरो नरेषु विख्यातः पाकजस्सामजन्मसु ।
अभितापस्तुरङ्गेषु रेवाको रासभेष्वसौ ॥ ६४२ ॥
उष्ट्रेष्वलसकः प्रोक्तो गोषु प्रोक्तस्तथेश्वरः ।
अग्निको दन्दशूकेषु हारिद्रो महिषेष्वपि ॥ ६४३ ॥
अजाविके प्रलेपस्स्यान्मृगरोगो मृगीष्वपि ।
अवपातः कुशालेयु नद्येष्विन्द्रमदाभिधः ॥६४४
गुल्मेषु ग्रान्थिको द्योतिः वनस्पत्योषधीष्वपि ।
पुष्पेषु पर्वतः प्रोक्तो रूपको नळनीष्वपि ॥६४५॥
धान्येषु चूर्णकः ख्यातः कोद्रकेषु ललस्स्मृतः ।
शाकेषु मधुको भूम्यामूरषोऽप्सुच नीलिका ॥६४६
अमीभिर्नामभिर्लोके ज्वर एको निगद्यते ।
विहाय मानवान् ये च ज्वरं सोढुमनीश्वराः ॥
पाकजस्य ततश्चास्य चिकित्सा नोपादिश्यते ।
अन्तर्धातून् पुरो व्याप्य बहिः पश्चात् प्रकाशते ॥
दुश्चिकित्स्यस्ततश्चासौ पाकजो मृत्युरूपकः ।
आचार्यैर्बहुभिस्तस्माच्चिकित्सा नास्य वर्णिता ॥
सुवहा सुरसा दारु मुस्ता कुष्ठरसोनकम् ।

मधुशीर्षविडङ्गौ च भार्ङ्गी सिद्धार्थकद्वयम् ॥६५०
मूलकं पञ्चकोलं च करञ्जद्वितयं तथा ।
महान्ति पञ्च मूलानि कफवातप्रशान्तये॥ ६५१ ॥
गुडूची पर्णिकायुग्मं द्वे मेदे जीवकर्षभौ ।
काकोल्यावश्वगन्धा च विदारी च शतावरी ॥
वातपित्तभवान् रोगानशेषांत्सामजन्मनाम् ।
चूर्णः कल्कः कषायो वा योगोऽयं हन्ति निश्चितम् ॥
पटोलपाटाकुष्ठानि निम्बधात्र्यमृता विषा ।
धान्यकं पर्पटं तिक्ता चिकित्सा कफपित्तजित् ॥
हिङ्गु सौवर्चलं शुण्ठी गुडं शूलस्य शान्तये ।
त्र्यूषणेनाञ्जनं चाक्ष्णोश्शुण्ठ्या केवलयाऽपि वा ॥
अश्वगन्धा कणं रास्निः कृमिघ्नं विषपञ्चकम् ।
पृथक् पृथक् पलान्यष्टौ वारिष्ठो मुष्टिमात्रकः ॥
...वर्जिर्लवणैर्युक्ता योगोऽयं हन्ति मारुतम् ।
मूत्रकृच्छ्रमथाध्मानं शूलं वापि व्यपोहति ॥
कुटजं शृङ्गवेरं च यवक्षारं च चित्रकम् ।
यूतिद्वयं च सिद्धार्थं विडिङ्गातिविषा घनः ॥
पिप्पली पिप्पलीमूलं रजनी शिग्रुकु...कम् ।
सिन्धुजातं वचाहिङ्गुचूर्णितो गोमयान्वितः ॥

योगोऽयं जाठरस्याग्नेः करिणां दीपनः परः ।
सामं वायुं हिनस्त्याशु सामवातोद्भवा रुजः ॥
सैन्धवं जीरकं दन्ती शृङ्गवेरं फलत्रयम् ।
करञ्जद्वितयं कृष्णा पटोलं निम्बपल्लवाः ॥६६१॥
ज्योतिष्मती गुडूची च वासवेति सुचूर्णितः ।
पिण्डो मृद्दोहदं हन्ति वह्निमाशु करोति च ॥६६२
त्रिवृदर्कस्स्नुही दन्ती नीली लवणपञ्चकम् ।
ब्राह्मी च रेचनाद्दशूलकुम्याघानविनाशनम् ॥
पाटापटोलकुष्ठानि निम्बभूनिम्बपर्पटम् ।
ज्योतिष्मती स्नुही वासः चव्यग्रन्थिकशिग्रुकम् ॥
वचाकटल्लोध्राणि चित्रकं बृहतीफले ।
तिक्ता दुरालभा धात्री करञ्जं त्रिफला तथा ॥
त्रिकटु त्रायमाणा च पौष्करं गजपिप्पली ।
धातकी चेति चूर्णोऽयं मधुना कण्ठरोगनुत् ॥
सैन्धवं नागरं कुष्ठं वचा शिग्रु निशाद्वयम् ।
सिद्धार्थकयवक्षारौ सर्वमेकत्र चूर्णितम् ॥६६७॥
दध्ना विलोडितं कुष्ठं कफवातजशोफजित् ।
स्वेदं च कारयेच्छोफे प्रबलं वा यथोचितम् ॥
शोफे विपाटिते पक्के द्विपाविट्सैन्धवान्विता ।

क्षेपणीया प्रयत्नेन व्रणान्तः पूयशान्तये ॥ ६६९ ॥
कुधत्यसृक्कापित्तं च जाते सच्छः क्षते मृशम्? ।
घृतमाक्षिकपूर्णं तद्विधातव्यं दिनत्रयम् ॥ ६७० ॥
तिलान्निम्बस्य पत्राणि रजनीचेति पेषितम् ।
मधुयुक्तं व्रणानां स्याच्छोधनं रोपणं परम् ॥
कतकस्य फलं चैव लोध्रकं चन्दनं घटम् ।
प्रपौण्डरीकं मञ्जिष्ठा वालकोशीरकं तथा ॥६७२॥
सर्वेषामाक्षिरोगाणां शम्यते सामजन्मनाम् ।
क्षीरद्रुमाणां निष्क्वाथे त्रिवृतं निक्षिपेदनु ॥६७३॥
त्रिफला रोचनं लाक्षा सिन्दूरं लोध्रगुग्गुळम् ।
भल्लातकजनाघोटाफलकोशीरसैन्धवम् ॥ ६७४
सौराष्ट्रिकाञ्जनं चैव . . . . . समुद्भवम् ।
श्रीवेष्टं चेति सञ्चूर्ण्य क्काथे सम्मिश्रयेत्ततः ॥
दर्व्या विघटयंस्तदूज्ञः शनैर्मृद्वग्निना भिषक् ।
लोहवत्तद्धनीभूतं पिच्छिलं वज्रलेपवत् ॥ ६७६ ॥
द्विपानां तलबन्धार्थं कल्पयेत्सुविचक्षणः[1] ।

---

[1] पर्णिका मुद्गपर्णी उग्रगंधा वचा रसोढा रसपञ्चक. पूरीद्रयं भ्रष्टा पिप्पली वाका आटरूपक. ग्रन्थिकं पीप्पलीमूल कट्कलं काश्वर्यवत सौराष्ट्रि तुवरमृत्तिका त्रिवृत त्रिस्नेहं श्रीवेष: सरळद्रुमनिर्यास: ॥ इत्यधिक: पाठ:.

मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ॥६७७॥
तस्मान्निजबले कार्या बहवो द्विरदा नृपैः ।
उपचारान् प्रकुर्वीत दानार्थं करिणां नृपः ॥६७८॥
अनेकायुधसङ्कीर्णाः पताकाध्वजराजिताः ।
चतुर्भिस्तुरगैर्युक्ता दृढास्सारथिनोदिताः ॥ ६७९ ॥
महारथैस्समाक्रान्ता बहवस्स्यन्दना नृपैः ।
चतुरङ्गं बले कार्या रणे विजयकाङ्क्षिभिः ॥ ६८० ॥
खड्गचर्मधराः केचित् अन्ये स्युः कुन्तपाणयः ।
सेल्लचक्रधराः केचित् केचिच्च क्षुरिकाधराः ॥
यन्त्रमुक्तायुधाः केचित् केचिमुक्तायुधास्तथा ।
अमुक्तायुधहस्ताश्च मुक्तायुधकरास्तथा ॥ ६८२ ॥
ईदृक्चतुर्बलं . . . . युद्धाय विजितश्रमः ।
कुर्यादतन्द्रितो राजा शत्रुसंहरणोद्यतः ॥ ६८३ ॥
कुलीनं च सुशीलं च सुखदुःखे च सम्मतम् ।
अमात्यं दृढचित्तं च धनैः प्राणैरवञ्चकम् ॥६८४॥
नीतिज्ञं शौचसम्पन्नं व्यसनेषु पराङ्मुखम् ।
कुर्वीत नृपतिर्मित्रं धर्मार्थं सुखसिद्धये ॥ ६८५ ॥
आत्मायत्तो नृपश्श्रेष्ठः द्वयायत्तस्तु मध्यमः ।
कनिष्ठस्साचिवायत्त इति नीतिविदो विदुः॥६८६॥

मदधीनमिदं राष्ट्रं राजा च वशगो मम ।
मया यत्क्रियते कार्यं तत्कार्यं केन लङ्घ्यते ॥
इत्यादिगर्वेणाध्मातः सचिवो यत्र जल्पति ।
कनिष्ठं तत्र तद्राज्यं सचिवायत्तमुच्यते ॥ ६८८ ॥
विज्ञप्तं यन्मया कार्यमवश्यं मन्यते प्रभुः ।
इत्यारोप्य द्वयोस्साम्यं सचिवो यत्र भाषते॥६८९॥
सुखासुखप्रदं चैवमुभयाधीनसिद्धितः ।
तद्राज्यमुभयायत्तं मध्यमं परिकीर्तितम् ॥
प्रभोराज्ञां विना नाहं समर्थः कार्यसिद्धये ।
इति भीत्या नृपे भक्तया सचिवो यत्र वत्सलम् ॥
यत्तु राज्यं भयोपेतं सुखदं सर्वसिद्धिदम् ।
श्रेष्ठं स्थिरतरं सम्यगात्मायत्तं प्रकीर्तितम् ॥
अनुग्रहे निग्रहे च दाने वा वादकर्मणि ।
प्रवृत्तौ च निवृत्तौ च ग्रहणे मोक्षणे तथा ॥
स्वयं समर्थो यो राजा स्वाज्ञा चैव निरर्गळा ।
निजशक्तया समायुक्तः स प्रभुः प्रभुरुच्यते ॥६९४
आज्ञारूपेण या शक्तिः सर्वेषां मूर्धनि स्थिता ।
प्रभुशक्तिर्हि सा . . . . . . . . . महिमोदयः ॥
कार्यस्य साधनोपायाः सहायाः सत्कृतौ क्षमाः ।

देशकालविचारश्च विघ्नानां च प्रतिक्रिया ॥६९६
कार्यं सिद्धिस्सुखं चेति पञ्चाङ्गो मन्त्र इष्यते ।
गुरुशुक्रमतेऽप्येष चाणक्यादिमते तथा ॥६९७॥
यश्च पापविहीनश्च सानुबन्धस्सुखोदयः ।
अभीष्टश्चाविलम्बश्च विशिष्टो मन्त्र इष्यते ॥
बहुभिर्भिद्यते मन्त्रो . . . . . विनश्यति ।
आत्मना विहितो मन्त्रो ब्रह्मणाऽपि न भिद्यते ॥
सततं गुप्तवाक्यस्य नित्यं गुप्तेङ्गिताकृतेः ।
फलैर्ज्ञेयस्सदाऽऽरम्भः पुण्यं पूर्वार्जितं यथा ॥
बधिरान्धजडान्मूकान् व्याधितान् वृद्धबालकान् ।
प्रिया अपि स्त्रियो.....तिरश्चोऽपि शुकादिकान्॥
श्रुतिगोचरकाद्देशात्तेष्वालोचनगोचरात् ।
धारयेत्परतो यत्नात्तन्त्रकाले नरेश्वरः ॥ ७०२ ॥
आरुह्य चोन्नतं स्थानं प्रासादं वा रहस्स्थितम् ।
अरण्ये निर्जने वाऽपि मन्त्रं कुर्यादलक्षितः ॥
मध्याह्ने मन्त्रयेन्मन्त्रं कृताहारो गतक्लमः ।
रात्रावपरभागे वा गतनिद्रस्सुखे स्थितः ॥७०४॥
धर्म मर्थं च कामं च कृत्याकृत्ये बलाबलम् ।
अमित्रानपि मित्राणि देशरक्षाक्रियाक्रमम् ॥७०५

पूरणीं निग्रहोपायमर्थानामार्जनक्रमम् ।
भृत्यानां भरणं चैव प्रत्यूहानां प्रतिक्रियाम्॥७०६
सम्माननं च मित्राणां पुत्राणां नयशिक्षणम् ।
शुद्धान्तवनितारक्षां रक्षां च गजवाजिनाम्॥७०७
मन्त्रिणाम्मन्त्रितं दुष्टममात्यानां विचेष्टितम् ।
रक्षणं च कुमाराणां सामन्तानां च शासनम् ॥
रागापरागौ लोकानामात्मनश्च गुणागुणौ ।
आयव्ययौ च वित्तानां कोशस्यापि विवर्धनम् ॥
दुष्टानां दमनं चैव शिष्टानां परिपालनम् ।
पूजनं सुरविप्राणां वर्णाश्रमनिरीक्षणम् ॥ ७१० ॥
दुर्गाणां रक्षणं सम्यक् परभूपालचेष्टितम् ।
मारणं तस्करादीनामात्मरक्षाविधिक्रमम् ॥७११॥
प्रकृतीनां च सद्भावं धान्यादीनां समार्घताम् ।
शान्तिकं पौष्टिकं कर्म नित्यं नैमित्तिकं तथा ॥
माननं बुद्धिवृद्धानां देशकालविमर्शनम् ।
मन्त्रयेन्मन्त्रिभिस्सार्धं स्वयं वा वसुधाधिपः ॥
आहूय मन्त्रिणस्सर्वान् मन्त्रयेत पृथक् पृथक् ।
अभिप्रायं विदित्वैषां गुणदोषौ विचारयेत् ॥ ७१४
मन्त्रिभिर्मन्त्रिते मन्त्रे गुणदोषौ विचार्य च ।

गुणं निश्चित्य तं रक्षन् कार्यं कुर्यान्महीपतिः ॥
किं कृतं करणीयं किं क्रियमाणं च किं मया ।
किं सिद्धं किन्नु साध्यं मे इति चिन्त्यं मुहुर्मुहुः ॥
बहुलाभं सुसाध्यं च धर्मकीर्तिविवर्धनम् ।
कार्यं विचार्य कर्तव्यं भूभुजा सुखमिच्छता॥७१७
समावायव्ययौ यत्र व्ययो यत्राधिको भवेत् ।
असाध्यं च शतोपायैः कथं चित्तं न मन्त्रयेत् ॥
अधर्म्यं चायशस्यं च पश्चात्तापकरं च यत् ।
दुर्लभं क्लेशबहुलं दुर्मन्त्रं तन्न मन्त्रयेत् ॥ ७१९ ॥
कामात्क्रोधाद्भयादन्यैर्लोभ्यमानो न मुह्यति ।
यया शक्त्या युतः कार्ये मन्त्रशक्तिस्तु सा स्मृता॥
भूमिं द्रव्यं गजानश्वान् रत्नानि विजयं तथा ।
गृहीतुमुद्यतोऽरीणां विक्रमोपचितो नृपः ॥७२१॥
प्रारब्धं यत्स्वयं कार्यं दैवाद्यदि न सिध्यति ।
न सीदति च तत्कर्तुमुत्साही च पुनः पुनः। ७२२
यस्य स्यादुद्यमे नित्यं चित्तमुत्साहसंयुतम् ।
उत्साहशक्तिस्सा ज्ञेया नृपाणां भूतिमिच्छताम् ॥
नाक्रान्तिसाध्यो यः कश्चिद्देशकालाद्यपेक्षया ।
तेन सार्धं प्रकुर्वीत सन्धिं नीतिविचक्षणः ॥७२४

जेता शत्रुं बलिष्ठं यः तस्मादभ्यधिकेन वा ।
तत्रापि सन्धिं कुर्वीत नयशास्त्रविशारदः ॥ ७२५
बलीयसा पीड्यमानो योद्धुं तेन च न क्षमः ।
तथाऽपि सन्धिं कुर्वीत मत्वा नीतिमनुत्तमाम् ॥
सन्धिश्चतुर्विधः प्रोक्तो मैत्रस्सम्बन्धजस्तथा ।
परस्परोपकाराख्यः उपहारस्तथैव च ॥ ७२७ ॥
सुजनोऽयमिति ज्ञात्वा, स्वयं सद्गुणबान्धवः ।
करोत्यलोभतस्सन्धिं मित्रसन्धिस्स उच्यते ॥
कन्यादानेन यं कुर्यात्सन्धिं कार्यवशान्नृपः ।
सम्बन्धजस्स विज्ञेयसन्धिस्सन्धिविचारकैः ॥
अन्योन्यस्योपकारार्थं यत्र सन्धीयते नृपैः ।
परस्परोपकाराख्यस्स सन्धिः प्रोच्यते बुधैः ॥
गजानश्वांस्तथा रत्नं सुवर्णं भूमिमेव वा ।
दत्वा यः क्रियते सन्धिरुपहारस्स उच्यते॥७३१॥
भूरत्नेन सहायेन सामर्थ्येन बलेन च ।
मन्त्रैर्हीनेन भूपालः सार्धं कुर्वीत विग्रहम् ॥
कामजो लोभजश्चैव भूभवो मानसम्भवः ।
अभयार्थस्समाख्यात इष्टजोऽथ मदोत्थितः॥७३३
अर्थशास्त्रे परिख्यात एकद्रव्याभिलाषुकः ।

इत्यष्टौ विग्रहाः प्रोक्ता नवमो नोपलभ्यते ॥७३४
स्त्रीनिमित्तं हि यो जातो विग्रहः कामजस्स्मृतः
द्रव्यापहारजनितः विग्रहो लोभजस्तथा ॥७३५॥
भूम्यर्थमुत्थितो यस्तु विग्रहो भूभवो महान् ।
विरुद्धार्थकृते[1] यस्तु विग्रहो मानसम्भवः ॥ ७३६
शरणागतरक्षार्थं यो भवेद्विग्रहो महान् ।
अभयार्थस्स कथितो विग्रहो नीतिवेदिभिः॥७३७॥
मित्रार्थं बन्धुभृत्यार्थं विग्रहं यं समाचरेत् ।
इष्टजस्स तु निर्दिष्टो नीतिस्पष्टार्थदर्शिभिः ॥७३८
मदिरामदजातेन विद्याधनमदेन च ।
यौवनेन मदेनाऽथ विग्रहो यो भवेन्नृणाम् ॥ ७३९
एतैर्नृणां समुत्सङ्गो मतिभ्रंशकरो महान् ।
अविवेकाद्य उत्पन्नस्स भवेच्च मदोत्थितः ॥७४०॥
एकमर्थं समुद्दिश्य यो भवेद्विग्रहो मिथः ।
स प्रोक्तश्शास्त्रतत्वज्ञैरेकद्रव्याभिलाषुकः ॥ ७४१॥
दैवोपहतको यश्च व्याधिना बाधितोऽपि वा ।
व्यसनासक्तचित्तो वा शत्रुणा पीडितोऽपि वा ॥
बलकोशविहीनो वा यो मित्रैर्विनियोजितः[2] ।

[1] विरुदार्थकृतो· [2] यो वा मित्रैर्वियोजितः ।

तस्योपरि नृपो यायाज्जिगीषुर्जयसिद्धये ॥
शुभनक्षत्रयोगे च शुभे वारे शुभे दिने ।
शोभने करणे लग्ने नृपो यायाज्जयेच्छया ॥७४४॥
शरत्काले वसन्ते च रिपोर्नाश उपस्थिते ।
निमित्तं शकुनं लब्ध्वा यात्रां कुर्वीत भूपतिः ॥
सन्धानजा पार्ष्णिरोधा मित्रविग्राहिणी तथा ।
निर्व्याजजा द्वन्द्वकुल्या सप्तमी वाऽपि शीघ्रगा ॥
पार्ष्णिग्राहेण सन्धाय पश्चाद्गच्छति भूपतिः ।
सन्धानयात्रा सा ज्ञेया नृपाणां क्षेमकारिणी ॥
पार्ष्णिग्राहनिरोधार्थं नियोज्य स्वबलं महत् ।
गच्छतां सा भवेद्यात्रा पार्ष्णिरोधा तथाविधा[1] ॥
शत्रोस्सार्धं स्वमित्रेण कारयित्वा सुविग्रहम् ।
गच्छतां सा भवेद्यात्रा सा मित्रग्रहणी परा ॥
यस्योपरि स्वयं यायादानयेत्तदरीन्नियात् ।
सा यात्रा द्वन्द्वजा प्रोक्ता रिपुसंहारकारिणी ॥
सर्वतः स्वस्थानिनौ वै[2] बलमुख्यानुघातिनः ।
भवेद्या नृपतेर्यात्रा निर्व्याजा सा प्रकीर्तिता ॥
रिपुवंशेन सार्धं यो गच्छत्यरिविनाशने ।

[1] शुभावहा. [2] स्वस्थाचित्तस्य.

सा तु यात्रा भवेत्कुल्या द्विषतां भयकारिणी ॥
रिपोर्विनाशमुद्दिश्य त्यक्त्वाऽन्यं च प्रमादकम् ।
सहसा क्रियते यात्रा सा भवेच्छीघ्रगा भृशम् ॥
यात्राकालं[1] तथा मित्रं निमित्तं बलमात्मनः ।
विचार्य कुर्वतो नित्यं यात्रा भवति सिद्धिदा ॥
मूलेऽर्के श्रवणे सोमे भौमेऽहिर्बुध्न्यदैवते ।
कृत्तिकायां बुधो युक्तो वाक्पतिश्च पुनर्वसौ ॥
भाग्ये शुक्रशनी स्वातौ तिष्ठन्तस्सर्वसिद्धिदाः ।
तस्मादेते समाख्यातास्सिद्धयोगा मनीषिभिः[2] ॥
सहस्रकिरणो हस्ते मृगाङ्को मृगशीर्षके ।
अश्विन्यां च धरापुत्रो मैत्रे चन्द्रमसस्सुतः ॥
दिवौकसां गुरुः पुष्ये रेवत्यां भृगुनन्दनः ।
रोहिण्यां शनिरास्ते चेत्सुधायोगाः प्रकीर्तिताः ॥
रिक्तासु सूर्यजे सूर्ये नन्दासु भृगुनन्दने ।
जयासु धरणीपुत्रे भद्रासु च बुधे विधौ ॥
पूर्णासु त्रिदशाचार्ये स्थिते सिद्धतिथिर्भवेत् ।
सर्वकार्यकरी नृणां यात्रायां च विशेषतः ॥
प्रतिपद्गमने शस्ता द्वितीया क्षेमदा भवेत् ।

---

[1] देशं कालं.  [2] मनीषिणा.

तृतीया धनलाभाय चतुर्थी निन्दिता सदा॥ ७६१
पञ्चमी श्रीकरी ज्ञेया षष्ठी यानेषु कुत्सिता ।
सप्तमी सर्वलाभाय कुत्सिता चाष्टमी तिथिः ॥
नवमी च सदानिन्द्या भूमिदा दशमी भवेत् ।
वैष्णवी जयदा नित्यं द्वादशी परिवर्जिता ॥७६२
किंपुनर्बहुधोक्तेन सर्वसिद्धौ त्रयोदशी ।
असिते च सिते पक्षे वर्जनीया चतुर्दशी ॥ ७६४
पूर्वभागं परित्यज्य पूर्णिमा गमने वरा ।
अमावास्या विशेषेण शशिहीना विवर्जिता ॥७६५
उत्तरात्रितयं पुण्यं रविवारे शुभप्रदम् ।
रोहिणी श्रवणं चित्रा सोमवारे सुखप्रदा ॥ ७६६
अहिर्बुध्न्यं च पौष्णं च भौमवारे तु शस्यते ।
पुनर्वसुर्गुरोर्वारे भाग्यं च श्रवणं सिते ॥ ७६७॥
हरिदैवं द्विदैवं च वह्निदैवं शनेर्दिने ।
धिष्ण्यान्येतानि शस्तानि वारेष्वेतेषु सर्वदा॥७६८
हस्तः पुनर्वसुः पुष्यः रेवती मृगशीर्षकम् ।
अनूराधाऽश्विनी श्रोत्रं शस्ता निर्गमने नृणाम् ॥
चरलग्ने प्रयातव्यं द्विस्वभावे तथा नृपैः ।
लग्ने स्थिरे न गन्तव्यं यात्रायां क्षेममिच्छुभिः ॥

अष्टमं जन्मतस्त्यक्त्वा लग्नं द्वादशमेव च ।
ग्रहाणां च बलं प्राप्य गच्छेदिच्छन् जयं नृपः ॥
गुरुर्लग्ने बुधस्तुर्ये पञ्चमे भृगुनन्दनः ।
षष्ठे कुजार्कतनयौ तृतीये चण्डदीधितिः ॥ ७७२ ॥
चन्द्रमा दशमे यस्य स यात्रायां जयी भवेत् ।
क्षेमेण गमनं यस्य क्षेमेण च निवर्तनम् ॥७७३॥
बुधजीवासितानां च यदि केन्द्रत्रिकोणगः ।
एको भवेद्ग्रहो यस्य तस्य यात्रा शुभप्रदा ॥ ७७४
बुधजीवैस्त्रिकोणस्थैरति[1]योगस्स कथ्यते ।
तत्र यात्रा नरेन्द्राणां क्षेमदा रिपुनाशिनी ॥७७५
योगातियोगः कथितस्त्रिभिः केन्द्रत्रिकोणगैः ।
तत्र यातुर्भवेत् क्षेमो भुवो लाभो रिपोर्वधः ॥
केन्द्रत्रिकोणगास्सौम्याः पापाष्षष्ठत्रिलाभगाः ।
ग्रहा यस्य प्रयाणे स्युस्तस्य लाभो जयो भवेत्॥
योगे यात्रा भवेच्छस्ता नृपाणां भूतिमिच्छताम् ।
तारागुणैर्द्विजातीनामन्येषां शकुनादिभिः ॥ ७७८
उत्तरासु विशाखायां रोहिण्यां गमने नृपः ।
दिवसस्य तृतीयांशमाद्यं भागं विवर्जयेत् ॥

---

[1] द्वौ चेत्केन्द्रात्रकोणस्थावति·

सार्पराक्षसरौद्रेषु ज्येष्ठायां वारुणस्य हि ।
वर्जयेन्मध्यमं भागं यात्रायां पृथिवीपतिः ॥७८०
स्वात्यश्विपुष्यहस्तेषु यात्रायां परिवर्जयेत् ।
दिनस्य पश्चिमं भागं जयमिच्छन् महीपति· ॥
मैत्रैन्द्रत्वाष्ट्रपौष्णेषु त्याज्यो यत्नान्महीभुजा ।
रजन्यां प्रथमो भागः सदा विजयमिच्छता ॥
याम्ये पूर्वात्रये पित्र्ये निशामध्यं परित्यजेत् ।
गमने भूपतिर्दक्षो रिपुघातजयोत्सुकः ॥ ७८३ ॥
श्रवणादित्रयं त्याज्यं नक्षत्रेऽदितिदैवते ।
निशायाश्चरमो भागः प्रयाणे पृथिवीभुजा ॥७८४
श्रवणे च तथा हस्ते पुष्ये च मृगशीर्षके ।
सर्वदा गमनं शस्तं नृपाणां सिद्धिमिच्छताम् ॥
मैत्राश्विपुष्यहस्ताश्च सर्वदिक्षु शुभावहाः ।
यात्रायां सुप्रशस्तास्ते सर्वद्वारिकसंज्ञिताः ॥७८६
गच्छेत्प्राचीमुदीचीं च कृत्तिकादिषु सप्तसु ।
मखादिसप्तके गच्छेद्दक्षिणां पश्चिमां दिशम् ॥
मैत्रादिसप्तके यायात्पश्चिमां दक्षिणां दिशम् ।
धनिष्ठादिषु धिष्ण्येषु व्रजेद्यक्षेन्द्रयोर्दिशम् ॥
वैपरीत्याद्यदा गच्छेत्परिघो लङ्घितो भवेत् ।

लङ्घितः परिघो हन्ति सर्वकर्माणि यायिनाम् ॥
वायव्यामानलीमाशां समाक्रम्य स तिष्ठति ।
परिघो दण्डवत्तस्माद्यात्रायां तं विवर्जयेत् ॥७१०
गमनं केचिदिच्छन्ति कृत्तिकादिषु सप्तसु ।
आग्नेय्यां दिशि प्राच्यां च न दोषः परिघोद्भवः ॥
मखादिषु तथाऽऽग्नेयीं प्राचीं गच्छन्न दुष्यति ।
मैत्रादिषु दिशं वायोर्धनदस्य दिशं व्रजेत् ॥७१२
धनिष्ठादिषु धिष्ण्येषु वायव्यामथ वारुणीम् ।
ककुभं गच्छता नैव परिघो लङ्घितो भवेत् ॥
ज्येष्ठा प्राचीं दिशं हन्ति गच्छतां कामितं फलम्।
पूर्वाभाद्रपदा याम्यां प्रतीचीमपि रोहिणी ॥७१४
उत्तराफल्गुनी तद्वदुत्तरां ककुभं सदा ।
यातॄणां च भवेत्क्लेशस्सन्देहेन निवर्तनम् ॥७१५॥
शुक्रादित्यदिने गन्ता वर्जयेत्पश्चिमां दिशम् ।
बुधे भौमे च कौबेरीं ककुभं परिवर्जयेत् ॥७१६॥
सोमे शनैश्चरे वारे दिशं प्राचीं परित्यजेत् ।
गुरोर्वारे न गन्तव्यं दक्षिणां ककुभं प्रति ॥७१७॥
वारशूलमिदं प्रोक्तमाचार्यैः कौश्चिदेव हि ।
तस्मात्तस्मिन्न गन्तव्यं वारशूले विचक्षणैः॥७१८॥

आदित्यस्य दिने वर्ज्या धनिष्ठा कृत्तिका मघा ।
अनूराधा तथा ज्येष्ठा[1] भरणी गमने बुधैः ॥७९९
आषाढे द्वे विशाखे च त्याज्या सोमस्य वासरे ।
धनिष्ठाभं शतभिषक् भौमवारे विवर्जिताः ॥८००
कृत्तिका रेवती मूलमनूराधा तथाऽश्विनी ।
वर्ज्याश्शतभिषक्चैव बुधवारे शुभेच्छुभिः ॥ ८०१॥
श्रुतं शतभिषक्पौष्णं वर्जयेद्गुरुवासरे ।
पुष्याश्लेषमखाब्राह्मीयात्रां शुक्रदिने त्यजेत् ॥८०२
आषाढयुगलं हस्तं चित्रां चोत्तरफल्गुनीम् ।
मन्दवारे त्यजेत्प्राज्ञो यात्रायां पार्थिवोत्तमः ॥
बहुलासु दधि प्राश्यं ब्राह्मयां च घृतपायसम् ।
ऐन्दवे माषवटका रौद्रे च मधुरं दधि ॥ ८०४॥
पुनर्वसौ पटोलानि पुष्ये सर्पिश्च पायसम् ।
सार्पे धिष्ण्ये तिला भक्ष्या मघासु कृसरोदनम् ॥
पायसं पूर्वफल्गुन्यामर्यम्णे शाकभोजनम् ।
यावकं पाणिनक्षत्रे चित्रायां चित्रभोजनम् ॥८०६
स्वात्यां धात्रीफलं खाद्यं द्विदैवे गुडभक्तकम् ।
कुलुत्थान् मित्रनक्षत्रे यावकाश्शक्रदैवते ॥८०७

---

[1] तथाऽऽश्लेषा.

मूले मूलकमास्वाद्यं पूर्वाषाढे गवां[1] दधि ।
उत्तरायां जलं शीतं श्रवणे श्लक्ष्णसक्तवः ॥८०८
शालिभक्तं धनिष्ठायां वारुणर्क्षे च शष्कुली ।
पूर्वभाद्रपदे क्षौद्रं बीजपूरं तथोत्तरे ॥८०९॥
रेवत्यां सिद्धमुद्गास्स्युरश्विन्यां स्वादु भोजनम् ।
भरण्यां सतिलं तोयं प्राश्य याता सुखी भवेत् ॥
पुष्पवत्यां महादेव्यामकाले पुष्पदर्शने ।
सञ्जाते गोत्रकलहे पृषदंशुमृते तथा ॥८११॥
आशौचे गृहदाहे च भूकम्पे चण्डमारुते ।
दिग्दाहे भूमिनिर्घाते[2] न गन्तव्यं जिगीषुणा॥८१२
क्षुते स्वयं परैर्वाऽपि लग्ने क्वाऽपि च वाससि ।
ललाटस्याभिघाते च पादे कण्टकभञ्जने ॥८१३॥
क्व यासीति परैः पृष्टे तिष्ठेति च निवारिते ।
दृष्टे ज्वालां विना धूमे तुषकाष्ठस्य दर्शने॥८१४
मषीभस्मनि तैले च परिशुष्के च गोमये ।
शशे दिगम्बरे सर्पे न गन्तव्यं सुखार्थिना॥८१५॥
खरोष्ट्रमहिषारूढास्संन्यासि[3] श्यावदन्तकाः ।
कर्णनासादिभिर्हीनाः विकेशाः कृष्णवाससः ॥

1 घनं. 2 निर्घोषे 3 श्रावकान्त्यजा॰

मुक्तकेशा निकृष्टाङ्गाः तैलाभ्यक्ता रजस्वलाः ।
गर्भिणी विधवोन्मत्ताः क्लीबान्धबधिरा नराः ॥
एतेषां दर्शने जाते न गन्तव्यं कदाचन ।
आत्मनो दौर्मनस्ये च न यात्रा सिद्धिदा भवेत् ॥
पूर्णकुम्भे तथा दृष्टे दध्नि मद्ये तथाऽऽमिषे ।
मीने शङ्खे ध्वजच्छत्रे चामरे वारयोषिति ॥८१९॥
चापे मृगे भरद्वाजे फले पुष्पेऽक्षतेष्वपि ।
वृषभे समदे नागे सिते वाहे द्विजोत्तमे ॥८२०॥
सुवर्णे दिव्यरत्ने च वीणायां पटहे तथा ।
पथि चैव पशौ दृष्टे यात्रा भवति सिद्धिदा ॥
नृपो विप्रस्सुहृद्वेश्या कुमारी पाण्डुराम्बरा ।
वृषाश्वकुञ्जरारूढा नरा नार्यश्शुभावहाः ॥८२२॥
गच्छेति पृष्ठतो वाक्यं एहीति पुरतश्शुभम् ।
आशिषस्सर्वतश्शस्ताः मनसस्तुष्टिरूर्जिता ॥
छिन्धि भिन्धि जहीत्यादिवाचो निन्द्या अपि स्फुटम्
उद्यतानां रिपोर्घाते पापधीं शोभनास्सदा ॥८२४
श्वा यात्रासमये गच्छेद्वामाद्दक्षिणतो यदा ।
स्पृशेद्वा श्रवणं वामं यात्रासिद्धिर्भवेत्तदा ॥८२५॥
प्रवेशे दाक्षिणं गच्छेच्छुनको वा रतोद्यतः ।

करोति नितरां सौख्यं विपरीता तु कुक्कुटी॥८२६
क्रोशद्वयं यदा गच्छेत्पार्श्वेन सह जन्मना[1] ।
वामगो मूत्रयेद्वापि तदाऽसौ शुभसूचकः ॥८२७॥
गजस्थानं हयस्थानं शाद्वलं शयनस्थलम् ।
उलूखलं ध्वजच्छत्रचामरं सफलद्रुमम् ॥ ८२८ ॥
इष्टकानिचयं कुम्भं पर्याणं मृत्तिकाचयम् ।
पुष्पवत्फलवत्स्थानं श्वा गच्छन् शुभदो भवेत् ॥
कृतमूत्रो यदा गच्छेत्पुरस्तात्सरमासुतः ।
तदाभिलषितं कार्यं यातुस्सिध्यति निश्चितम् ॥
वामगो मूत्रयेदार्द्रे गोमये कुक्कुरो यदि ।
मृष्टं भोजनमुद्दिष्टं शुष्के निस्स्नेहभोजनम्॥८३१
आर्द्रमस्थि तथा वस्त्रं पादत्राणं मुखे दधत् ।
उपस्थितः प्रभुश्चेच्चेत् सारमेयस्सुखप्रदः ॥८३२॥
शान्तदीप्तप्रवेधेन ज्ञातव्याः ककुभः क्रमात् ।
शुभाशुभफलज्ञानविचाराय मनीषिभिः ॥८३३॥
सूर्यो ज्वाला ततो धूमः पश्चादङ्गारसम्भवः ।
ततश्च पश्चिमे भागे तत्स्थानं परिकीर्तितम् ॥
भस्माङ्गारशिखाधूमा दीप्तमित्यभिधीयते ।

---

[1] मण्डल.

शेषाश्शान्ताः दिशः प्रोक्ताश्चतस्रः पूर्वसूरिभिः ॥
निष्फलं भस्मनः स्थानं अङ्गारस्त्रासमावहेत् ।
ज्वाला मृत्युर्भवेद्धूमस्थाने दुःखं विनिश्चितम् ॥
याममात्रं वसेद्भानुः दिग्विदिक्षु प्रदक्षिणम् ।
चत्वारो दिवसे यामाः यामवत्यस्तथैव च ॥८३७
चतुर्थे नैरृते स्थाने रात्रौ तिष्ठति भानुमान् ।
तृतीये धनदस्थाने प्रत्यूषे दिशि शूलिनः ॥८३८
शिवा रटन्ती दीप्तेषु फलमीरितमावहेत् ।
शिवा शान्ते ज्वलन्तीषु शुभं शंसति निश्चितम् ॥
ज्ञानं च विजयं सौख्यं मित्राणां च समागमम् ।
रटन्ती शान्तदिग्भागे क्रमात्फलमिदं वदेत् ॥८४०
अनेनैव प्रकारेण पल्लीशकुनमादिशेत् ।
दीप्तस्थाने रटत्काकः शोभनं फलमादिशेत् ॥
दीप्ते दीप्तमुखः काकः कुर्वाणः परुषं स्वरम् ।
कार्यसिद्धिं प्रदर्श्याथ विनाशं कुरुते ध्रुवम् ॥८४२
दीप्ताभिमुखमारब्धः पुनश्शान्तेऽभिवासते ।
कार्यं संशयितं कृत्वा पुनस्तत्सिद्धिमादिशेत् ॥
दीप्ते शान्तमुखः काकः कुर्वाणो मधुरं रवम् ।
ईप्सितार्थं रिपोर्नाशं लाभं स्त्रीरत्नजं दिशेत् ॥

अन्तरिक्षेऽथ वृक्षे वा कुर्वाणो मधुरं स्वरम् ।
मूलस्थाने शुभं वक्ति सर्वदा बलिभोजनः ॥८४५
पोतकीस्थानमालोक्य तोरणानि प्रकल्पयेत् ।
तोरणात्तोरणं कार्यं चत्वारिंशत्क्रमान्तरम् ॥८४६
पक्षद्वयास्थितौ वृक्षावष्टधन्वान्तरेऽन्तरे[1] ।
शिलाशकलयुग्मं वा कल्पितं तोरणं विदुः ॥
गृहे पिष्टमयं कृत्वा पोतकीमिथुनं सुधीः ।
पूजयेत्पुष्पधूपाद्यैः[2] कुमारीमपि भोजयेत् ॥८४८
तोरणस्थानमागम्य पोतकीं वासयेत्ततः ।
प्रयतस्सन् गृहं गत्वा स्वप्यात्पाण्डविकं स्मरन् ॥
सूर्योदये समुत्थाय सहायैस्सहितो व्रजेत् ।
नियतस्तोरणाभ्याशं शकुनालोकतत्परः ॥८५०॥
प्रशान्तदिङ्मुखो भूत्वा पोतकीं नामभिस्स्तुवन् ।
पाण्डुपुत्रस्य मध्यस्य दशनामानि कीर्तयेत् ॥
पाण्डवी पोतकी दुर्गा श्यामोमा वटकाभिधा ।
वाराही शकुनी कृष्णा श्वेतपक्षेति नामभिः ॥
एतैरावाह्य विकिरेदक्षतान् कुसुमैस्समम् ।
ध्यायेच्च फल्गुनं वीरं सर्वयोधधुरन्धरम् ॥ ८५३ ॥

---

[1] धन्वान्तरान्तरौ. [2] दीपाद्यैः.

किरीटी विजयः कृष्णो भीभत्सुः फल्गुनोऽर्जुनः।
सव्यसाची च पार्थश्च श्वेताश्वोऽथ धनञ्जयः॥ ८५४
"ओं शिवे ज्वालामुखि बलिं गृहाण स्वाहा"।
"शिवे शिवदूति भगवति चण्डे इदमर्घ्यं लीलया समर्पितं गृहाण स्वाहा" "आगच्छ वायुवेगेन शुभं कुरु स्वाहा"॥

अनेन मन्त्रेण त्रिपथे चतुष्पथे वा बलिमर्घ्यं दद्यात्.

तोरणेषु च सर्वेषु नामान्येतानि कीर्तयेत्।
सिद्धिदा जायते देवी पाण्डुपुत्रोपकारिणी॥ ८५५
निश्शब्दा हीनशब्दा वा गच्छन्ति यदि दक्षिणम्।
व्रजेत्कृष्णा तदा शस्ता शकुनज्ञस्य तोरणे॥ ८५६
तोरणान्तान्निवृत्तस्य पोतकी वामगा शुभा।
अग्रे दक्षिणतः कृष्णा वामतः पृष्ठतः पुरः॥ ८५७
एका वारिभयं दद्याद्द्वितीया कामदा भवेत्।
तृतीया राज्यलाभाय व्रजन्ती दक्षिणां सदा॥
प्रथमं वामगा भूत्वा दक्षिणां यदि गच्छति।
विनाशं कुरुते कार्यं पश्चात्कृष्णा न संशयः॥ ८५९
विपरीतक्रमे शेषा विपरीतफलप्रदा।

नयानयक्रमायाति मित्र[1]कार्याणि शंसति ॥८६०
शुभं वाऽप्यशुभं वाऽन्ते तदेव फलदायकम् ।
पोतकीशकुनज्ञानं कीर्तितं सोमभूभुजा ॥८६१॥
फलपुष्पपलाशाढ्यं क्षीरिणं वा महीरुहम् ।
पवित्रस्थानसम्भूतं पिङ्गलायुगलान्वितम् ॥ ८६२
अर्चयेदधिवासार्थं सायंकाले समाहितः ।
स्नात्वा शुक्लाम्बरो भूत्वा सहायसहितो बुधः ॥
नवेन गोमयेनोर्वीं लिप्त्वा गोचर्मनिर्मिताम् ।
अष्टपद्मं लिखेत्पद्मं पिष्टेनार्द्रेण कोविदः ॥८६४॥
कृत्वा पिष्टमयं तत्र पिङ्गलायुगलं शुभम् ।
चण्डीं च स्थापयेत्तत्र कॢप्तां पिष्टेन सायुधाम् ॥
लोकपालाष्टकं तत्र ध्यायेत्पद्मदलाष्टके ।
ब्रह्माणं कमलस्योर्ध्वमच्युतं च तलास्थितम् ॥
तत्तन्नामाक्षरैर्मन्त्रैः प्रणवाद्यैर्नमोन्तगैः ।
पूजयेत्फलपुष्पाद्यैर्धूपैर्नैवेद्यदीपकैः ॥ ८६७॥

'वृक्षस्थानाय नम' इत्यासनमन्त्रः.

"ओं ह्रां ह्रीं श्रीं प्रें चामुण्डे हूं नमोऽस्मिन्न् वृक्षे अवतर स्वाहा"

---

[1] मिश्र.

ध्यायन्ननेन मन्त्रेण चण्डीं वृक्षेऽवतारयेत् ।
पिङ्गलायुगलस्यापि मन्त्रोऽयं कथ्यतेऽधुना ॥
"ओं पिङ्गले मेघले रेवति रात्रिचारिणि ब्रह्मपुत्रि सत्यमेतद्ब्रवीहि मे स्वाहा" इत्यावाहनमन्त्रः।
"ओं सिद्धचामुण्डे कृष्णापिङ्गले स्वाहा। ओं नमो भगवति काळरात्रि मन्त्रमूर्ति महेश्वरि चामुण्डे प्रजापालिनि योगीश्वरि आगच्छ म एहि तिष्ठ। ओं ह्रीं विरिल[1]शब्दाय स्वाहा" इत्याधिवासमन्त्रः ॥
पूजां जपं च होमं च मूलमन्त्रेण कल्पयेत् ।
अष्टोत्तरशतं जप्त्वा दशांशं होममाचरेत् ॥८६१॥
अश्वत्थोदुम्बराम्राणां दूर्वाब्रह्ममहीरुहः ।
समिधो मधुसर्पिर्भ्यां जुहुयाच्चण्डिकां स्मरन् ॥
प्रेतासनगतां शुष्कभस्मलिप्तां कपालिनीम् ।
घूकध्वजां शूलहस्तां रक्तपां मुण्डमालिनीम् ॥
वसासृग्रञ्जितां कृष्णां गजसिंहाजिनाम्बराम् ।
अक्षवृक्षास्थितां भीमां स्मरेच्चण्डीं कृतार्चनः ॥
अर्चयित्वा ततो वृक्षं वेष्टयेत्सिततन्तुभिः ।

[1] विले चिलि

अर्पयेद्गुरवे सर्वं होमार्चनजपादिकम् ॥ ८७३ ॥
देव्यै कार्यं निवेद्याथ गृहं गच्छेन्निशामुखे ।
गृहे च भोजयेत्कन्याः स्वयं भुञ्जीत बन्धुभिः ॥
प्रत्यूषेऽथ समुत्थाय कृतदेवार्चनादिकः ।
गत्वाऽधिवासितं स्थानं जानुभ्यां धरणीं गतः ॥
बद्धाञ्जलिपुटो भूत्वा मन्त्रग्राममुदीरयन् ।
कथयेदुच्चया वाचा कार्यं शपथपूर्वकम् ॥८७६॥
तथ्यं[1] कथय देवि त्वं ब्रह्मपुत्रि शुभाशुभम् ।
इत्युक्त्वा पृष्ठतः कृत्वा प्रदीप्तां ककुभं बुधः ॥
शृणुयाद्विरुतं तस्याः तथा वीक्षेत चेष्टितम् ।
एकाग्रमानसो भूत्वा शकुनालोकनोद्यतः ॥८७८
पार्थिवो वाडवस्त्वाप्यः कोलकस्तैजसः पुनः ।
क्रूराङ्गुलिस्समीरोत्थो वीशः किंशुरिवाम्बरः ॥
एते पञ्चस्वराः ख्याताः पिङ्गलाख्यस्य पक्षिणः ।
तेषां मात्राप्रभेदोऽयं वक्ष्यते स्वरभेदतः ॥ ८८० ॥
एकमात्रश्चिलीत्युक्तः तद्द्वयेन द्विमात्रकः ।
त्रितयेन त्रिमात्रस्स्याच्चतुर्मात्रश्चतुष्कलः ॥८८१॥
पञ्चभिः पञ्चमात्रस्तु बोद्धव्योऽसौ मनीषिभिः ।

---

[1] कथ्यं.

स्वरूपं तस्य वक्ष्यामि स्वराणामनुकारतः ॥८८२

"चिलि" एकमात्रः । "चिलिचिलि" द्विमात्रः । "चिलिचिलिचिलि" त्रिमात्रः । "चिलिचिलिचिलिचिलि" चतुर्मात्रः । "चिलिचिलिचिलिचिलिचिलि" पञ्चमात्रः पार्थिवः ॥

"अचिकिचिकिचीची किञ्चिन् किचिकिचिकिचित् चिकि[1]चिकि" आप्यः । "कुकुकुकुकुकुकुकुकुकुकु" तैजसः ॥

"विचू विचू विचू वीचिचवीचिन् वीचू वीचिषु" वायव्यः । "गुकू सुकू इकू किकिसत् चरुरु चरुरु अरीधुरूचुरु" आम्बरः ॥

पार्थिवादिक्रमेणोक्ताः पञ्चमात्राः पृथग्विधाः ।
तेषां त्रिरुक्तो यःकश्चित्स लघुस्वर इष्यते॥८८३॥
षोढोदितो गुरुः प्रोक्तो नवप्रोक्तः प्लुतो भवेत् ।
लघौ स्वल्पं गुरौ मध्यं प्लुते पुष्टं फलं वदेत् ॥
पार्थिवः कुरुते हृष्टः सल्लापी जलजं स्वरम् ।
तैजसं मदनाक्रान्त इति शान्तास्त्रयस्स्वराः ॥
वायव्यं कुरुते क्रुद्धः शोकार्तो नाभसं तथा ।

1 "किचि किविचि किविाच कीचिकीचि किचिाकिचि किचिवि" आप्यः.

स्वराविमौ प्रदीप्ताख्यौ विबुधैः परिकीर्तितौ॥८८६
पूर्वदक्षिणदिग्भागे पार्थिवः प्रबलस्स्वरः ।
पश्चिमायां च कौबेर्यां बलवान् जलजस्स्वरः ॥
वायव्ये तैजसे कोणे बलिष्ठस्तैजसस्स्वरः ।
ऐशाने नैरृते कोणे बलीयान्नाभसस्स्वरः ॥
आप्यपार्थिवयोर्मैत्री तयोराप्यो बलाधिकः ।
आप्यतैजसयोर्वैरं तयोराप्यो महाबलः ॥ ८८९ ॥
आप्यमारुतयोर्वैरं बलवान् मारुतस्तयोः ।
मध्यस्थावाम्बराग्नेयौ नाभसस्तु तयोर्बली ॥८९०
नैव शत्रुर्न मित्रं च नाभसाप्यौ परस्परम् ।
तथाऽपि नाभसो नादः प्रबलः परिकीर्कितः ॥
पार्थिवाग्नेययोर्मैत्री तत्र भौमो बलीश्वरः ।
अनिलानलयोर्मैत्री बलवाननिलस्तयोः ॥८९२॥
जलमारुतजौ शब्दौ प्रागुक्तौ भौमवारिजौ ।
तावेव पश्चादुद्भूतौ मित्रे भौमस्य कीर्तितौ ॥
चतुर्णामपि शब्दानां नाभसश्शत्रुरिष्यते ।
एवं स्वराणामुद्दिष्टं मित्रामित्रं बलाबलम्॥८९४
स्वस्यां दिशि फलं पूर्णं तदर्धं मित्रसद्मनि ।
शत्रुक्षेत्रे फलाभावो विपरीतमथापि वा ॥ ८९५॥

भौमादनन्तरं चाप्यः कैलकस्तदनन्तरम् ।
सर्वसिद्धिप्रदौ स्यातां विपरीतौ ततोऽन्यथा॥९९
प्रथमः पार्थिवो नादः पश्चान्मारुतजो यदि ।
लाभपूर्वा तदा हानिः हानेर्लाभो विपर्ययात् ॥
प्रथमो भूमिजो नादो द्वितीयो नाभसो यदि ।
सुखपूर्वं भवेद्दुःखं दुःखात्सौख्यं विपर्ययात् ॥
आप्यस्य पश्चादाग्नेयः फलं कृत्वा विनाशयेत् ।
व्यत्यासेन समुद्भूतौ व्यत्यस्तफलकारिणौ ॥
प्रथमो जलजश्शब्दः ततश्चेद्वायुसम्भवः ।
भयं वित्तविनाशाय वैपरीत्येऽपि तादृशौ ॥१००॥
जलजाद्भौमजः पश्चान्नित्य[1]युद्धाद्भवेन्मृतिः ।
विपरीतक्रमोद्भूतौ शत्रुता मृत्युसूचकौ ॥ १०१ ॥
आग्नेयमारुतौ शब्दौ क्रमाज्जातौ धनापहौ ।
मृतिसंसूचकौ ज्ञेयौ विपरीतक्रमोदितौ ॥ १०२॥
क्रमेण व्युत्क्रमेणापि नादौ तैजसनाभसौ ।
कुरुतः कलहं चोग्रं भयं च सुमहत्तरम् ॥१०३॥
व्यत्यासात् क्रमशो वाऽपि शब्दौ वायव्यनाभसौ।
वित्तनाशं रणे मृत्युं नरस्य कुरुते ध्रुवम् ॥१०४॥

---

[1] मित्र.

अन्यैरभिहितो भौमः कार्यसिद्धिविनाशकृत् ।
अधिकः पार्थिवो नादः सर्वकामफलप्रदः ॥ १०५
त्रयाणां वा चतुर्णां वा पञ्चानां श्रवणे सति ।
पश्चाच्छ्रुतोऽधिको वाऽपि पार्थिवो ध्वनिरुत्तमः ॥
पार्थिवं सालिलं नादं स्वस्थानादूर्ध्वगस्तरोः ।
कुर्वन् लाभं सुखं कीर्तिं जयं शंसति पिङ्गलः ॥
अवतीर्य निजस्थानात्कुर्वन्नादौ शुभावहौ ।
कनिष्ठं फलमाचष्टे क्लेशाल्लाभं विहङ्गमः ॥ १०८॥
वृक्षस्याग्रे रवं कुर्वन् पार्थिवं वारिजं खगः ।
पुष्कलं फलमाख्याति मध्येमध्यमथो लघु॥१०९
विन्यस्य वदने भक्ष्यं भुक्त्वा वा तद्विहङ्गमः ।
रम्यस्थाने स्थितः कुर्वन् शुभौ नादौ शुभं दिशेत्॥
भक्ष्यमुत्सृज्य वक्त्रस्थं यदा वक्ति शुभौ ध्वनी ।
तदा शंसति सम्पत्तेर्हानिं पिङ्गविहङ्गमः ॥ १११॥
अर्चितं पादपं त्यक्त्वा पादपान्तरमाश्रितः ।
रचयन् शोभनं शब्दं दिशेद्देशान्तरे सुखम्॥११२
अम्बरे शुष्कवृक्षे वा भग्नशाखे च कोटरे ।
कुर्वन्नादं शुभं पिङ्गो भङ्ग[1]मुग्रं प्रशंसति ॥ ११३ ॥

[1] भय.

शुभस्थानस्थितो वाऽपि कुर्वन् वाऽपि प्रदक्षिणम्।
कुर्वन् शान्ते शुभादन्यं नादं शंसत्यशोभनम् ॥
वामतः शान्तादिग्वर्ती कुर्वाणश्शोभनं ध्वनिम् ।
शोभनं फलमाचष्टे चिरकालेन पिङ्गलः ॥११५॥
भौमाप्यतैजसैर्नादैर्जयन्ति शुभदेशगाः ।
पिङ्गली प्रीतिमाचष्टे शुभं लाभं जयं यशः॥११६
अर्चयित्वा गणाधीशं सर्वविघ्नविनाशनम् ।
कुमार्या सहिता नार्यस्तिस्रस्सुप्ते जनेऽखिले ॥
अक्षतैः पूरयेयुस्ता यत्किञ्चित्कुडुबादिकम् ।
चण्डिकायै नमस्कृत्वा सप्तकृत्वोऽभिमन्त्रितम् ॥
सम्मार्जनीकृतावेष्टास्स्थापयेयुर्गणाधिपम् ।
व्रजेयुस्तां समादाय रजकस्य निकेतनम्॥११९॥
तद्गेहस्य पुरोभागे निक्षिपेयुस्सिताक्षतान्।
मनोगतं समुद्दिश्य शृणुयुस्सुसमाहिताः ॥१२०॥
श्रूयते वचनं किञ्चिद्रजकालयमध्यगम् ।
नार्या नरेण बालेन प्रोक्तमन्येन केनचित् ॥१२१
स्वैरसल्लापनोद्भूतं शुभं वा यदि वाऽशुभम्।
शृण्वन्तीभिः फलं ज्ञेयं तद्वाक्यार्थविचारतः॥
चण्डालनिलयेऽप्येवं श्रवणे बोधने क्रमः ।

यद्ब्रूयुर्वचनं तत्र तत्तथा न तदन्यथा ॥ १२३ ॥
शाकुनं शास्त्रमालोक्य भाविकार्यविबोधकम् ।
शकुनं वर्णितं सम्यक् सोमेश्वरमहीभुजा ॥ १२४
अवृष्ट्यां तोयरहिते दुर्भिक्षे मरणान्विते ।
परेषां दुस्स्थिते देशे नैव यायात्कथञ्चन ॥ १२५॥
परस्परविरोधेन क्षीयमाणेषु शत्रुषु ।
तद्विनाशो भवेद्यावत्तावत्तिष्ठेच्च बुद्धिमान् ॥१२६॥
स्वस्थासनमुपेक्षाख्यं मार्गरोधासनं तथा ।
दुर्गसाध्यासनं चैव रष्ट्रस्वीकरणासनम् ॥ १२७॥
रमणीयासनं चान्यत्तथा च निकटासनम् ।
दूरमार्गासनं चैव प्रलोभाख्यं तथैव च ॥१२८॥
पराधीनासनं चेति दशमं परिकीर्तितम् ।
इतोऽधिकं न दृश्येत नीतिज्ञैरन्यदासनम् ॥१२९
निष्कण्टके तथा राज्ये संहृते वैरिमण्डले ।
स्वस्थाने या स्थिती राज्ञां स्वस्थासनमिति स्मृतम्॥
यदस्माभिरनुष्ठेयं दैवेन क्रियते हि तत् ।
उग्रदण्डप्रयोगाच्च व्यसनात् भृत्यकर्शनात्[1] ॥१३१
दुर्भिक्षमरकोपेतो विनाशं यास्यति ध्रुवम् ।

---

[1] भृत्यदर्शनात्.

इत्युपेक्ष्य नृपस्थानमुपेक्षासनमुच्यते ॥ १३२ ॥
नद्याः पूर्णप्रवाहेन गमनं रोधितं यदि ।
तेन दोषेण यत् स्थानं मार्गरोधासनं स्थितम् ॥
दुर्गं गृहीतुमुद्युक्तो वारयन् यवसादिकम् ।
तदुपान्ते वसेद्यस्तु दुर्गसाध्यासनं हि तत्॥१३४॥
बलादुपार्जिते राष्ट्रे वशार्थं यत्र तिष्ठति ।
तत्स्थानं कथितं राज्ञां राष्ट्रस्वीकरणासनम्॥१३५
विजिगीषुर्नृपो गत्वा रिपून् हत्वा रणाङ्गणे।
रम्यां वसतिमालोक्य यत्र तिष्ठति सानुगः॥१३६
यवसेन्धनभूयिष्ठे जलधान्यसमन्विते ।
तत्स्थानं नीतितत्त्वज्ञै रमणीयासनं स्मृतम्॥१३७
दूरस्थस्य रिपो राजा विनाशाय समुद्यतः।
समीपे यत्स्थितिं कुर्यात्तद्भवेन्निकटासनम् ॥ १३८
दूरदेशं नृपो गत्वा कृत्वा कार्यमशेषतः ।
विज्ञाय स्वपुरं दूरं यत्र तिष्ठत्यनाकुलः ॥ १३९ ॥
वर्षर्तुव्यत्ययो यावच्छरत्कालस्य सम्भवः ।
तावद्यदुचितं स्थानं दूरमार्गासनं हि तत् ॥१४०॥
हस्त्यश्वधनरत्नानि दुर्गं राष्ट्रं तथैव च ।
किञ्चित्कालं स्थितिः कार्या रिपून् हत्वा ददामि ते॥

इति प्रलोभितोऽन्येन यत्र तिष्ठति भूमिपः।
तत्र लोभासनं नाम कथितं नीतिवेदिभिः॥१४२
मासे पक्षे दशाहे वा षडहे पञ्चरात्रके।
प्रभूतं[1] ते ददामीति प्रलोभ्य स्थापयेन्नृपम्॥१४३
आशया धार्यमाणस्तु तत्र तिष्ठति यश्चिरम्।
प्रलोभासनमेवं वा तदाख्यातं मनीषिभिः॥१४४
स्नेहाद्वा वैरिभावाद्वा गन्तुं देशं स्वकं न यः।
लभते तस्य तत्स्थनं पराधीनासनं स्मृतम्॥
स्वयं हीनबलो राजा जयहेतुं न पश्यति।
बलिना पीड्यमानो यः क्षेमस्थानं समाश्रयेत्॥
तत्संश्रयोऽन्यसंसर्गो दुर्गसंश्रयणं तथा।
इति भेदास्त्रयः प्रोक्ताश्चतुर्थो नोपलभ्यते॥१४७
महता शत्रुणा यस्तु पीडितोऽल्पबलो नृपः।
सत्यसन्धं परिज्ञाय तमेवाश्रयते बुधः॥१४८॥
अन्यान् गुणागुणान्[2] वीक्ष्य शत्रुं यस्तु समं श्रयेत्।
तद्गुणान् नीतितत्वज्ञास्सत्संश्रयमुशन्ति हि॥
शत्रुणा बाध्यमानोऽपि स्वयं चाप्यनुपायकः।
गुणहीनं रिपुं ज्ञात्वा तस्मादन्यं गुणाधिकम्॥

---

[1] प्राभृतं.  [2] बहून् वा सद्गुणान्.

बलिनं कृपया युक्तं धर्मज्ञं सत्यवादिनम् ।
आश्रयेदीदृशं यस्तु सोऽन्यसंश्रय उच्यते ॥१५१
वैरिणा बलयुक्तेन पीडितो ह्यसमो रिपुः ।
यस्तु संश्रयते दुर्गं दुर्गसंश्रय इष्यते ॥ १५२ ॥
बलिनोर्द्विषतोर्मध्ये यश्चात्मानं समर्पयेत् ।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ १५३ ॥
रोगा[1]द्वाऽपि भयाद्वाऽपि योगक्षेमार्थमुद्यतः ।
द्वयोर्मध्ये चिरं कालं द्वैधीभावेन यापयेत् ॥१५४॥
नीतिशास्त्रार्थसारज्ञैर्नामभेदैर्यथार्थतः ।
मिथ्यावित्तसमुद्दिष्टो मिथ्यावचन एव च ॥१५५॥
मिथ्याकारण इत्यन्यस्तथा चोभयवेतनः ।
युग्मप्राभृतकश्चेति द्वैधीभावोऽत्र पञ्चधा ॥ १५६ ॥
चित्ते विरोधमाधत्ते वचसा प्रियभाषणम् ।
द्वैधीभावोऽयमाख्यातो मिथ्यावित्तोऽर्थकोविदैः ॥
वचसा प्रियमाख्याति कर्मणा वर्ततेऽन्यथा ।
द्वैधीभावोऽपरः ख्यातो मिथ्यावचनसंज्ञितः ॥
स्तोकं स्तोकं किमप्यादौ कार्यं विश्वासकारणात् ।
करोति भावदुष्टोऽसौ यावत्कार्यं विनाशयेत् ॥

1 लामा.

एवं यः कुरुते मिथ्या रिपोर्नाशाय पार्थिवः ।
मिथ्याकारण[1]नामाऽसौ द्वैधीभावः प्रकीर्तितः॥
गुप्तं वेतनमेकत्र तथाऽन्यत्र प्रकाशितम् ।
गृहीत्वा यश्चरेन्मायी गुप्तदस्युर्हितेच्छया ॥१६१॥
अलक्षितो रिपोर्मन्त्रं जित्वा स्वस्वामिनेऽर्पयन् ।
यत्र तिष्ठति द्वैविध्यात्स स्यादुभयवेतनः॥१६२॥
मद्रिपुं साधयस्वेति दौतिकं प्राभृतं महत् ।
अन्येनापि समुद्दिश्य दत्तं वाजिगजादिकम् ॥
सन्नाहं प्रेषयिष्यामि साधयिष्यामि ते रिपुम् ।
इति ब्रुवन् विरुद्धाभ्यां द्वाभ्यामर्थं समाहरन् ॥
तयोरज्ञातरूपस्सन् यत्र राजा प्रवर्तते ।
द्वैधीभावं तमप्याहुर्युग्मप्राभृतकं बुधाः ॥ १६५ ॥
द्वैधीभावं समालम्ब्य य इत्थं वर्तते नृपः ।
विपक्षलक्ष्मीमादत्ते मन्त्ररक्षाविचक्षणः ॥ १६६ ॥
सन्धिं च विग्रहं चैव यानमासनमाश्रयम् ।
द्वैधीभावं च यो वेत्ति प्रयोक्तुं शत्रुमण्डले ॥१६७॥
बलवान् कोशसम्पन्नो गुणषट्कक्रियाबुधः ।
स कृत्स्नां पृथिवीं भुङ्क्ते देशकालसहायवित्॥१६८

[1] मिथ्याकरुण.

उपायेषूत्तमं साम भेदो मध्यम इष्यते ।
उपप्रधानमधमं दण्डः कष्टतमस्स्मृतः ॥ १६९ ॥
अपायरहितत्वाच्च द्रव्यहानेरभावतः ।
सिद्धिमायान्ति कार्याणि ततः सामोत्तमं स्मृतम्॥
कुत्सिता भेदमायान्ति न ते विश्वासभूमयः ।
अतस्सन्देहरूपत्वाद्भेदोऽयं मध्यमस्स्मृतः॥१७१॥
वित्तस्य संक्षयः पूर्वं सिद्धिर्दैवे व्यवस्थिता।
उपप्रधानमधमं तेन प्रोक्तं मनीषिभिः ॥ १७२ ॥
लाभार्थं क्रियते युद्धं रणे संशयितो जयः ।
राज्यं च जीवितं चैव दण्डः कष्टतमस्ततः॥१७३
कुपितस्य प्रियं वाक्यं कोपवृद्धौ प्रजायते ।
यथाऽऽज्यस्य प्रतप्तस्य ज्वालायै जलबिन्दवः ॥
कुलीनेषु कृतज्ञेषु सार्द्रचित्तेषु साधुषु ।
कार्यार्थिषु च मेधावी सम्यक् साम प्रयोजयेत् ॥
प्रथमं कर्णसुभगं द्वितीयं दैविकं तथा ।
तृतीयं स्मारकं प्रोक्तं चतुर्थं लोभजं स्मृतम् ॥
तथैव पञ्चमं साम निजार्पणमिति स्मृतम् ।
उपायेषूत्तमं साम कथितं निरुपद्रवम् ॥ १७७ ॥
मधुरैस्सुखसल्लापैश्श्राव्यैश्च हृदयङ्गमैः ।

एवं वचोभिर्यत्साम तत्कर्णसुभगं स्मृतम् ॥१७८
विश्वासजननोपायश्शपथैर्देवपूर्वकैः ।
क्रियते यच्च नीतिज्ञैः साम तद्दैविकं विदुः॥ १७९
यदासीद्बान्धवं पूर्वं साम्प्रतं विस्मृतं त्वया ।
इति संस्मार्यते यत्र साम तत्स्मारकं स्मृ म् ॥
ग्रामं पुरं तथा राष्ट्रं वाजिनं वारणं धनम् ।
दास्यामीति च यत्साम स्मृतं तदिह लोभजम् ॥
भवत्कार्ये मदीयं स्वं शरीरं च मयाऽर्पितम् ।
इति वागर्पिते साम्नि कथितं तन्निजार्पणम् ॥
सामोपायैरसाध्या ये शत्रवो मदमोहिताः ।
भेदोपायेन ते साध्या नृपेण विजिगीषुणा ॥१८३
क्षीरं नीरं यथा हंसो विश्लेषयति संहतम् ।
तथा सुसंहतान् शत्रून् भेदाद्विश्लेषयेत्तु तान्॥१८४
शत्रुस्थैरात्मपुरुषैर्गूढैरुभ वेतनैः ।
भीतावमानितान् क्रुद्धान् भेदयेच्छत्रुसङ्गतान् ॥
प्राणापहो मानघातो धर्महानिश्च बन्धकः ।
दाराभिलाषोऽङ्गभङ्ग इति भेदोऽत्र षड्विधः ॥
मन्त्रस्सम्यङ्मया ज्ञातो नृपस्त्वा हन्तुमुद्यतः ।
अद्य श्वो वाऽतितीक्ष्णैश्च किं तन्नाद्यापि बुध्यसे ॥

पैशुन्येनैवमाख्यानैर्हेतुभिः प्रत्ययात्मकैः ।
भीतिरुत्पाद्यते यत्र स भेदः प्राणहा स्मृतः॥१८८॥
तद्विषा प्रेरितो राजा तव मानं हनिष्यति ।
एवमुद्वेज्य यो भेदो मानभङ्गस्स वर्णितः ॥ १८९
धनिकोऽयं महान् देव तव किञ्चिन्न यच्छति ।
केनाप्युपायेनैतस्माद्धनमाहर्तुमर्हसि ॥ १९० ॥
इति सम्मन्त्र्य भूपेन तद्ब्रूते धनिकाय च ।
अर्थलुब्धो ह्ययं राजा तव द्रव्यं हरिष्यति ॥१९१
यत्रैवं पिशुनत्वेन भिनत्त्युभयचेतनः ।
धनहानिस्त्वयं भेदो नीतिज्ञैस्समुदाहृतः ॥१९२॥
न करोति तव स्वामी विश्वासं त्वयि कर्हिचित् ।
बन्धयित्वा तु निगलैः कारागारे निधास्यति ॥
इत्यविश्वासमुत्थाप्य निजस्वामिहिते रतः ।
यद्भिनत्ति परं बुद्ध्या स भेदो बन्धकस्स्मृतः ॥
विलासी चपलो भोगी रूपवांस्तरुणो विटः ।
अन्तःपुरे मदीयां स्त्रीं कटाक्षैः स्पष्टमीक्षते ॥
वध्योऽयमिति भूपालो मया सार्धममन्त्रयत् ।
इतीमं कुरुते भेदं स स्याद्दाराभिलाषुकः ॥१९६॥

त्वद्भार्यां रूपसंपन्नां नवयौवनशालिनीम् ।
ममाग्रे वर्णयन् राजा सापेक्ष इव लक्षितः ॥
त्वयि जीवत्यलभ्यत्वात्तव द्रोहं विधास्यति ।
दाराभिलाषभेदोऽयमेवं वा परिकीर्तितः ॥ ९९८
अयमस्मिन् कुले जातः कदाचिद्राज्यमिच्छति ।
अङ्गुलिं वा तथा नेत्रे सन्ततिं वा धनानि वा ॥
छेत्तुमिच्छितवान् राजा सर्वथा तत्करिष्यति ।
इति यो निर्मितो भेदस्सोऽङ्गभङ्ग इति स्मृतः ॥
सम्यक् भेदेन शत्रूणां भिनत्ति प्रकृतिं तु यः ।
भेदवज्रेण तद्भिन्नं हृदयं प्रतिभूभुजाम् ॥ १००१ ॥
अर्थभारप्रभेदेन स्वाधिकारव्ययेन च ।
अलब्धवेतनत्वेन द्रव्यापहरणेन च ॥ १००२ ॥
द्विषतां कारणैरेभिर्विरक्ता ये च मन्त्रिणः ।
अमात्यास्सचिवाश्चैव तथा सामन्तमान्यकाः ॥
भृत्याश्च बान्धवाश्चैव ये चान्तर्वर्तिनो जनाः ।
युद्धबुद्धिसहाया ये तेषां दानं प्रयोजयेत् ॥ १००४
अन्ये ये लोभसंयुक्ता व्यसनासक्तचेतसः ।
तेभ्यो दानं प्रयुञ्जीत नृपश्शत्रुजिघांसया ॥
एवं रागविहीना ये स्वकीयास्सचिवादयः ।

तेषामपि प्रयुञ्जीत दानं राज्याभिवृद्धये ॥१००६॥
अभीष्टं हायनं देश्यं करजं दन्तिसप्तिजम् ।
ग्रामजं शासनं भूषा वसनं प्रतिपत्तिजम्॥१००७
आकरं रुक्मजं कन्या वैश्यं वेलाकरं तथा ।
उपप्रदानमेवं तु प्रोक्तं षोडशधा बुधैः ॥ १००८॥
यस्मै यद्रोचते वस्तु तस्मै योग्यानुसारतः ।
यद्दीयते तदाख्यातमभीष्टं दानमुत्तमम् ॥ १००९
एकसंवत्सरं यावत्कुटुम्बभरणक्षमम् ।
यस्य यद्दीयते तत्र तद्दानं हायनं स्मृतम् ॥
राष्ट्रं प्रदीयते यत्तु तद्दानं देश्यमुच्यते ।
राष्ट्रोत्थकरदानं यत्तत्स्मृतं करजं बुधैः ॥ १०११
वारणस्य प्रदानं यत्तद्दानं दन्तिसंज्ञिकम् ।
हयस्य दानमाख्यातं सप्तिजं नीतिकोविदैः ॥
अगृहीतकरो वाऽपि प्रगृहीतकरोऽपि वा ।
ग्रामः प्रदीयते यत्तु तद्दानं ग्रामजं मतम् ॥
पुत्रपौत्रप्रपौत्रेषु दत्तं नैव विलुप्यते ।
अबाध्यत्वेन यत्किञ्चित्तद्दानं शासनं स्मृतम् ॥
रत्नेन जातरूपेण घटितं चारुभूषणम् ।
दीयते यत्तु तद्दानं भूषाख्यं समुदाहृतम् ॥१०१५

नानावर्णविचित्राणि नानासूत्रमयानि च ।
नानादेशसमुत्थानि सूक्ष्माणि च नवानि च ॥
वस्त्राण्यतिमनोज्ञानि प्रभूतानि प्रसादतः ।
दीयन्ते यत्तु तद्दानं वसनं परिकीर्तितम् ॥१०१७
आसनं चामरं छत्रं यानं सम्माननोचितम् ।
नाम यद्दीयते यत्तु तद्दानं प्रतिपत्तिजम् ॥१०१८
रौप्यकाञ्चनरत्नानि जायन्ते यत्र वा भुवः ।
सा खनिर्दीयते यत्र तदाकरमितीरितम् ॥ १०१९
दीयन्ते यत्र निष्काणि प्रभूतानि वराणि च ।
तद्दानं रुक्मजं प्रोक्तमर्थशास्त्रविचक्षणैः ॥ १०२०
भूषणैर्भूषिता कन्या लक्षणैश्च समन्विता ।
विधिवद्दीयते यत्तु कन्यादानं तु तद्विदुः ॥१०२१
रूपयौवनसम्पन्ना नृत्तगीतविशारदा ।
वेश्या प्रदीयते यत्तु तद्दानं वैश्यमुच्यते ॥१०२२
यत्राढ्या बहवस्सन्ति बहिस्स्थोपजीविनः ।
रत्नाकरस्य वेलायां बहुपण्यप्रचारिणः ॥ १०२३
अपूर्वोपायनोपेतं पत्तनं बहुवस्तुदम् ।
दीयते यत्तु तद्दानं वेलाकरमिति स्मृतम् ॥१०२४

यदसाध्यं हि भेदेन[1] तद्दानेन प्रसाध्यते ।
सर्वेषामप्युपायानां दानं श्रेष्ठतमं स्मृतम् ॥
सुदत्तेनेह भवति दानेनोभयलोकजित् ।
न सोऽस्ति लोके दानेन वशगो यो न जायते ॥
देवा अपि भवन्तीह वशगास्सर्वदेहिनाम् ।
दानं श्रेयस्करं श्रेष्ठं दानं सर्वार्थसाधनम् ॥
दानशाली नृपो लोके देववत्पूज्यते जनैः ।
उपायत्रितयेनापि यो न शक्यो भवेद्रिपुः ॥
तस्य दण्डं प्रयुञ्जीत बलवान् यदि भूपतिः ।
(सामादीनां प्रयोक्तारमशक्यं मन्यते [2]द्विषम्) ॥
तस्माद्दण्डं प्रयुञ्जीत दण्डो हि वशकृन्नृणाम् ।
बलिष्ठेन तथा कार्या दण्डा द्वादशभेदजाः ॥
अशक्तेन त्रयः कार्या एवं पञ्चदश स्मृताः ।
अन्ये च दण्डाः कर्तव्याः भूभुजा धर्मवर्तिना ॥
वधः क्लेशोऽर्थहरणो जनानां वृत्तरक्षकः ।
देशनाशश्च शत्रूणां जनाङ्गच्छेदकस्तथा ॥ १०३२
गोग्रहो धान्यहरणो बन्दीग्राहस्तथाऽपरः ।
देशहारो धनादानः सर्वस्वहरणोऽपरः ॥ १०३३॥

---

1 षोडशात्मकभेदन 2 नास्ति.

दुर्गभङ्गः स्थानदाहो देशनिर्वासकस्तथा ।
युद्धे वधो महादण्डः शत्रुसंहारकारकः ॥ १०३४
उपायानां तुरीयश्च कथितस्सोमभूभुजा ।
वनानि यत्र छिद्यन्ते भिद्यन्ते च जलाशयाः ॥
ग्रामाश्च यत्र दाह्यन्ते स दण्डो देशनाशकः ।
नासिका श्रवणद्वन्द्वं छिद्यन्ते देशवासिनाम् ॥
नराणां यत्र दण्डोऽसौ जनाङ्गच्छेदनो मतः ।
देशजाः पशवस्सर्वे गृह्यन्ते सहसा बलात् ॥
दण्डोऽसौ गोग्रहो नाम विख्यातः परभूमिषु ।
गर्तेषु पिहितं धान्यं क्षेत्रे सस्यशिखागतम् ॥
आपणे पुञ्जितं यच्च खले राशीकृतं च यत् ।
तत्सर्वं ह्रियते यत्र रिपुराष्ट्रेषु संस्थितम् ॥१०३९
दण्डोऽसौ धान्यहरणो देशदुर्भिक्षकारकः ।
कुटुम्बिनो गृहस्था ये धनिका व्यवहारिणः ॥
नीयन्ते यत्र बध्वा ते स बन्दीग्राह उच्यते ।
जनानामभयं दत्वा भयं भङ्क्त्वा तथाऽन्यजम् ॥
आत्मसात्क्रियते राष्ट्रं स दण्डो देशहारकः ।
आक्रम्य सैनिकैर्ग्रामात् बलात्कृत्वा सुसङ्गतम् ॥
आहरेत्काञ्चनं दण्डो धनहारस्स उच्यते ।

महत्या सेनया युक्तः ख्यातं नगरपट्टणम् ॥
आवेष्ट्य लुप्यते यत्र धनधान्यं गवादिकम् ।
लोहभाण्डानि वस्त्राणि गृहोपकरणानि च ॥
यस्माच्चादीयते सर्वं सर्वस्वहरणो हि सः ।
चतुरश्रं लिखेत्तज्ज्ञः कोटाचक्रं विराजितम् ॥
तत्र न्यासं प्रकुर्वीत नक्षत्राणां यथाक्रमम् ।
वासवेशानकोणेषु कृत्तिकादिचतुष्टयम् ॥१०४६॥
पूर्वस्यां दिशि वाऽऽग्नेयकोणादन्तर्दिशस्तथा ।
चतुष्टयं मखादीनां पुनर्निर्गमतो लिखेत ॥१०४७
चित्रादित्रितयं याम्ये नैर्ऋतेऽन्तर्दिशो लिखेत् ।
मैत्रादिकचतुष्कं तु निर्गच्छन्न पश्चिमे लिखेत् ॥
उत्तरादित्रयं तद्वत् कोणाद्वायोर्दिशो लिखेत् ।
धनिष्ठादिचतुष्कं तु पुनरुत्तरनिर्गतम् ॥ १०४९ ॥
रेवत्यादित्रयं लेख्यं नक्षत्राणामयं विधिः ।
अन्तस्स्थचतुरश्रायां रेखायां मध्यतस्स्थिताः ॥
स्तम्भतारास्समाख्याता ज्योतिर्विद्याविशारदैः ।
तस्य बाह्यस्थितास्तारा: अष्टौ प्राकारसञ्ज्ञताः ॥
ततो बाह्यस्थिताश्चान्यास्ताराः बाह्याः प्रकीर्तिताः।
स्तम्भप्राकारवर्तीनि नक्षत्राण्यान्तराणि हि ॥

इतराणि विजानीयाद्बाह्यानीति विचक्षणः ।
अन्तस्स्थिते ग्रहे पापे कोटं नाशं प्रपद्यते ॥
शुभग्रहे च बाह्यस्थे बहिस्स्थाने जयो भवेत् ।
यस्यां दिशि भवेच्चन्द्रस्तस्यां खण्डी विनिष्पतेत् ॥
खण्डिस्थानं परिज्ञाय तत्र कुर्वीत सङ्गरम् ।
परिखासंस्थितं तोयं खनित्वा परिवाहयेत् ॥
सेतुं वा कारयेत्तत्र पूरयेद्वा मृदादिभिः ।
यद्यगाधं महत्तोयं तरेद्वा तत्प्लवादिभिः ॥ १०५६॥
एवमुत्तार्य सैन्यानि दुर्गं वारिमयं जयेत् ।
दुरारोहं तु गिरिजं दुर्गमावेष्ट्य सेनया ॥१०५७॥
अप्रवेशात्तु धान्यानां दुर्गस्थानामनिर्गमात् ।
अन्नक्षयातिरोधाच्च निर्बन्धाद्भेदतोऽपि च ॥
एवंविधैरुपायैश्च गिरिदुर्गं जयेन्नृपः ।
पाषाणैरिष्टकाभिर्वा मृदा वा निर्मितं च यत् ॥
तद्दुर्गं यन्त्रपाषाणैः खननैश्च विदारयेत्[1] ।
मण्डपैश्चर्मभिर्नद्धैश्चलद्भिश्चक्रयन्त्रकैः ॥ १०६० ॥
नदद्भिस्संस्थितैः योधैः प्रसरद्भिस्समन्ततः ।
अग्नितैलमुखैर्बाणैर्वायुसंप्रेरितैरितः ॥ १०६१ ॥

---
1 निपातयेत्

आरोहद्भिर्भटानीकैः शूरैर्निश्श्रेणिकान्वितैः ।
दन्तिदन्तदृढाघातैः योधोन्मुक्तशरोत्करैः ॥१०६३
प्रतिदुर्गविधानेन दुर्गत्रितयमाहरेत् ।
कुठारैश्शतसाहस्रैश्छेदयेद्विटपांस्तरून् ॥
दहेद्दावाग्निना वाऽपि वनदुर्गं जयेन्नृपः ।
पूर्णानि जलभाण्डानि तोयैर्दूरसमाहृतैः ॥
महिषोष्ट्रबलीवर्दैर्बुध्नाद्यैरधिकैरपि ।
आनीय वनजानीकैस्सन्तर्प्य च चतुर्दिशम् ॥
आवेष्ट्य च खनेत्कूपानगाधांश्च समन्ततः ।
आरभेत ततो युद्धं यन्त्रपाषाणपावकैः ॥ १०६५
अनलं चानुकूलेन वायुना दीपयेत्ततः ।
अग्नितैलमयं वह्निं सर्वतो धुक्षयेदलम् ॥ १०६६
जलाभावेन सन्तप्ता नाशमेष्यन्ति दुर्गगाः ।
तोयपानेन सन्तृप्तं कुर्यादात्मबलं नृपः ॥१०६७॥
एवं प्रकारैरन्यैश्च मरुदुर्गं प्रसाधयेत् ।
साधयेद्दारुजं दुर्गं चूर्णनाद्गजघट्टनैः ॥ १०६८॥
पाषाणपातिभिर्यन्त्रैर्दाहनाद्दहनेन वा ।
नरदुर्गं जयेद्राजा गजाश्वबलसंयुतः ॥१०६९॥
एवं दण्डस्समाख्यातो दुर्गभङ्गसमाह्वयः ।

यस्मिन् पुरे वसेच्छत्रुस्सपुत्रबलवाहनः ॥१०७०
तत्पुरं राजनिलयं साट्टप्राकारतोरणम् ।
अन्तःपुरं पुरन्ध्रीणां रम्याणि भवनानि च॥१०७१
निकेतनानि पुत्राणाममात्यानां गृहाणि च ।
सचिवानां निवासांश्च मन्त्रिणां सदनानि च ॥
अन्येषां च मनुष्याणां मन्दिराणि बहूनि च ।
मन्दुरा गजशालाश्च विविधान्यापणान्यपि ॥
भस्मसात्कुरुते यत्र स दण्डः स्थानदाहकः ।
देशत्यागात्परिभ्रष्टः कृतो भोगपरिच्युतः॥१०७४
गिरिकन्दरकान्तारनिकुञ्जभवनाश्रयः ।
वियुक्तो दारपुत्रैश्च बन्धुभिस्सचिवैस्तथा ॥
क्षुत्पीपासापरीतश्च चिन्ताशोकसमन्वितः ।
यानासनविहीनश्च गजवाजिविवर्जितः ॥
शत्रोरेवंविधो दण्डो देशनिर्वासकस्स्मृतः ।
ज्ञात्वा स्वरबलं राजा बलं भूमेस्तथैव च ॥१०७७
कुर्वीत सर्वकार्याणि सङ्ग्रामं तु विशेषतः ।
अतस्स्वरबलं वक्ष्ये दशधा प्रविभाजितम् ॥
मात्रा वर्णा ग्रहो जीवो राशिरेवं च पञ्चधा ।
बालः कुमारस्तरुणो वृद्धश्चास्तंगतस्स्वरः ॥

द्वितीयः पञ्चभेदोऽयमित्थं दशविधस्स्वरः ।
अकारः प्रथमस्तस्मिन्निकारस्तदनन्तरम् ॥
उकारश्चैवमेकार ओकारो मातृकापुरः ।
ककारादिहकारान्तान् वर्णान् ङ ञ ण वर्जितान् ॥
पञ्चत्रिंशत्सु कोष्ठेषु पञ्च पञ्च क्रमान्न्यसेत् ।
लेखाष्षडूर्ध्वगाः कार्यास्तिर्यगष्टौ च राशयः ॥
पञ्चत्रिंशद्भवन्त्येवं रेखानां[1] सन्निवेशतः ।
तत्रादिपञ्चकोष्ठेषु पञ्चमात्रास्वरान् क्रमात् ॥
लिखेद्वर्णानधस्तेषां कादीन् ङ ञ ण वर्जितान् ।
अकारपङ्क्तौ ये वर्णा अधोऽधस्संव्यवस्थिताः ॥
अकारसमधर्माणां सर्वे वर्णाः स्वराश्च ते ।
इकारादिस्वरेष्वेवं अधस्ताद्ये व्यवस्थिताः ॥
तत्तद्धर्माण एव स्युस्ते वर्णाः स्वरसंज्ञिताः ।
नामादौ यो भवेद्वर्णः स स्वरः परिकीर्तितः ॥
संयोगे प्रथमो ग्राह्यः स्वराणां नियमो न हि ।
मात्रास्वरास्समाख्यातास्तथा वर्णस्वरा मया ॥
ग्रहस्वरा निरूप्यन्ते साम्प्रतं राशिभेदतः ।
मेषवृश्चिकसिंहानामकारस्स्याद्ग्रहस्वरः ॥ १०८८॥

[1] कोष्ठाना.

कर्किदम्पतिकन्यानामिकारस्स्याद्ग्रहस्वरः ।
कोदण्डे शफरे चैव उकारस्स्याद्ग्रहस्वरः॥१०८९
वृषे तुलायां सम्प्रोक्त एकारस्स्याद्ग्रहस्वरः ।
कलशे मकरे राशावोकारस्स्याद्ग्रहस्वरः ॥
एवं ग्रहस्वराः प्रोक्ताः कथ्यन्ते जीवसंज्ञिताः ।
यत्र नाम्नि च यावन्तो वर्णाः स्वरसमन्विताः ॥
तांश्च वर्गक्रमेणैव गणयेच्च स्वरांस्तथा ।
गणयित्वा तु तं राशिं विभजेत्पञ्चभिः पुनः ॥
अवशिष्टस्तु यो राशिर्जीवस्वर इति स्मृतः ।
ग्रहस्वरस्समाख्यातः प्रोक्तो जीवस्वरस्तथा ॥
राशिस्वरमथो वक्ष्ये स्वरशास्त्रानुसारतः ।
प्रोक्तो राशिस्वराकारो रेवत्यादिषु सप्तसु ॥
एवं परेष्विकाराद्याः प्रोक्ताः पञ्चसु पञ्चसु ।
राशिस्वरास्समाख्याता वक्ष्यन्त उदितादयः ॥
उदेत्यकारो नन्दायां भद्रायामिस्वरस्सदा ।
जयासूकारस्सर्वासु भवेदुदयवान् सदा ॥१०९६॥
उदेति रिक्तास्वेकारः ओंकारः पूर्णिके तिथौ ।
उदितः प्रथमेऽह्नि स्याद्द्वितीयेऽह्नि कुमारकः ॥
तृतीये तरुणः ख्यातश्चतुर्थे स्थविरो भवेत् ।

पञ्चमेऽहनि पञ्चत्वं स्वरो याति विनिश्चितम् ॥
आकारादिषु सर्वेषु क्रमोऽयं परिकीर्तितः ।
आकारादिस्वराः पञ्च प्रकृतित्वेन रूपिताः ॥
वर्णादिस्वरभेदोऽपि ककारादिषु सङ्गतः ।
यस्यकस्यापि नामादौ योऽसौ वर्णः प्रदृश्यते ॥
व्यवस्थां तस्य वर्णस्य विचार्य फलमादिशेत् ।
मेषादिराशियोगेषु सम्प्रोक्ता ये ग्रहस्वराः ॥
तेषां बलं विजानीयात् ज्ञात्वा कर्म समाचरेत् ।
सिंहस्याधिपतिस्सूर्यः कर्कटस्य निशापतिः ॥
मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ।
चापे मीने सुराचार्यस्तुलायां वृषभे कविः ॥
कुम्भे च मकरे सौरिः प्रभुरूपेण कीर्तितः ।
ऋतुकालदिशारुद्रैस्सूर्यश्शुभकरो भवेत् । ११०४
जन्मसंन्ध्यर्तुसूर्यैश्च दिगीशानैश्शुभश्शशी ।
हरनेत्रकुमारास्यरुद्रैर्भौमश्शुभावहः ॥ ११०५ ॥
पक्षाब्धिरसदिङ्नागपङ्क्तिरुद्रैर्बुधश्शुभः ।
नराङ्ग्निबाणमुनिभिर्ग्रहरुद्रैर्गुरुश्शुभः ॥ ११०६ ॥
एकद्वित्रिचतुःपञ्चवसुरत्नेशभास्करैः ।
सुरारातिगुरुश्शुक्रः स्थानैरेभिश्शुभावहः ॥११०७

कृशानुरसरुद्रैश्च शुभकारी शनैश्वरः ।
स्वस्य ग्रहबलं प्राप्य परेषां ग्रहदूषणम्॥ ११०८
कुर्वीत तुमुलं युद्धं शत्रुसंहारकारकम् ।
जीवस्वरगतान् वर्णान् गणयित्वा विचक्षणः ॥
यत्र नास्ति निजाधिक्यं तत्र कुर्वीत सङ्गरम् ।
रेवत्यादिषु धिष्ण्येषु सङ्गता यत्र ये ग्रहाः ॥
राशिस्वरे विचार्यास्ते शुभास्ते युद्धमाचरेत् ।
एकस्वरश्चेदुभयोः प्रीतिं प्रकुरुते पराम् ॥ ११११
द्वितीयः कुरुते मानं तृतीयः कार्यपोषकः ।
उपेक्षकश्चतुर्थश्च पञ्चमो जयनाशनः ॥ १११२ ॥
स्वरमैत्रीं विदित्वैवं नृपः कुर्वीत सङ्गरम् ।
मात्रास्वरो यदोदेति तदा कुर्वीत शोभनम् ॥
गर्भाधानादिकं कर्म निधिधान्यादिसङ्ग्रहम् ।
वापनं सर्वसस्यानां पुरवेश्मप्रवेशनम् ॥ १११४॥
रसायनप्रयोगं च व्याधीनां च चिकित्सितम् ।
मात्रास्वरे कुमारे तु विवाहः प्रीतिकृद्भवेत् ॥
भृत्यानां सङ्ग्रहश्शस्तः स्वामिसंश्रयणं तथा ।
उत्कोचनमरातीनां ग्रामगेहप्रवेशनम् ॥ १११६॥
वैरिनिर्मूलनोद्युक्तां यात्रां कुर्वीत भूपतिः ।

यूनि मात्रास्वरे जाते पट्टबन्धाभिषेचनम् ॥ ११७
गजाद्यारोहणं शस्तं वरनारिसमागमः ।
द्यूतमाहवकर्माणि यात्रालेखविसर्जनम् ॥ ११८
कुर्वीत कदनं राजा रिपूणां प्राणखण्डनम् ।
यदा मात्रास्वरो वृद्धस्तदा सन्धिर्विधीयते ॥
शान्तिकं पौष्टिकं कर्म मोक्षदीक्षां समाचरेत् ।
मृते मात्रास्वरे जाते कुर्यादनशनव्रतम् ॥ ११२०
विशेदग्निं जलं वाऽपि गच्छेन्मार्गमनन्तकम् ।
एवं स्वरबलं प्रोक्तं कर्माणि विविधानि च ॥
इदानीं भूबलं वक्ष्ये विजयो येन लप्स्यते ।
चतुरश्रं लिखेच्चक्रं तन्मध्ये चाष्टकोणकम् ॥
आरभ्य पूर्वदिग्भागाद्रेखामावर्तयेत्सुधीः ।
पूर्वादारभ्य[1] वायव्यं वायव्याद्याम्यमानयेत् ॥
याम्यादीशानदिग्भागमैशानात्पश्चिमं नयेत् ।
पश्चिमात्कोणमाग्नेयमाग्नेयादुत्तरं नयेत् ॥
उत्तरान्नैर्ऋतं कोणं नैर्ऋतादैन्द्रमानयेत् ।
एवमष्टाश्रकं चक्रं जायते सन्निवेशतः ॥
तत्र चैत्रादिमासानां विन्यासो दिक्षु वक्ष्यते ।

1 पूर्वान्नयेत.

चैत्रमासोऽर्धवैशाखः पूर्वभागो भवेत्सदा ॥११२६
अर्धं वैशाखमासस्य ज्येष्ठं वायव्यतः क्षिपेत् ।
आषाढं श्रावणस्यार्धं याम्यभागे प्रकल्पयेत् ॥
श्रावणस्यार्धमैशान्यां नभस्यं च विनिक्षिपेत् ।
आश्विनं कार्तिकस्यार्धं वारुण्यां दिशि विन्यसेत् ॥
अर्धं कार्तिकमासस्य मार्गशीर्षं हुताशने ।
पौषमर्धं च माघस्य कौबेर्यां ककुभि क्षिपेत् ॥
माघस्यार्धं फाल्गुनं च नैर्ऋत्यां दिशि कल्पयेत् ।
यस्यां दिशि स्थितो मासः सार्धस्तत्रोदयो भवेत् ॥
तावत्कालं भुवस्सोऽपि यावन्नाडीचतुष्टयम् ।
यामार्धं तु बलं भूमेः क्रमाद्दिक्षु व्यवस्थितम् ॥
रेखाविन्यासमार्गेण क्रमाद्भ्राम्यति मेदिनी ।
उदयादस्तपर्यन्तमस्तादप्युदयावधि ॥ ११३२ ॥
चतुर्यामेषु मेदिन्यां दिक्षु भ्रमणमष्टसु ।
भूबलं पृष्ठतः कार्यं दक्षिणे वा जिगीषुणा ॥
एवमन्यानि कार्याणि सिद्धिं यान्ति विनिश्चितम् ।
अस्यैव चक्रराजस्य कोणानाश्रित्य विन्यसेत् ॥
अष्टौ वर्गानकारादीन् प्रादक्षिण्येन पूर्वतः ।
अवर्गे गरुडः प्रोक्तः कवर्गे पृषदंशकः ॥११३५॥

चवर्गे मृगराजस्स्यात् टवर्गे सरमासुतः ।
तवर्गे पन्नगः प्रोक्तः पवर्गे मूषकस्तथा ॥ ११३६
यवर्गे तु मृगः प्रोक्तः शवर्गे मेष उच्यते ।
पूर्वान्नैर्ऋत्यपर्यन्तं भक्षकास्समवस्थिताः ॥११३७
पश्चिमाद्रौद्रदिग्भागो यावद्भक्षा व्यवस्थिताः ।
भक्षकात्पञ्चमे स्थाने स्थितो भजति भक्ष्यताम् ॥
तस्माद्विचार्य यत्नेन शत्रुं पञ्चमतां नयेत् ।
एवं नामबलं चक्रे विचार्य पृथिवीपतिः ॥
द्यूतं समाह्वये युद्धमारभेत जयोत्सुकः ।
ब्रह्माणी पूर्वदिग्भागे प्रतिपन्नवमीतिथौ ॥
द्वितीयायां दशम्यां च माहेशी सौम्यदिग्गता ।
एकादश्यां तृतीयायां कौमारी वह्निदिक्स्थिता ॥
द्वादश्यां च चतुर्थ्यां च वैष्णवी नैर्ऋताश्रिता ।
पञ्चम्यां तु त्रयोदश्यां वाराही दक्षिणे स्थिता ॥
चतुर्दश्यां तथा षष्ठ्यां इन्द्राणी पश्चिमोदया ।
सप्तम्यां पौर्णमास्यां च वायव्ये चण्डिकास्थितिः॥
अमावास्याष्टमीतिथ्योर्महालक्ष्मीस्तथैशगा ।
दक्षिणे पृष्ठतः कार्या योगिन्यो विजिगीषुणा ॥
योगिनीनां बलं चैवं कथितं सोमभूभुजा ।

युद्धपूर्वदिने राजा कृतोत्साहस्सभागतः ॥११४५॥
कुमारमण्डलाधीशान् सामन्तान् मान्यकानपि ।
सुवर्णवस्त्राभरणैस्तोषयेत्सैनिकांस्तथा ॥११४६॥
वाग्भिः प्रोत्साहयेत्तांश्च गुणकीर्तनमाननैः ।
तेषां प्रतिज्ञास्संश्रुत्य सुभटानां नृपोत्तमः ॥११४७
मातङ्गान् मदसंयुक्तान् वाजिनश्च जवोत्तमान् ।
दद्याद्यथार्हं सर्वेषां सङ्ग्रामजयकाङ्क्षया ॥ ११४८
ततो विसर्जयेत्सर्वान् युद्धाय कृतनिश्चयः ।
तस्यां रात्र्यामलातैश्च पूरयेद्गगनाङ्गणम् ॥ ११४९
महातूर्यप्रघोषैश्च काहलाशङ्खनिस्स्वनैः ।
सिंहनादैर्भटानां तु त्रासयेद्रिपुसैनिकान् ॥ ११५०
अधिवास्य ततो राजा शस्त्राणि कुलदेवताः ।
ततश्शयीत मेदिन्यां कुशानास्तीर्य यत्नतः ॥
ततः प्रातस्समुत्थाय निरीक्ष्य घृतदर्पणे ।
स्नात्वा तीर्थजलैः पुण्यैः श्वेताम्बर[1]विभूषितः ॥
समाराध्य जगन्नाथमिष्टमिष्टफलप्रदम् ।
ततः कृत्वा महापूजां विविधां कुलदैवते ॥११५३
धनं भूमिं हिरण्यं च विप्रेभ्यो विधिनाऽर्पयेत् ।

1 चित्राम्बर.

तदाशिषस्समादाय नीराजितहयद्विपः ॥ ११५४
दक्षिणाग्रखुरोल्लेखान् हयानां हेषितादपि ।
वामेतरविषाणाग्रवेष्टनेन करेण च ॥ ११५५ ॥
बृंहितेन गजानां ज जानीयाज्जयमञ्जसा ।
नराणां शुभवाक्यैश्च मङ्गळद्रव्यदर्शनैः ॥ ११५६
प्रदक्षिणागमैश्चापि भारद्वाजशिखण्डिनाम् ।
अन्यैश्च शकुनैर्भद्रैर्जयमङ्गलसूचकैः ॥ ११५७ ॥
दक्षिणाक्षिपरिस्पन्दाद्दक्षिणस्य भुजस्य च ।
मनसश्च प्रसादेन स्वानुकूलानिलेन च ॥११५८॥
एवं निमित्तैर्निश्चित्य जयं समरदुर्जयः ।
शुभस्थानस्थितैस्सर्वैर्ग्रहैस्ताराभिरेव च ॥ ११५९
उदितेन स्वरेणाथ जयभूमिबलेन च ।
निमित्तैर्विहितोत्साहो निर्गत्य निजमान्दिरात् ॥
ताडयित्वा महाभेरीं प्रतिसैनिकभीषणीम् ।
धनुषां द्वे शते गत्वा तत्र स्थित्वा नृपोत्तमः ॥
मेलयित्वा बलं सर्वमेवमाघोषयेत्ततः ।
तस्मै दास्यामि नियुतं राजानं हन्ति यो रणे ॥
तत्कुमारनिहन्तॄणां दास्यामि प्रयुतत्रयम् ।

सामन्तमण्डलाधीशहन्तॄणां प्रयुतं तथा[1] ॥११६३
सचिवामात्यहन्तॄणामयुतं पारितोषिकम् ।
प्रधानयोधहन्तॄणां दास्ये पञ्चसहस्रकम् ॥ ११६४
द्विसाहस्रं प्रसादेन प्रदास्ये गजवाजिनाम् ।
सहस्रं प्रतिदास्यामि स्यन्दनस्य निपातिनाम् ॥
अश्वसादिनिहन्तॄणा प्रदास्ये शतपञ्चकम् ।
शतं तस्मै प्रदास्यामि समानयति यच्छिरः ॥
एवं प्रलोभ्य तान् सर्वान् प्रयायाद्युद्धसम्मुखः ।
सुभटान् बलसंयुक्तान् हययुद्धविशारदान् ॥
वरवाजिसमारूढान् भूपरीक्षाविचक्षणान् ।
द्विशतं वा तदर्धं वा प्रापयेद्धयसादिनः ॥ ११६८
पुरस्संस्थापयेद्राजा युद्धभूमिपरीक्षणे ।
गत्वा समाहितानां तु विज्ञाप्य च भुवो गुणान् ॥
परेषां व्यूहरचनां परिज्ञाय क्षितीश्वरः ।
संस्थूलस्थाणुवल्मीकवृक्षगुल्मोपकण्टके ॥ ११७०
भूभागे रचयेद्राजा पत्तिव्यूहं विचक्षणः ।
अल्पवृक्षोपलच्छिद्रा लङ्घनीयदरीस्थिता ॥११७१
निश्शर्करा विपङ्का भूरश्वव्यूहाय शस्यते ।

[1] मण्डलाधीशहन्तॄणां प्रयुतं पारितोषिकम्.

निःस्थाणुसिकताऽपङ्का निर्वल्मीकोपला समा ॥
केदारव्रजनिश्वभ्रवृक्षगुल्मविवर्जिता ।
निरुत्खाता निर्दरणखुरचङ्क्रमणक्षमा ॥ ११७३ ॥
स्थिरा चक्रसमा धात्री रथव्यूहे प्रशस्यते ।
सुगम्यशैला विषमा मृदुवृक्षावभेदिनी ॥ ११७४
सुपङ्कदरभङ्गा भूर्गजव्यूहे वरा मता ।
सर्वदोषोज्झिता भूमिः कुत्रचिद्वारिसंयुता॥११७५
विशाला गुणभूयिष्ठा चतुरङ्गबलोचिता ।
एवं परीक्ष्य भूभागं यस्मिन् यत्र यथोचितम् ॥
तत्र संरचयेद्व्यूहं नृपो युद्धविशारदः ।
सर्वलक्षणसम्पूर्णे भूभागे रिपुमर्दनः ॥ ११७७ ॥
रचयेदुत्तमं व्यूहं परव्यूहविनाशकम्[1] ।
मुखं पूर्वविभागस्स्यादुरश्च तदनन्तरम् ॥ ११७८
उरसः पश्चिमे भागे प्रोरस्यं परिकीर्तितम् ।
प्रोरस्यस्य तथा पृष्ठे प्रतिग्रह इति स्मृतः॥११७९
कक्षौ प्रकक्षौ पक्षौ च प्रपक्षौ पार्श्वयोः क्रमात् ।
प्रतिग्रहोऽपरो भागः पृष्ठमित्यभिधीयते ॥
एवं व्यूहविभागं च विज्ञाय नृपतिस्ततः ।

[1] विभेदकम्.

मुखे मदमुखं नागं शूरारूढं सुशिक्षितम् ॥११८१
तनुत्राणसमोपेतं योधद्वयसमन्वितम् ।
पश्चिमासनरूढेन सुभटेन समन्वितम् ॥ ११८२
त्रिशतैष्षट्छतैर्वाऽपि नवभिर्वा तथा शतैः ।
त्रिधा विभक्तैस्सुभटैः स्थानत्रयसुसंस्थितैः॥ ११८३
पृष्ठे च कक्षभागे च रक्षितं खड्गपाणिभिः ।
प्रकक्षदेशे निक्षिप्तैश्चण्डकोदण्डमण्डितैः ॥ ११८४
सुभटैश्शतसङ्ख्याकैस्सुलक्ष्यैर्दृढघातिभिः ।
पक्षदेशे तथा शूरैः शक्तिखेटकधारिभिः ॥ ११८५
सहस्रद्वयसंख्यातैस्तदर्धैर्वा शतैर्वृतम् ।
प्रपक्षे जवसंयुक्तैर्गात्रत्राणसुरक्षितैः ॥ ११८६
अश्वैस्सर्वायुधोपेतैर्वाहकैश्च समन्वितैः ।
शतपञ्चकसङ्ख्यातैः प्रपक्षद्वयकल्पितैः ॥ ११८७
तुरङ्गैः पत्तिभिश्शूरैरावृतं पुरतो न्यसेत् ।
दारणं शत्रुसैन्यानां वारणं वैरिवारणम् ॥
एवंविधबलोपेतं व्यूहस्याग्रे नियोजयेत् ।
द्विमुखं त्रिमुखं तद्वदेकवक्त्रमथापि वा ॥ ११८९
परव्यूहस्य भेदार्थं कुर्याद्व्यूहमुखं नृपः ॥
उरस्स्थाने महीपालश्श्रेणमाटविकं बलम् ॥

अमित्रजं तथा फल्गु युद्धभूमौ प्रकल्पयेत् ।
प्रोरस्ये युद्धभाण्डानि शस्त्राणि विविधानि च ॥
वारि भूरि नयेदुष्ट्रैः तृषार्तानां सुतृप्तये ।
प्रतिग्रहप्रदेशे तु स्वयं तिष्ठेन्महीपतिः ॥ ११९२
भद्रलक्षणसम्पूर्णमैरावतकुलोद्भवम् ।
विष्ण्वंशकं शुभानूकं कालिङ्गवनसम्भवम् ॥ ११९३
भूभृच्छिखरसञ्चारं शिक्षितं तु वधावधे ।
मदावस्थं च कुर्वीत सम्प्राप्तं गिरिसन्निभम् ॥
शूरं महाबलं दान्तं धीरमन्वर्थवेदिनम् ।
सुवर्णं घटितोदारपक्षरक्षासमन्वितम् ॥११९५॥
वक्त्रत्राणसमोपेतं दृढं च रणधारिणम् ।
मयूरपुच्छगुच्छाङ्कध्वजदण्डवि[1]मण्डितम् ॥
नानावर्णविचित्राङ्कं पताकापरिशोभितम् ।
तैश्चैकान्तस्थितैर्योधैर्मध्ये कुन्तधरोद्धतम् ॥
पश्चाच्च[2] सादिना युक्तं शक्तितोमरपाणिना ।
अन्तरारूढशूरेण खेटकद्वयधारिणा ॥ ११९८ ॥
ईदृग्गुणयुतं नागमारोहेद्विजयोद्यतः ।
विज्ञातनामभिर्मौलैः कृत्तिकाचर्मपाणिभिः ॥

1 मण्डल. 2 पाश्चात्य·

अङ्गरक्षान्वितैश्शूरैर्वृतस्स्वस्वाङ्गरक्षकैः ।
कक्षस्थैर्दशसाहस्रैस्तदर्धैर्वा सुरक्षितः ॥ १२००॥
प्रकक्षे सचिवामात्यकुमारेभभटान्वितः ।
मित्रभृत्यबलैः कक्षे चापसायकधारिभिः ॥१२०१
शक्तितोमरनिस्त्रिंशकुन्तमुद्गरपाणिभिः ।
वरवारणसन्नद्धैस्सुभटैर्लक्षसम्मितैः ॥ १२०२॥
क्रमशः स्थापितैर्योधैर्यथोदीरितनामभिः ।
नानायुधधरैर्वीरैरश्वारूढैस्सुशिक्षितैः ॥ १२०३॥
प्रकक्षे युतयुग्मेन संवृतश्च महीपतिः ।
पृष्ठभूमौ वशारूढपुष्पकान्तरसंस्थितः ॥
अवरोधवधूबृन्दैः रक्षिभिः परिरक्षितः ।
धनुकाध्यासिताशेषकोशेनाधिष्ठितस्तथा ॥
तेषां तु पृष्ठरक्षार्थं नरवाजिबलं न्यसेत् ।
ईदृशीं व्यूहरचनां विधाय परवीरहाम् ॥
व्रजेदब्धिरिव क्षुब्धो निगिरन् परवाहिनीम् ।
शूराणां सिंहनादैश्च खुरारावैश्च वाजिनाम् ॥
महामात्रकरास्फालमातङ्गाङ्गणगर्जितैः ।
भेरीप्रहारघोषैश्च काहलाशङ्खनिस्स्वनैः ॥ १२०८
युद्धाशंसिमहातूर्यनिनादैः स्फोटयन् दिशः ।

यतः फल्गु यतो भिन्नं यतो दूष्यैरधिष्ठितम् ॥
तद्बलं प्रथमं हन्यादात्मनश्चोपबृंहयेत् ।
सारं द्विगुणसारेण फल्गु सारेण पीडयेत् ॥१२१०
संहतं तु गजानीकैः प्रचण्डैरवदारयेत् ।
प्रचण्डैर्वीरमुख्यैश्च फल्गु सैन्यं विदारयेत् ॥१२११
अश्वव्यूहैर्भटानीकं वाजिव्यूहं तु दन्तिभिः ।
बाणसारैस्तथा कुन्तप्रासपट्टसतोमरैः ॥ १२१२ ॥
अग्नितैलाञ्चितैर्बाणैर्विभिन्द्याद्द्विपयूथपान् ।
प्रभूतकुञ्जरानीकं घटासङ्घट्टनैर्द्रुतैः ॥ १२१३ ॥
पाटयेत्करटिव्रातं द्विषतां रणमूर्धनि ।
विमृश्य राजचिह्नानि निश्चित्य नृपतेः पदम् ॥
सर्वसैन्येन संयुक्तः तत्र यायाज्जयोन्मुखः ।
नाराचैर्जर्झरीकुर्वन् कुन्तैर्निर्भिद्य निर्भरम् ॥
चक्राकारैर्द्विधाकृत्य पाशैराकृष्य पातयेत् ।
सञ्चूर्ण्य मुद्गराघातैश्छित्वा परशुनाऽमितान् ॥
अश्वारूढान् क्षुरेणाथ संयोज्य परवारणम् ।
तद्गजं स्वगजोद्दामदन्तघातैर्निपात्य च ॥
निस्त्रिंशेन रिपोश्छिन्द्यात्कुण्डलालङ्कृतं शिरः ।
एवं निहत्य सङ्ग्रामे दुष्टशत्रुं मदोद्धतम् ॥१२१८

जयतूर्यनिनादेन हर्षयन् सुभटान् स्वकान् ।
कुमारामात्यसचिवान् सामन्तान् मण्डलेश्वरान्॥
विनिहत्यागतानां च दानं दद्याद्यथोचितम् ।
द्विषतां रक्तपूरेण तर्पयित्वा तु मेदिनीम् ॥
पिशितेन पिशाचांश्च क्रव्यादानान्त्रमालया ।
पलायनपरान् भीतान् रक्षयित्वा च धर्मतः ॥
आरोहमुक्तान् स्वीकृत्य तुरगान् वरवारणान् ।
धेनुकाश्चोष्ट्रसङ्घांश्च निश्शेषं कोशमेव च ॥१२२२
परिगृह्य तथा सर्वं प्रयत्नाद्वीक्ष्य सर्वतः ।
एवं तु बध्यते यत्र युद्धे शत्रुर्महाबलः ॥ १२२३
नृपेण बलिना स स्याद्दण्डो युद्धवधाभिधः ।
बलशक्तिविहीनेन नृपेण रिपुघातिना ॥ १२२४॥
प्रयोज्यास्स्युस्त्रयो दण्डाः विषघाताभिचारजाः ।
विषं हालाहलं शृङ्गि कालकूटं भयावहम् ॥
वत्सनाभं चतुर्थं तु स्थावरं परिकीर्तितम् ।
सर्पदंष्ट्रादिसञ्जातं विषं तज्जङ्गमं विदुः ॥ १२२६ ॥
विरुद्धद्रव्यमिलितं कृत्रिमं विषमुच्यते ।
शात्रवाणां विरक्ता ये कृत्यास्ते पुरुषा वराः ॥
तान् विभेद्य प्रदानेन रसदैस्तु प्रयोजयेत् ।

तटाककूपवापीषु तथा लघुसरस्सु च ॥ १२२८
विषं विषेण योक्तव्यम् द्विषतां प्राणघातनम् ।
अन्ने पाने च ताम्बूले फले पुष्पे विभूषणे ॥
वस्त्रे विलेपने धूपे शय्यायामासनेषु च ।
स्नानोदके तथा तैले पादाभ्यङ्गे सपादुके ॥
क्रीडापुष्करिणीमध्ये प्रयुञ्जीत विषं द्विषाम् ।
कुमारसचिवामात्यमन्त्रिसेनाधिपेषु च ॥१२३१॥
महावारणमुख्येषु तुरगेषूत्तमेषु च ।
एवं विषप्रयोगेण शत्रूणां क्षुद्रघातनम् ॥ १२३२
क्षणेन क्रियते यत्तु विषदण्डस्स उच्यते ।
शूरश्च दृढचित्तश्च त्यक्तप्राणभयश्च यः ॥ १२३३
वीरश्च समयज्ञश्च वधोपायविचक्षणः ।
वधूपुत्रप्रदत्ताधिगृहीतबहुवेतनः ॥ १२३४ ॥
तेन घातं प्रयुञ्जीत प्रमत्तारिपुमार्यया? ।
गीतवाद्यप्रसक्तेषु द्यूतक्रीडारतेषु च ॥ १२३५ ॥
मृगयासक्तचित्तेषु देवयात्राप्रसङ्गिषु ।
अङ्कमल्लविनोदेषु तथाऽन्येषूत्सवेषु च ॥ १२३६ ॥
अन्तःपुरप्रचारेषु देवपूजापरेषु च ।
वीरक्रीडानिषण्णेषु भोजनास्थानवर्तिषु ॥ १२३७

व्यग्रेष्वन्येषु कार्येषु कुर्याद्वै रिपुघातनम् ।
पूर्वोदितगुणैस्तीक्ष्णैस्सुभटैर्यन्त्रपातनम् ॥१२३८॥
मायया क्रियते शत्रोर्घातदण्डः प्रकीर्तितः ।
अथर्वविधितत्वज्ञैः ब्राह्मणैर्वा जितेन्द्रियैः ॥
मन्त्र[1]यन्त्रविधानज्ञैर्दूरादुन्मूलयेद्रिपुम् ।
आभिचारिकहोमैश्च मन्त्रैष्षट्कर्मसाधनैः ॥
यन्त्रलेखनकैर्युग्मैरुपांशु जपनादिभिः ।
मन्त्रतन्त्रसुसिद्धैश्च पटहैः काहलादिभिः ॥
पताकाकारकैर्दीपैर्धूपैर्मायूरकार्चकैः ।
बाणैर्मन्त्रप्रयुक्तैश्च सिद्धार्थकयुताक्षतैः ॥ १२४२
मोहयेत्स्तम्भयेच्छत्रून् स्थानाच्चोच्चाटयेत्तथा ।
विद्वेषयेच्च मित्राणि वशीकुर्याच्च विद्विषः ॥
संहरेज्जीवितं यत्तु स्यात्स दण्डोऽभिचारकः ।
व्यवहारान् प्रभुः पश्येद्द्विजैर्विद्यावरै[2]स्सह ॥
स्मृतिशास्त्रानुरोधेन रागद्वेषविवर्जितः ।
अदोषान् दूषयन् राजा दोषयुक्तानदण्डयन् ॥
आकीर्तिं महतीमेति दुर्गतिं चाधिगच्छति ।
ऋत्विक्पुरोहितः पुत्रो भ्राता बन्धुस्तथा सुहृत् ॥

[1] तन्त्र. [2] विप्रैर्विद्वद्वरैः.

अदण्ड्यो नृपतेर्नास्ति स्वधर्माच्चलितो नरः ।
वेदशास्त्रार्थतत्त्वज्ञाः सत्यसन्धाश्च धार्मिकाः ॥
सभ्या नृपतिना कार्या मित्रामित्रेषु ये समाः ।
धीरैरलोलुपैर्मौलैर्लोकव्यापारकोविदैः ॥ १२४८
विप्रैस्सह महीपालो गुणदोषौ विचारयेत् ।
विचारे यत्र तिष्ठन्ति विप्राः श्रुतिविदस्त्रयः ॥
पञ्च वा सप्त वा सा स्यात् सप्ततन्तु[1]समा सभा ।
तस्यां सभायां यः कश्चित् धर्मज्ञश्श्रुतिकोविदः ॥
निर्दिष्टोवाऽप्यनिर्दिष्टः स तत्वं वक्तुमर्हति ।
न्याय्यं पन्थानमुत्सृज्य ये गताश्चानुयायिनः ॥
सभ्यास्ते चोदनीयास्स्युर्मार्गे धर्मे स्वशास्त्रतः[2] ।
अनिर्दिष्टः प्रविष्टश्चेत्सभां ब्रूयात्समञ्जसम् ॥
ज्ञात्वा वा न वदेत्तत्वं मिथ्यावादी च पापभाक् ।
कुलीनाश्शीलवन्तश्च धनिनो वयसाऽधिकाः ॥
अमत्सरा विशः कार्याः कियन्तोऽपि सभासदः ।
अलोभं सत्यसन्धं च धर्मशीलं प्रियंवदम् ॥
अर्थशास्त्रार्थकुशलं लोकयात्राविचक्षणम् ।
विचारे पण्डितं दक्षं प्राड्विवाकतया युतम् ॥

---

[1] शतक्रतु. [2] बोधनीयास्स्युमार्गे धर्मस्य शाश्वतम् ।

इङ्गिताकारतत्वज्ञमूहापोहविशारदम् ।
ब्राह्मणं श्रुतसम्पन्नं धर्मशास्त्रविशारदम् ॥ १२५६
आत्मनः प्रतिरूपं तु कुर्यादेकं महीपतिः ।
प्रागेव पृच्छति प्रायो वाक्यं वादार्थमागतैः ॥
विचारयति यस्सम्यक् प्राड्विवाकस्स तु स्मृतः ।
उग्रस्य राजकार्येण देहजाड्येन वा स्वयम् ॥
अपश्यतः प्रभोः कार्यं प्राड्विवाको विचारयेत् ।
विप्रालाभे तु कर्तव्यः कुलीनो धर्मसंयुतः ॥
परत्र भीरुर्धर्मज्ञः शूरश्शान्तो विमत्सरः ।
अनुद्वेगकरो नित्यं प्रजानां च हिते रतः ॥१२६०
सदोद्युक्तस्समर्थश्च क्षत्रियोऽपि सभापतिः ।
दौर्लभ्यात् क्षत्रियस्यापि वैश्यं कुर्यात्सभापतिम् ॥
गुणाधिकं च मध्यस्थं जनानां सम्मतं नृपः ।
विप्रक्षत्रविशः कार्याः श्रेष्ठमध्याधमाः क्रमात् ॥
सर्वथाऽपि न कर्तव्याः शूद्राः कार्यविचक्षणैः[1] ।
लोभाद्वाऽपि भयाद्रागात्स्मृतिशास्त्रार्थनाशकाः ॥
दण्डनीयाः पृथक् सभ्या विवादद्विगुणं धनम् ।
सतां मार्गं समुल्लङ्घ्य बाधितो यो बलीयसा ॥

1 कर्तव्यश्शूद्रश्चापि विचारणे

निवेदयति यद्राज्ञे तद्विवादपदं स्मृतम् ।
अभियोगो द्विधा ज्ञेयः शङ्कया प्रत्ययेन च॥१२६५
असत्संसर्गतश्शङ्का प्रत्ययोऽन्याङ्गदर्शनात् ।
प्रथमं स्यादृणादानं निक्षेपस्तदनन्तरम् ॥ १२६६
अस्वामिविक्रयश्चैव तृतीयं परिकीर्तितम् ।
सम्भूय च समुत्थानं चतुर्थं परिभाषितम्॥१२६७
पञ्चमं दत्तमाख्यातं षष्ठं दत्तापहारिकम् ।
सप्तमं वेतनादानं संविल्लङ्घनमष्टमम् ॥ १२६८॥
क्रयविक्रयानुशयौ नवमं दशमं तथा ।
एकादशं तथा प्रोक्तं विवादस्स्वामिपालयोः ॥
स्वामिभृत्यविवादश्च द्वादशं समुदाहृतम् ।
त्रयोदशं समाख्यातं सीमाविवदनं बुधैः ॥१२७०
निरूपितं बुधैरत्र वाक्पारुष्यं चतुर्दशम् ।
उक्तं पञ्चदशं तज्ज्ञैर्दण्डपारुष्यसंज्ञितम् ॥ १२७१
स्तेयं षोडशमाख्यातमृषिभिस्तत्त्वदर्शिभिः ।
पदं सप्तदशं नाम्ना साहसं सद्भिरीरितम्॥१२७२
अष्टादशं समादिष्टं स्त्रीसङ्ग्रहणसंज्ञितम् ।
एकोनविंशं सम्प्रोक्तं स्त्रीपुंधर्मो विचारकैः॥१२७३
दायभागाभिधानं च स्याद्विंशतितमं पदम् ।

एकविंशं तथा द्यूतं द्वाविंशं तु समाह्वयः ॥१२७४
व्यवहारपदान्येतान्याह सोमेश्वरो नृपः ।
स्वयं नोत्पदयेत्कार्यमर्थार्थी[1] पृथिवीपतिः ॥
नाददीत तथोत्कोचं दत्तं कार्यार्थिना नृपः ।
विवादायागतं पृच्छेत्सभायाः पुरतस्स्थितम् ॥
किं कार्यं किञ्च ते दुःखं त्यक्तशङ्को निवेदय ।
निरूपिते पुनः पृच्छेत्केन कस्मिन् कदा[2] कथम्॥
तस्मात्तं प्रकृतं ब्रूहि सत्यमस्मिन् सभागतः ।
सभ्यैस्सह समालोच्य पदं न्यायो यथा भवेत् ॥
प्रत्यर्थिनस्तदाह्वानं लिखेद्दूतैश्च कारयेत् ।
आहूतो यदि नागच्छेद्व्याधितो दुःखितोऽपि वा ॥
निरुद्धो विषमस्थो वा क्रियाव्यग्रो जरन्नपि ।
स्वामिकार्यपरो वाऽपि नृपकार्यरतस्तथा ॥१२८०
मत्तो वाऽथ प्रमत्तो वा तथाऽप्येष न दुष्यति ।
कुलीना परभार्या वा युवती च प्रसूतिका ॥
रजस्वला पक्षहीना नाह्वातव्या सभां प्रति ।
अर्थिप्रत्यर्थिवाक्यानि लेखयित्वा विचारयेत ॥
देशकालानुसारेण हेतुभिश्च पृथग्विधैः ।

---

1 समर्थः. 2 केन कस्मात्कुतः.

लिखितात्साक्षितो भुक्तेः प्रमाणत्रितयादतः ॥
विचारयेन्महीपालस्स्मृतिशास्त्रानुसारतः ।
तैस्तैः प्रमाणैर्हीनस्य दिव्यं देयं महीभुजा॥ १२८४
तच्च देयं वयोऽवस्थादेशकालानुसारतः ।
प्रमाणं मानुषं यत्र दुर्लभत्वेन वर्तते ॥ १२८५
तदा दिव्यं प्रदेयं स्यान्न देयं मानुषे सति ।
शङ्कितानां नरेन्द्रेण कथितानां च तस्करैः॥ १२८६
शुद्धिमन्विच्छता तस्य दिव्यं देयं विना शिरः ।
प्रमाणैर्निश्चितैर्वापि दिव्यैर्वाऽपि विचारिते॥ १२८७
युक्त्या दण्डं नृपः कुर्याद्यथादोषानुसारतः ।
विष[1]क्षुद्दन्तिभुजगशस्त्रानलजलादिभिः ॥
पापानां प्राणहरणं वधदण्डः प्रकीर्तितः ।
केशानां कर्णयोरक्ष्णोर्नासिकायास्तथैव च॥ १२८९
जिह्वायाः करयोस्तद्वदङ्गुल्याः प्रजनस्य च ।
पादयोरेवमादीनामङ्गानां छेदनं च यत्॥ १२९०
अपराधानुसारेण छेददण्डस्स उच्यते ।
सन्धानं[2] ताडनं वाचा रूक्षया भर्त्सनं तथा ॥
एवंविधप्रकारोऽपि क्लेशदण्डः प्रकीर्तितः ।

[1] क्षु. [2] बन्धनं.

पणानां द्वे शते सार्धे प्रथमस्साहसः स्मृतः ॥
मध्यमः पञ्च विज्ञेयः सहस्रं चैव उत्तमः ।
विवादेन समः क्वापि द्विगुणः क्वापि कथ्यते ॥
त्रिगुणो वा क्वचित्प्रोक्तः क्वचिदुक्तश्चतुर्गुणः ।
सर्वस्वस्यादिकं क्वापि दमस्सर्वस्वमेव वा॥१२१४
दोषद्रव्यानुसारेण दण्डोऽर्थहरणस्स्मृतः ।
दण्डो रक्षति मर्यादां दण्डो धर्मं प्रवर्तयेत् ॥
निवारयेदधर्मांश्च तस्माद्दण्डं प्रयोजयेत् ।
दण्डहीने गते राष्ट्रे मात्स्यो न्यायः प्रवर्तते ॥
तस्माद्दण्डं प्रयुञ्जीत दुष्टानां धार्मिको नृपः ।
दण्डपातभयाल्लोको धर्मे तिष्ठति सूत्रितः॥१२१७
करीवाविनयो मत्तोऽप्यङ्कुशेन वशीकृतः ।
तीव्रदण्डभयाल्लोको भृशमुद्विजते यतः ॥ १२१८
तस्मान्मृदुप्रयोगेण प्रजापालनमाचरेत् ।
यथोक्तदण्डविन्यासाद्भूपतेर्धर्मचारिणः ॥ १२१९॥
यशो धर्मस्तथा राष्ट्रं कोशश्च परिवर्धते ।
एवमङ्गानि राज्यस्य सप्त शक्तित्रयं तथा ॥
षाड्गुण्यं च तथा प्रोक्तमुपायश्च चतुर्विधः ।
राज्यस्थैर्यनिमित्तानि प्राप्तराज्यस्य भूभृतः ॥

विंशतिं सोमभूपालः कृतवान्नीतिकोविदः ।
इति सुमतिरुपायं विंशतिं सोमपृथ्वी-
पतिरकथयदेतान् राज्यलक्ष्मीस्थिरत्वे ।
निखिलनृपतिचूडाचुम्बिरत्नांशुरेखा-
विरचितचरणाब्जः [1]शशासितुं राज्यवश्यान् ॥

इति महाराजाधिराजसत्याश्रय कुलतिलक चालुक्या-
भरण श्रीमद्भूलोकमल्ल श्रीसोमेश्वरदेव विरचिते
अभिलषितार्थचिन्तामणौ राजमानसोल्लासे
राज्यस्थिरीकरणोपायकथने
द्वितीयोऽध्यायः



[1] विरचितरणपीठः.

# तृतीयोऽध्यायः

---

उपभोगाः प्रवक्ष्यन्ते विस्तरेण मयाऽधुना ।
नाम्ना ये पूर्वमुद्दिष्टा विंशतिस्तु यथाक्रमम् ॥ १ ॥
वैशाखे फाल्गुने मार्गे कार्तिके[1] श्रावणे तथा ।
शुक्लपक्षे गृहान् कुर्यात् सर्वकामफलप्रदान् ॥ २ ॥
उत्तरात्रितयं चित्रा रोहिणी स्वातिरेव च ।
ज्येष्ठा मृगशिरा मूलमाश्विनी हस्त एव च ॥ ३ ॥
ऋक्षाण्येतानि शस्यन्ते सर्वदा वास्तुकर्मणि ।
क्रूरग्रहैरदृष्टानि सौख्यदानि भवन्ति हि ॥ ४ ॥
आदित्यं मङ्गलं त्यक्त्वा सर्वे वाराश्शुभावहाः ।
गृहकर्मणि शस्यन्ते वास्तुविद्याविशारदैः ॥ ५ ॥
नन्दा एकादशी षष्ठी प्रतिपच्चेति कीर्तिताः ।
पञ्चमी दशमी पर्व पूर्णा एता निरूपिताः ॥ ६ ॥
नन्दा पूर्णा च तिथयो मन्दिरारम्भणे शुभाः ।
नातिक्षीणे निशानाथे गृहारम्भा भवन्ति हि ॥ ७ ॥
वृषो धनुस्तुला कन्या मिथुनं कलशस्तथा ।
लग्नान्येतानि शस्तानि गृहप्रासादकर्मणि ॥ ८ ॥

---

[1] नभस्ये.

तैतुलं गरजं नागो बवं करणमुत्तमम् ।
करणं शरणानां च धनधान्यकरं भवेत् ॥ ९ ॥
अतिगण्डं व्यतीपातं परिघं वज्रमेव च ।
गण्डं शूल च विष्कंभं व्याघातं च विसर्जयेत् ॥
अन्ये सर्वे शुभा योगा वास्तुस्थापनकर्मणि ।
यथा नाम तथा तेषां फलसिद्धिरुदाहृता ॥ ११ ॥
माहेन्द्रे रौहिणे चैव सावित्रे मैत्र एव च ।
गन्धर्वेऽभिजिति चेति मुहूर्ते कारयेद्गृहान् ॥ १२ ॥
चन्द्रार्कादिग्रहास्सर्वे स्वक्षेत्रे शुभदा गृहे ।
न विद्धा न च नीचस्था न च तीक्ष्णांशु दूषिताः॥
विप्राणां पाण्डुरा भूमिः लोहिता क्षत्रजन्मनाम् ।
पीता विशां समाख्याता वृषलेषु च मेचका ॥
अरत्निमात्रं कृतं गर्तं पूरयेत्तन्मृदा पुनः ।
लाभो मध्येऽधिके विद्यात् हीने हानिस्समे समम्॥
धनिष्ठादीनि संत्यज्य पञ्चर्क्षाणि प्रयत्नतः ।
शुभनक्षत्रयोगे च तरून् छिन्द्याच्छुभावहान् ॥
सनीडं क्षीरवृक्षं च वायुवाह्निविदूषितम् ।
दान्तिदन्ताहतं चैव विद्युत्पातनिपीडितम् ॥ १७ ॥
स्वयं शुष्कं च भग्नं च वक्रं देवालयोद्भवम् ।

चैत्यवृक्षं शिवक्षेत्रनदीसङ्गमसम्भवम् ॥ १८ ॥
तटाककूपमध्यस्थं कण्टकाकुलितं तथा ।
नीपं विभीतकं निम्बं श्लेष्मातकमहीरुहम् ॥ १९
असारांश्छाखिनस्सर्वान् वर्जयेद्गृहकर्मणि ।
छिन्नं च यन्निपतितं याम्यपश्चिमयोर्दिशोः ॥ २०
शाकसालमयूकं च बालमज्जं सचन्दनम् ।
पनसं देवदारुं च शंसन्ति शुभकर्मणि ॥ २१ ॥
एकजात्या द्विजात्या वा त्रिजात्या वा महीरुहाम् ।
कारयेन्मान्दिरं राजा श्रियमिच्छन् महीयसीम् ॥
व्यासेन गुणितं दैर्घ्यमष्टकैश्च विभाजितम् ।
यच्छेषं स भवेदायः प्रोक्तो नामभिरष्टभिः ॥२३॥
एको ध्वजो द्वयं धूमः त्रिकस्सिंहः प्रकीर्तितः ।
चतुष्कस्सारमेयस्तु पञ्चको वृष उच्यते ॥ २४ ॥
षष्ठः खरो विनिर्दिष्टः सप्तमस्सामजो भवेत् ।
अष्टमो वायसः प्रोक्तः आयमानविनिर्णयः ॥ २५
ऐन्द्रीं दिशं समारभ्य प्रदक्षिणविधानतः ।
अष्टासु दिक्षु बोद्धव्याः क्रमेणायाः ध्वजादयः ॥
पश्चिमाशाननश्श्लाघ्यो ध्वजस्सर्वमुखोऽथवा ।
उत्तराभिमुखस्सिंहो वृषःप्राचीमुखश्शुभः ॥२७॥

दक्षिणाभिमुखो हस्ती सारमेयोऽधराननः[1] ।
मुखद्वारं विनिर्दिष्टं मन्दिरस्य विचक्षणैः ॥२८॥
नृपगेहानि वक्ष्यामि स्तम्भसङ्ख्याप्रमाणतः ।
चतुष्कभेद[2]शालाभिश्चतुर्भद्रैर्मनोहरैः ॥ २९ ॥
पृथ्वीजयं गृहं कार्यं दशभागं विचक्षणैः[3] ।
मध्ये स्तम्भशतं तस्य भद्रेऽष्टाविंशतिस्तथा ॥ ३०
चतुर्भद्रेषु च शतं स्तम्भानां द्वादशाधिकम् ।
नवकोणे विदिग्देशे पृथ्वा त्रिंशच्चतुर्ष्वपि ॥ ३१ ॥
. . . . . . . . सुषड्विंशोऽपि त्रिष्वपि ।
चत्वारो मध्यगास्स्तम्भा यत्र तत्स्याच्चतुष्ककम् ॥
तस्माद्बहिरलिन्दस्स्याच्छाला स्यात्तदनन्तरम् ।
अलिन्दं च पुनश्शाला क्रमणैवं प्रवर्धते ॥ ३३ ॥
यावत्कर्तुमभीष्टं स्याद्गृहं नरपतेश्शुभम् ।
यच्चतुष्कगतं क्षेत्रं पञ्चधा तद्विभज्यते ॥ ३४ ॥
तद्भागप्रमितं कार्यं त्रिभिर्भागैरलिन्दकम् ।
सार्धत्रिभागिकाश्शालाः कर्तव्याः सुविचक्षणैः ॥
इयं स्थितिस्समस्तानां गृहाणां प्रतिपादिता ।
नाम्ना तु मुक्ता कोणा ये तत्कार्यं रविभागतः ॥

[1] समस्ते वास्तुकर्मणि [2] चतुष्कालिन्द. [3] दशभागविचक्षणैः.

मध्यस्तम्भशतं सार्धं षड्भिर्न्यूना निरूपिताः ।
चत्वारिंशत्तथा स्तम्भा भद्रे भद्रे निरूपिताः ॥ ३७
शतं षष्ट्याऽधिकं ते स्युश्चतुर्भद्रेषु सङ्ख्यया ।
एकादश तथा कोणा विदिशं विदिशं प्रति ॥ ३८
चतुर्विंशत्तथा त्रिंशच्चतसृष्वपि[1] सङ्ख्यया ।
कक्षान्ते[2] सर्वतोभद्रं मनुभागैर्विभाजितम् ॥ ३९॥
मध्यस्तम्भा भवन्त्यस्य षण्णवत्यधिकं शतम् ।
चत्वारिंशत्तथा चैव भद्रे स्तम्भा निरूपिताः ॥४०
एवं चतुर्षु भद्रेषु शतं षष्टिस्तथाऽष्टकम्[3]॥
कोणास्तस्य विधातव्यास्त्रयोदशमिता बुधैः ॥४१
समन्ताद्गुणिताः कोणाः द्विपञ्चाशद्भवन्ति ते ।
श्रीवत्समष्टभागं[4] स्याच्चतुष्षष्टिस्तु मध्यगः ॥ ४२
तस्यास्स्तम्भाः प्रयोक्तव्याः भद्रेऽष्टादश[5] सङ्ख्यया ।
चतुर्ष्वपि च भद्रेषु द्विसप्ततिरुदाहृता ॥ ४३ ॥
सप्तकोणास्समन्ताच्च द्विगुणा मनुसङ्ख्यया ।
एवमादीन्यनन्तानि गेहानि धरणीभुजाम् ॥ ४४॥
कियन्त्यपि मयोक्तानि[6] प्रधानानि[7] यथाक्रमम् ।
चतुश्शालं त्रिशालं च द्विशालं चैकशालकम् ॥

1 चतुष्षष्टिश्च. 2 कथ्यते. 3 त्रिकम्. 4 त्समन्तभागे. 5 भेदाश्चिदश.
6 मनोज्ञानि. 7 प्रणीतानि,

वक्ष्यामि भवनं राज्ञां नामलक्षणसंयुतम् ।
अलिन्दकैश्चतुर्द्वारैश्चतुश्शालमुदाहृतम् ॥ ४६ ॥
सर्वतोभद्रनामैतन्नृपाणां शस्यते गृहम् ।
नन्द्यावर्तं तथाख्यातं पश्चिमे द्वारवर्जितम् ॥ ४७
वर्धमानं तथाख्यातं दक्षिणद्वारवर्जितम् ।
स्वस्तिकं तद्भवेन्नाम्ना पूर्वद्वारविवर्जितम् ॥ ४८ ॥
उत्तरद्वारहीनं चेद्रुचिकं तद्भवेद्गृहम् ।
सर्वतोभद्रनामाद्यं चतुश्शालमुदीरितम् ॥ ४९ ॥
शुभप्रदं नरेन्द्राणां विजयारोग्यवर्धनम् ।
नन्द्यावर्तं वर्धमानं स्वस्तिकं रुचिकं तथा ॥५०॥
चत्वारि स्युस्त्रिशालानि गेहानि धरणीभुजाम् ।
नैर्ऋते मुख्यगेहं स्याच्छाले चोत्तरपूर्वगे ॥ ५१ ॥
पूर्वायां चोत्तरद्वारमुत्तरायां च पूर्वतः ।
कर्तव्ये गर्भगेहस्य द्वारे द्वे तु विचक्षणैः ॥ ५२ ॥
एकं स्यात्पूर्वतो द्वारमन्यदुत्तरतस्स्थितम् ।
अङ्गणाद्दक्षिणा शाला हस्तिनी परिकीर्तिता ॥५३
अङ्गणात्पश्चिमा शाला महिषीति निगद्यते ।
इदं द्विशालं सिद्धार्थं सर्वकामफलप्रदम् ॥ ५४ ॥
नृपाणां शस्यते स्थानं विशेषाद्वित्तवर्धनम् ।

वायव्ये गर्भगेहस्स्याच्छाले दक्षिणपूर्वगे ॥ ५५ ॥
द्वारे शालामुखे कार्ये शालाद्वारे च सम्मुखे ।
महिषी त्वङ्गणात्पश्चादुत्तरा गौः प्रकीर्तिता ॥५६॥
द्विशालं भयदं चैतद्यमपुर्यां विनिन्द्यते[1] ।
ऐशाने प्रथमे वेश्म शाले दक्षिणपश्चिमे ॥ ५७ ॥
अङ्गणात्पूर्वगाच्छागी गवि चोत्तरतः स्थिता ।
दण्डाख्यं नाम तत्प्रोक्तं विशालं भयदं नृणाम् ॥
वर्जनीयं प्रयत्नेन नृपैरावासकर्मणि ।
आग्नेयं मुखवेश्म स्याच्छाले वोत्तरपश्चिमे॥ ५९ ॥
अङ्गणात्पूर्वगाच्छागी दक्षिणा हस्तिनी मता ।
वार्ताख्या नाम तत्प्रोक्ता नृणामुद्वेगकारका ॥ ६०
नृपाणां नैव कर्तव्यं निवासार्थं कथञ्चन ।
द्विशालमेकं सिद्धार्थं प्रशस्तं पृथिवीभुजाम् ॥ ६१
क्रीडार्थं तन्निवासार्थं भोगार्थं च प्रशस्यते ।
ध्रुवं हीनमलिन्देन पूर्वालिन्दं तु धन्यकम् ॥ ६२॥
जयः स्याद्दक्षिणालिन्दं पश्चालिन्दं खरं भवेत् ।
दुर्मुखं चोत्तरालिन्देमकालिन्दं चतुर्गृह.. ॥ ६३ ॥
धन्यं जयश्च शुभदं निन्दिते खरदुर्मुखे ।

[1] धूतसूत्रं विनिन्दितम्.

पूर्वदक्षिणतोऽलिन्दं नन्दमित्यभि[1]धीयते ॥ ६४ ॥
धन्यं पश्चिमतोऽलिन्दमन्यैर्वा समुदाहृतम् ।
पूर्वदिग्भागतोऽलिन्दं गृहं क्रूरं निगद्यते ॥ ६५ ॥
पश्चिमोत्तरतोऽलिन्दं क्षयमित्यभिधीयते ।
पूर्वपश्चिमतोऽलिन्दं कान्तं नाम्ना निगद्यते ॥६६॥
दक्षिणोत्तरतोऽलिन्दं सुपक्षं परिवक्ष्यते ।
उत्तरालिन्दहीनं यत्सुमुखं तत्प्रकीर्तितम् ॥ ६७ ॥
पश्चिमालिन्दतो हीनं धनदं गेहमुच्यते ।
दक्षिणालिन्दहीनं यदाक्रान्तं तदुदाहृतम् ॥ ६८ ॥
पूर्वालिन्दविहीनं यद्विपुलं परिकीर्त्यते ।
सर्वतोऽलिन्दसंयुक्तं विजयं गेहमुत्तमम् ॥ ६९ ॥
एवं षोडश गेहानि कथितानि परिस्फुटम् ।
यथा नामफलं तेषु ज्ञेयं तत्र निवासिनाम्॥७०॥
धन्यं तस्मात्प्रकर्तव्यं नृपाणां गेहमुत्तमम् ।
हीनस्तम्भमलिन्दस्स्यात् शाला स्तम्भैस्समावृता॥
नृपाणां गृहकर्तॄणां क्रम एष निरूपितः ।
अन्यच्चतुष्प्रकारं तदेकशालं गृहं भवेत् ॥ ७२ ॥
प्रधानगेहं स्तम्भैश्च शालास्तम्भैस्समा भवेत् ।

1 कान्तं नाम्नाभि.

तस्य लक्ष्म प्रवक्ष्यामि शुभाशुभफलोदयम् ॥ ७३
उत्तरा शस्यते शाला शाला पूर्वा प्रशस्यते ।
दक्षिणा पश्चिमा शाला द्वे शाले परिनिन्दिते ॥
नृपाणां सुखवासार्थं न कर्तव्ये कदाचन ।
तिष्ठन् गृहेषु शस्तेषु श्रियमाप्नोति पुष्कलाम् ॥
आरोग्यं विजयं कीर्तिं श्रियमाप्नोति पुष्कलाम् ।
आरोग्यं विजयं कीर्तिं सन्तोषं परमाप्नुयात् ॥७६
ईदृग्लक्षणसंयुक्तान् विविधान् बहुभूमिकान् ।
कारयित्वा महीपालः प्राप्य चन्द्रबलं महत् ॥७७
एकाशीतिपदोपेते मण्डले पूजयेत्सुरान् ।
सोमेश्वरनृपप्रोक्तवास्तुपद्धतिमार्गतः ॥ ७८ ॥
अन्तर्गृहस्य वै कोणादैशाने शालिपिष्टकैः ।
एकाशीतिपदं यत्नान्मण्डलं समकोष्ठकम् ॥ ७९ ॥
पूर्वपश्चिमगा रेखा दक्षिणोत्तरगा दश ।
एकाशीतिपदं त्वेवं कर्तव्यं वास्तुमण्डलम् ॥८०॥
तत्र पूज्यान् सुरान् वक्ष्ये पदसङ्ख्याव्यवस्थितान् ।
एकपद्यं द्विपद्यं च त्रिपद्यं नवपद्यकम् ॥ ८१ ॥
ईशानकोणादारभ्य प्रादक्षिण्यक्रमेण च ।
पूजनीयाः प्रयत्नेन बाह्यकोष्ठगतास्सुराः ॥ ८२ ॥

शिखी ततश्च पर्जन्यो जयन्तः कुलिशायुधः ।
सूर्यस्सत्यभृशाकाशो वायुः पूषा तथैव च ॥८३॥
वितथश्चाथ पूज्यस्स्यात् गृह[1]क्षतयमास्तथा ।
गन्धर्वभृङ्गराजौ च मृगाः पितृगणास्तथा ॥ ८४ ॥
दौवारिकश्च सुग्रीवःपुष्पदन्तजलाधिपौ ।
असुरश्चाथ शेषश्च पापो रोगोऽहिमुख्यकौ ॥८५॥
भल्लाटसोमनागास्स्युरदितीर्दितिरेव च ।
द्वात्रिंशच्च बहिः प्रोक्ताश्चत्वारोऽन्तर्व्यवस्थिताः ॥
आप्य ईशानकोणे स्यात् सावित्रो वह्निकोणगः ।
जयो निर्ऋतिकोणस्थो रुद्रो वायव्यकोणगः ॥
ब्रह्मा नवपदो मध्ये तस्यैवास्ते समीपतः ।
पदमेकं परित्यज्य पूर्वादिदिगवस्थिताः ॥ ८८ ॥
अर्यमा पूर्वदिग्भागे साविताऽऽग्नेयकोणगः ।
विवस्वान् दक्षिणे भागे नैऋते विबुधाधिपः ॥
मित्रस्तु पश्चिमे भागे राजयक्ष्मा च मारुते ।
पृथ्वीधरस्सौम्यगस्स्यादैशाने चापवत्सतः ॥ ९० ॥
आर्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ।
पितामहसमीपस्थाश्चत्वारास्त्रिदशा इमे ॥ ९१ ॥

[1] भग.

त्रिपङ्क्तिकोणसंस्थानाद्बहिःकोणस्य पार्श्वगाः ।
पदिका इति विख्याताश्शेषा द्विपदिकास्सुराः ॥
कुण्डं त्रिमेखलं कार्यं मण्डलेशानभागतः ।
हस्तप्रमाणविस्तारं खाते नवकरोन्मितम् ॥९३॥
तत्र होमः प्रकर्तव्यः समिद्भिः क्षीरजातिभिः ।
पालाशीभिस्समिद्भिर्वा कुशैर्दूर्वाभिरेव वा ॥ ९४ ॥
होमधान्यैर्नवैश्शुद्धैर्मधुसर्पिस्समन्वितैः ।
यवप्रियङ्गुगोधूमातिलैर्व्रीहिभिरेव वा ॥ ९५ ॥
बिल्वैर्वा निम्बबीजैर्वा यथासम्भवमाहृतैः ।
देवतानां पृथक्कुर्याद्धोममष्टोत्तरं शतम् ॥ ९६ ॥
अष्टाधिकां विंशतिं वा प्रतिदैवतमाचरेत् ।
ततो मण्डलसंस्थाभ्यो देवताभ्यो बलिं हरेत् ॥९७
घृतान्नं[1] शिखिने दद्यात्पर्जन्यायाज्यसंयुतम् ।
ओदनं सोत्पलं दद्याज्जयन्ताय निवेदयेत् ॥ ९८ ॥
ध्वजानपूपान् पिष्टेन कूर्मरूपं प्रकल्पितम् ।
पैष्टं कुलिशमित्राय[2] पञ्चरत्नानि चार्पयेत् ॥ ९९ ॥
धूम्रवर्णं विमानं च सक्तून् सूर्याय कल्पयेत् ।
सत्याय घृतगोधूममत्स्यान् दद्याद्भृशाय च ॥१००

[1] कृसरं. [2] कुलिशमिन्द्राय.

शष्कुलीरन्तरिक्षाय सक्तून् दद्याच्च वायवे ।
पूष्णे लाजाः प्रदातव्याः वितथे चणकौदनम् ॥
गृहक्षताय मध्वन्नं यमाय पललौदनन् ।
गन्धर्वाय सुगन्ध्यन्नं[1] भृङ्गायारुणाजिह्विका ॥ १०२
मृगाय यावकं देयं पितृभ्यः कृसरं तथा ।
दौवारिके दन्तकाष्ठं पैष्टं कृष्णबलिं तथा ॥१०३॥
क्षिपेदपूपान् सुग्रीवे पुष्पदन्ते तु पायसम् ।
कमलं सकुशास्तम्बं वरुणाय समर्पयेत् ॥ १०४ ॥
असुराय सुरा देया पैष्टं सौपर्णमेव च ।
घृतौदनं च शेषाय यवास्स्युः पापसंज्ञिके ॥ १०५
रोगाय मोदकास्सर्पिः फणिने नागकेसरम् ।
भक्षो मुख्याय दातव्यो भल्लाटाय ततः क्षिपेत् ॥
मुद्गौदनं ततस्सोमे पायसं मधुमिश्रितम् ।
शालिपिष्टं तु सर्पाय पोलिकामदितौ क्षिपेत् ॥
दित्यै तु पूरिकां दद्यादित्येवं बाह्यतो बलिः ।
मण्डलाभ्यन्तरस्थानामिदानीं बलिरुच्यते ॥१०८
आप्याय दापयेत् क्षीरमापवत्साय वै दधि ।
सावित्र्यै मोदकं दद्यान्मरीचे सकुशौदनम् ॥१०९

[1] सुगन्धाम्बु.

सावित्रे गुडपूपांश्च जयाय घृतचन्दनम् ।
विवस्वते प्रदातव्यं पायसं रक्तचन्दनम् ॥ ११० ॥
देवाधिपतये दद्यात्तालमिश्रं घृतौदनम् ।
मित्राय सघृतं भक्तं रुद्राय गुडपायसम् ॥ १११ ॥
आमं पक्वं तथा मांसं दातव्यं राजयक्ष्मणे ।
पृथ्वीधराय मांसानि कूश्माण्डानि च दापयेत् ॥
ससितं पायसं दद्यादर्यम्णे बलिकर्माणि ।
तिलाक्षतं पञ्चगव्यं भक्ष्यं भोज्यं पृथग्विधम् ॥ ११३
आज्यं च दधिसंयुक्तं ब्रह्मणे विनिवेदयेत् ।
सर्वेषां काञ्चनं दद्याद्ब्रह्मणे गां पयस्विनीम् ॥ ११४
राक्षसानां बलिं दद्यान्मधुमांसौदनादिकम् ।
एवं सम्पूजिता देवाश्शान्तिं कुर्वन्ति ते सदा ॥
मांसौदनं सरुधिरं हरिद्रौदनमेव च ।
ईशानभागमाश्रित्य चरक्यै विनिवेदयेत् ॥ ११६ ॥
आग्नेयीं दिशमाश्रित्य स्थितायै मांसखण्डकम् ।
दध्योदनं सरुधिरं विदार्यै विनिवेदयेत् ॥ ११७ ॥
पूतनायै च नैर्ऋत्यै पीतं रक्तं बलिं क्षिपेत् ।
वायव्ये पापराक्षस्यै मत्स्यमांससुराशनम् ॥ ११८
पायसं वा प्रदातव्यं तन्नाम्ना सर्वतः क्रमात् ।

प्रणवादि नमोऽन्तं च तथा पूर्णो बलिर्भवेत् ॥
ततस्सर्वौषधिस्नानं यजमानस्य कारयेत् ।
विप्रांश्च पूजयेद्भक्त्या विदुषो गृहमागतान् ॥१२०
इति वास्तूपशमनं विरचय्य समाचरेत् ।
प्रासादभवनोद्यानप्रारम्भे परिवर्तने ॥ १२१ ॥
परवेश्मप्रवेशे च सर्वदोषोपशान्तये ।
विधाय वास्तुपूजां च गृहं सूत्रेण सर्वतः ॥ १२२
पावमानेन सूक्तेन रक्षोघ्नेन च वेष्टयेत् ।
मङ्गलं तूर्यघोषेण कुर्याद्ब्राह्मणवाचनम् ॥ १२३ ॥
प्रतिसंवत्सरं यस्तु विधिनाऽनेन पार्थिवः ।
सर्वमायतने कुर्यात्स सुखं लभते ध्रुवम् । १२४॥
उत्तरात्रितयं हस्तो रोहिणी रेवती मृगाः ।
पुष्यानुराधाचित्ताश्च स्वात्यश्विन्यभिजित्तथा ॥
धनिष्ठा वारुणश्चेति प्रवेशर्क्षाणि वेश्मनः ।
सूर्यभूमिसुतौ त्यक्त्वा प्रवेशेऽन्ये शुभावहाः॥१२६
धनुः कुम्भं तथा कन्या मिथुनं वृषभस्तथा ।
मीनं चेति शुभास्सर्वे राशयो लग्नसम्मताः ॥
लग्नं चतुर्थं दशमं सप्तमं केन्द्रसंज्ञिकम् ।
नवमं पञ्चमं लग्नात्त्रिकोणं परिकीर्तितम् ॥१२८॥

केन्द्रत्रिकोणगाश्शस्ताः गुरुशुक्रबुधा ग्रहाः ।
पापास्त्रिलाभषष्ठस्थाः शुभा वेश्मप्रवेशने ॥१२९॥
सुधाकरबलं लब्ध्वं नातिक्षीणे निशाकरे ।
तिथिं रिक्तां परित्यज्य विशेन्मन्दिरमूर्जितम् ॥
ब्राह्मणोदीरितैर्मन्त्रैश्शोभनैश्शङ्खनिस्वनैः ।
मङ्गलैस्तूर्यनादैश्च विशेद्वेश्म विशांपतिः ॥१३१॥
एकभूमे द्विभूमे वा भूमित्रयसमन्विते ।
भूचतुष्टयसंयुक्ते पञ्चभूमेऽपिवा शुभे ॥ १३२ ॥
षड्भूमे सप्तभूमे वा तथा चैवाष्टभूमिके ।
प्रासादे नवभूमे वा निवसेद्वसुधाधिपः ॥ १३३ ॥
सुधाधवलिते रम्ये वास्तुलक्षणसंयुते ।
जलमार्गकृतोद्योते क्वापि सर्वप्रकाशने ॥ १३४ ॥
क्वापि सन्तमसोपेते मणिदीपप्रकाशिते ।
दन्तिदन्तविनिर्माणमत्तवारणशोभिते ॥ १३५ ॥
सौवर्णस्तम्भरुचिरे चन्दनस्तम्भगन्धिनि ।
रत्नस्तम्भकृताभासे प्रवाळस्तम्भराजिते ॥ १३६ ॥
काचकुट्टिमरोचिष्णौ स्फटिकोज्ज्वलकुट्टिमे ।
सुधायाः कुट्टिमोपेते स्फुरद्दरदकुट्टिमे ॥ १३७ ॥
स्फटिकोपलविन्यासदर्पणाकारभित्तिके ।

विचित्रचित्रसंयुक्ते प्रमोदप्रदभित्तिके ॥ १३८ ॥
प्रगल्भैर्भावकैस्तज्ज्ञैः सूक्ष्मरेखाविशारदैः ।
विद्युन्निर्माणकुशलैः पत्रलेखनकोविदैः ॥ १३९ ॥
वर्णपूरणदक्षैश्च वीरणे च कृतश्रमैः ।
चित्रकैर्लेखयेच्चित्रं नानारससमुद्भवम् ॥ १४० ॥
सुधया निर्मितां भित्तिं श्लक्ष्णां क्षतविवर्जिताम् ।
लेपयेच्चित्रकर्मार्थं लेपद्रव्यं प्रचक्ष्यते ॥ १४१ ॥
माहिषं त्वचमादाय नवं तोयेन मेलयेत् ।
नवनीतामिवायाति यावच्चिक्कणतां भृशम् ॥ १४२ ॥
तत्कल्कं चिक्कणीभूतं शलाकाः परिकल्पयेत् ।
यत्नेन शोषयेत्पश्चाद्यावत्काठिन्यमाप्नुयुः ॥ १४३ ॥
वज्रलेपो मयाऽख्यातः चित्रे सर्वत्र शस्यते ।
तं कृत्वा मृत्तिकापात्रे तोयं क्षिप्त्वा प्रतापयेत् ॥
स तप्तो द्रवतां याति सर्ववर्णेषु तद्द्रवः ।
मिश्रणीयप्रमाणेन यथा वर्णो न नश्यति ॥ १४५
आदाय मृत्तिकां श्वेतां वज्रलेपेन मिश्रयेत् ।
तया लेपं प्रकुर्वीत शुष्कभित्तौ त्रिवारतः ॥ १४६ ॥
शङ्खचूर्णसितापिष्टं वज्रलेपसमन्वितम् ।
आदाय भित्तिकां लिम्पेद्यावत्सा श्लक्ष्णतां व्रजेत् ॥

यत्तु नीलगिरौ जातं श्वेतं चन्द्रसमप्रभम् ।
नगनाम्नैव विख्यातं शिलायां परिपेषितम् ॥
मिश्रितं वज्रलेपेन समादाय च पाणिना ।
लिम्पयेन्मृदुलेपेन स्वच्छमच्छं शनैश्शनैः ॥
पश्चाच्चित्रं विचित्रं च तस्यां भित्तौ लिखेद्बुधः ।
नानाभावरसैर्युक्तं सुरेखं वर्णकोचितम् ॥ १५० ॥
कनिष्ठिकापरीणाहां भागद्वयसमायताम् ।
घनवेणुसमुद्भूतां नालिकां परिकल्पयेत् ॥ १५१ ॥
तदग्रे ताम्रजं शङ्कुं यवमात्रं विनिक्षिपेत् ।
तावन्मात्रं बहिःकुर्यात्तिन्दुनामेरितं बुधैः ॥१५२॥
कज्जलं भक्तसिक्थेन मृदित्वा कर्णिकाकृतिम् ।
वर्तिं कृत्वा तया लेख्यं वर्तिका नाम सा भवेत् ॥
वत्सकर्णसमुद्भूतरोमाण्यादाय यत्नतः ।
तूलिकाग्रे न्यसेत्तानि लाक्षाबन्धनयोगतः ॥१५४
लेखनी नाम सा प्रोक्ता सा चैव त्रिविधा भवेत् ।
स्थूला मध्या तथा सूक्ष्मा तया चित्रं विरच्यते ॥
स्थूलया लेपनं कार्यं तिर्यगाहितया तथा ।
अङ्कनं मध्यया कुर्यादग्रपार्श्वनिविष्टया ॥ १५६ ॥
सूक्ष्मया च तया सूक्ष्मां लेखां कुर्वीत कोविदः ।

अग्रेण चित्रको धीमान् चित्रविद्याविशारदः ॥
प्राणी वा यदि वाऽप्राणी यत्प्रमाणमभीप्सितम् ।
चिन्तयेत्तत्प्रमाणं तद्व्यातं भित्तौ निवेशयेत् ॥
भित्तौ निवेशितस्यास्य दृश्यमानस्य चेतसा ।
तन्मानेन लिखेल्लेखां सर्वाङ्गेषु विचक्षणः ॥
पूर्वं तिन्दुकलेख्यं स्याद्यद्वा वर्तिकया बुधैः ।
आकारमात्रिकां लेखां विना वर्णं लिखेत्पुनः ॥
आकारजनिकां रेखां तिन्दुवर्तिकनिर्मिताम् ।
लिखेत्तामेव लेखिन्या गैरिकोद्भूतवर्णतः ॥१६१॥
पूरयेद्वर्णकैः पश्चात् तत्तद्रूपोचितैस्स्फुटम् ।
उज्ज्वलं प्रोन्नते स्थाने श्यामलं निम्नदेशतः ॥
एकवर्णेऽर्पितं कुर्यात्तारतम्यविभेदतः ।
अध[1]श्चेदुज्ज्वलो वर्णो घनश्यामलतां व्रजेत् ॥१६३
भिन्नवर्णेषु रूपेषु भिन्नो वर्णः प्रयुज्यते ।
मिश्रवर्णेषु रूपेषु मिश्रो वर्णः प्रयुज्यते ॥१६४॥
श्वेतेषु पूरयेच्छङ्खं शोणेषु दरदं तथा ।
रक्तेष्वलक्तकरसं लोहिते गैरिकं तथा ॥ १६५ ॥
पीतेषु हरितालं स्यात्कृष्णे कज्जलमिष्यते ।

---

[1] अच्छ.

शुद्धा वर्णा इमे प्रोक्ताश्चत्वारश्चित्रसंश्रयाः ॥१६६
मिश्रान् वर्णानितो वक्ष्ये वर्णसंयोगसम्भवान् ।
दरदं शङ्खसम्मिश्रं भवेत्कोकनदच्छविः ॥ १६७॥
अलक्तं शङ्खसामिश्रं सौराश्वसदृशं भवेत् ।
गैरिकं शङ्खसंम्मिश्रं धूम्रच्छायं निरूपितम् ॥१६८
हरितालं शङ्खयुतं घोरात्व ? सदृशप्रभम् ।
कज्जलं शङ्खसम्मिश्रं धूमच्छायं निरूपितम् ॥
नीली शङ्खेन संयुक्ता कपोताभा विराजते ।
राजावर्तस्स एवायमतसीपुष्पसन्निभः ॥ १७० ॥
केवलैव हि या नीली नीलेन्दीवरसप्रभा ।
हरितालेन मिश्रा चेज्जायते हरितच्छविः ॥१७१
गैरिकं हरितालेन मिश्रितं गौरतां व्रजेत् ।
कज्जलं गैरिकोपेतं श्यामवर्णं निरूपितम् ॥१७२॥
अलक्तकेन संसृष्टं कज्जलं पाटलं भवेत् ।
अलक्तं नीलिकायुक्तं कर्बुवर्णं भवेत् स्फुटम्॥
एवं शुद्धाश्च मिश्राश्च वर्णभेदाः प्रकीर्तिताः ।
तत्तद्रूपानुसारेण पूरणीयास्तु चित्रकैः ॥ १७४ ॥
एणसारङ्गशार्दूलशिखितित्तिरिकादिषु ।
भिन्नवर्णेषु सत्वेषु पृथग्वर्णः प्रयुज्यते ॥१७५॥

वृक्षपर्वतशास्त्रा[1]दिपदार्थेषु यथोचिताः ।
भिन्नवर्णाः प्रयोक्तव्याः चित्रकैश्चित्रकर्मणि॥१७६
गौरवर्णेषु नीलेषु हरितालं पुरो न्यसेत् ।
गौरेषु गैरिकं पश्चान्नीलीं नीलेषु योजयेत् ॥१७७
क्षुरेण तीक्ष्णधारेण लेखां न्यूनाधिकां हरेत् ।
पाण्डुरं बिन्दुजातं यत्तत्सर्वं तेन कारयेत् ॥ १७८
पूरितं वर्णमात्रं यत्तत्सर्वं तेन कारयेत्[2] ।
पूरितं वर्णमात्रं यत्तावन्मात्रं हरेत्सुधीः ।
मृदुघर्षणयोगेन यथा शङ्खो न नश्यति[3] ॥१७९
रोमराजिमितां कुर्यात् रेखां नानाविधामपि ।
वीरणैस्सूक्ष्मतुण्डाग्रैर्मृदुघर्षणयोगतः ॥ १८० ॥
शुद्धं सुवर्णमत्यर्थं शिलायां परिपेषितम् ।
कृत्वा कांस्यमये पात्रे गालयेत्तन्मुहुर्मुहुः ॥१८१॥
क्षिप्त्वा तोयं तदालोड्य निर्हरेत्तज्जलं मुहुः ।
यावच्छिलारजो याति तावत्कुर्वीत यत्नतः ॥१८२
घनत्वान्मसृणं हेम न याति सह वारिणा ।
आस्ते तदमलं हेम बालार्करुचिरच्छवि ॥१८३॥
तत्कल्कं हेमजं स्वल्पवज्रलेपेन मेलयेत् ।

[1] वस्त्रादि. [2] तु हरेत्सुधीः. [3] पश्यति.

मिलितं वज्रलेपेन लिखेन्यग्रे निवेशयेत् ॥ १८४
लिखेदाभरणं चापि यत्किञ्चिद्धेमकल्पितम् ।
चित्रे निवेशितं हेम यदा शोषं प्रपद्यते ॥१८५॥
वाराहदंष्ट्रया तत्तु घट्टयेत्कनकं शनैः ।
यावत्कान्तिं समायाति विद्युच्चकितविग्रहम् ॥१८६
सर्वचित्रेषु सामान्यो विधिरेष प्रकीर्तितः ।
प्रान्ते कज्जलवर्णेन लिखेल्लेखां विचक्षणः ॥१८७॥
वस्त्रमाभरणं पुष्पं मुखरागादिकं सुधीः ।
अलक्तेन लिखेत्पश्चाच्चित्रवर्णं भवेत्ततः ॥ १८८॥
ऋजु स्यात्प्रथमं स्थानमन्यदर्धर्जुसंज्ञितम् ।
तृतीयं स्थानकं साचि तुर्यं द्व्यर्धाक्षिसंज्ञकम् ॥
पञ्चमं भक्तिकं प्राहुस्तज्ज्ञाः पार्श्वगतं च तत् ।
पञ्चस्थानानि मुख्यानि कथितानीह संज्ञया ॥
ऋज्वादिपञ्चपूर्वं स्यात् परावृत्तश्चतुर्विधम् ।
स्थानकानि नवैव स्युश्चित्रलेखाविधिं प्रति॥ १९१
नव स्थानकमध्ये स्युरष्टौ ह्यन्तरसंज्ञया ।
तेषां तु लक्षणं वक्ष्ये ब्रह्मसूत्रविभेदतः ॥ १९२ ॥
ब्रह्मसूत्राद्बहिस्सूत्रे षट् षडङ्गुल[1]मध्यमे ।

[1] षड्ज्वङ्गुलं.

यत्तत्स्यादृजुसंस्थानं रूपं स्यान्मुख्ययोनि तत् ॥
अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रस्य चैकतः ।
अष्टाङ्गुलं ततोऽन्यत्र चतुरङ्गुलमन्तरम् ॥ १९४॥
उक्तमर्धर्जुके स्थाने लम्बसूत्रक्रियाक्रमः ।
अङ्गुलानि दशैकत्र कलामात्रं ततोऽन्यतः ॥१९५
अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रद्वयस्य च ।
साचिस्थानं समाख्यातमूर्ध्वसूत्रास्थितिक्रमात् ॥
एकत्रैकाङ्गुलं यस्मिन् अन्यत्रैकादशाङ्गुलम् ।
मध्ये द्व्यर्धांसिके स्थाने लम्बसूत्रं क्रमाद्भवेत् ॥
पक्षसूत्रद्वयं तिष्ठेत् ब्रह्मसूत्रं न दृश्यते ।
लम्बसूत्रक्रमो ह्येष भक्तिके समुदाहृतः॥ १९८ ॥
स्थानेषु परिवृत्तेषु लम्बसूत्रक्रमो ह्ययम् ।
अन्तरेषु तदर्धेन लम्बसूत्रक्रमो भवेत् १९९ ॥
केशान्ततस्समागत्य भ्रूमध्यान्नासिकाग्रतः ।
चुबुकाद्धृदयान्नाभेर्नाभेश्चरणमध्यगम् ॥ २०० ॥
आभूमेर्मस्तकं यावद्ब्रह्मसूत्रमुदाहृतम् ।
अचलं तदृजुस्थाने स्थानेष्वन्येषु तच्चलम् ॥२०१
पार्श्वयोस्तस्य सूत्रे द्वे षट् षडङ्गुलदूरगे ।
कर्णान्ताच्चुबुकाज्जानुमध्यान्नालकबाह्यतः ॥ २०२॥

पादप्रदेशिनीमध्याद्भूमिं प्राप्ते उभे अपि ।
पक्षसूत्रे समाख्याते सर्वस्थानेषु निश्चले ॥२०३॥
तत्र मानं प्रवक्ष्यामि शरीरे नवतालकम् ।
परमाण्वादिभेदेन यथावोचः? प्रजायते ॥ २०४॥
परमाणुभिरष्टाभिस्त्रसरेणुर्निगद्यते ।
त्रसरेणुभिरष्टाभिर्वालाग्रमभिधीयते ॥ २०५ ॥
वालाग्रैरष्टाभिर्लिक्षा यूका लिक्षाष्टकं भवेत् ।
यूकाष्टकं यवः प्रोक्तो यवाष्टकमथाङ्गुलम् ॥ २०६
एकाङ्गुलं भवेन्मात्रा द्वे मात्रे गोलकं कला ।
त्रिमात्रमध्यर्धकला भागस्तु चतुरङ्गुलम् ॥२०७॥
त्रयो भागा वितस्तिस्स्याद्वितास्तिस्ताल उच्यते ।
तालस्तु मुखमाख्यातं व्यवहाराय कोविदैः ॥
उत्सेधस्तु भवेद्दैर्घ्यं विस्तारस्तिर्यगीरितः ।
आनाहं परिधिस्थौल्यमेवं मानत्रयं भवेत् ॥२०९
दैवतं यल्लिखेद्रूपं यावन्मानमभीप्सितम् ।
विभजेद्वदनं तस्य त्रिभिर्भागैर्विचक्षणः ॥ २१० ॥
केशाद्वदनपर्यन्तं मुखं तदिति च स्मृतम् ।
स्याद्द्वादशाङ्गुलं चक्रं तत्तद्रूपस्य मानतः ॥ २११॥
तालमात्रं मुखं तत्र ग्रीवा स्याच्चतुरङ्गुला ।

तालस्स्याद्धृदयं यावदानाभेस्ताल उच्यते ॥ २१२
नाभेरधस्तात्तालस्तु मेढ्रावधिमितो भवेत् ।
तालद्वयं भवेदूरू जानु स्याच्चतुरङ्गुलम् ॥ २१३ ॥
तालद्वयमिता जङ्घा चरणश्चतुरङ्गुलः ।
नवतालमिदं मानं केशान्तं चरणावधि ॥ २१४ ॥
केशान्तस्योपरि प्रोक्तं मस्तकं चतुरङ्गुलम् ।
केशान्तान्मौलिरुद्दिष्टा शिष्टैरष्टादशाङ्गुलैः ॥ २१५
ब्रह्मसूत्रस्य मानेन तालमानं निरूपितम् ।
तिर्यक्सूत्रविधिं वक्ष्ये प्रतिमिद्धिर्यथाक्रमम् ॥ २१६
मस्तके प्रथमं सूत्रं केशान्ते तदनन्तरम् ।
कर्णाग्रं त्र्यङ्गुलादूर्ध्वं तत्सूत्रं वेष्टयेच्छिरः ॥ २१७ ॥
ततोऽधस्तपतिर्देशे ? द्विमात्रे सूत्रपातनम् ।
तद्याति शङ्खमध्येन कर्णाग्रादूर्ध्वमङ्गुलात् ॥
शिरसः पृष्ठकूर्मस्य प्रोर्ध्वमङ्गुलतो व्रजेत् ।
वेष्टितं घटते सूत्रस्थापने वामतः क्रमात् ॥ २१९
ततोऽङ्गुलं समुत्सृज्य सूत्रपातं प्रकल्पयेत् ।
भ्रुवोस्सङ्गात् भ्रुवोःकान्तान् कर्णाग्रात शीर्षकूर्मगम्
ततोऽङ्गुलं परित्यज्य समारभ्य कनीनिकाम् ।
अपाङ्गात् विप्पलीरूर्ध्वं शिरोगतोर्ध्वगं नयेत् ॥

त्यक्त्वा कलां ततस्सूत्रं नासामध्ये निवेशितम् ।
कपोलेन प्रदेशेन नयेदेषोऽत्र मध्यतः ॥ २२२ ॥
ततोऽङ्गुलद्वये सूत्रं नासाग्रेण कपोलयोः ।
कर्णसूत्रान्नयेत्पृष्ठं केशोत्पत्तिप्रदेशतः ॥२२३ ॥
ततोऽङ्गुलद्वयं सूत्रं नासाग्रेण कपोलयोः ।
ततो ह्यर्धाङ्गुलं त्यक्त्वा वक्त्रमध्याद्विनिस्सृतम् ॥
सूत्रं . . . सृक्कप्रदेशेन प्रापयेत्तत्प्रकाशकम् ।
ततश्चार्धाङ्गुलं त्यक्त्वा सूत्रं स्यादधरोष्ठजम् ॥
हनुसन्धिविभागेन यावत्पश्चिमकन्धरम् ।
ततोऽङ्गुलद्वयं त्यक्त्वा हन्वग्रे सूत्रमिष्यते ॥ २२६
कन्धरास्कन्धसन्धिं तत् समत्वेन प्रपद्यते ।
ततः कलाद्वये त्यक्ते हिक्कायं भुजशीर्षयोः ॥
अधस्तात्ककुदः सूत्रं परावृत्य प्रकल्पयेत् ।
सप्ताङ्गुलं समुत्सृज्य सूत्रं वक्षस्स्थले भवेत् ॥
स्तनरोहितमार्गेण कक्षसन्धौ निवेश्यते ।
तदेव सममार्गेण परावृत्तप्रदेशतः ॥ २२९ ॥
मध्ये फलकमानीतं पृष्ठवंशे समाप्यते ।
ततः पञ्चाङ्गुलं त्यक्त्वा तत्क्रमाद्वृद्धसङ्गतम् ॥ २३०
नयेच्च सममार्गेण सूत्रं चूचुकयोरधः ।

आरभ्य बृहतीदेशाद्बाहु मध्योर्ध्वसङ्गतः ॥२३१॥
परावृत्त्येव तन्नीतं पृष्ठमध्ये समर्पयेत् ।
षडङ्गुलं समुत्सृज्य सूत्रं जठरमध्यगम् ॥ २३२ ॥
बाहुमीनान्नगं नेयं परावृत्या समं हि तत्? ।
भागं कलाधिकं त्यक्त्वा सूत्रं नाभिसमुद्गतम् ॥
श्रोणीमार्गं समानीतं ककुदं सशिरो नयेत् ।
अर्धभागं ततस्त्यक्त्वा सूत्रं पक्वाशयां गतम् ॥
नितम्बमध्यादानीतं स्फिजोरूर्ध्वं नियोजयेत् ।
ततः कलात्रयं त्यक्त्वा सूत्रं काञ्चीपदास्थितम् ॥
स्फिजोर्मध्यप्रदेशेन समं नीत्वा नियोजयेत् ।
त्यक्त्वाङ्गुलानि चत्वारि सूत्रं लिङ्गशिरोगतम् ॥
ऊरुमूलात्समानीतं जघनाभोगसङ्गतम् ।
पञ्चाङ्गुलं परित्यज्य लिङ्गाग्रात्सूत्रमुत्थितम् ॥
स्फिजोरधस्समानीतं वलिमध्ये निवेशयते ।
ततो भागध्वयं त्यक्त्वा सूत्रं पूर्वं निवेशितम् ॥
परित्यज्य ततो भागमाद्यां सूत्रं व्यवस्थितम् ।
ततः कलाद्वये त्यक्ते जानुमूर्धनि सङ्गतम् ॥
इति सूत्रद्वयं तज्ज्ञः समन्तात्परिवेष्टयेत् ।
गोलकद्वितयं त्यक्त्वा स्थापितं जानुरोधतः ॥

सूत्रं तु वेष्टयेत्प्राज्ञः समन्तात्सर्वतस्समम् ।
तालमेकं ततस्त्यक्त्वा शुक्रवस्तौ निवेशितम् ॥
सूत्रमावेष्टयेत्प्राज्ञः समं सर्वविशारदः ।
ततो दशाङ्गुले त्यक्ते यत्सूत्रमलकान्तगम् ॥२४२
गुल्फमस्तकमानीतं पार्ष्णिमस्तकमानयेत् ।
कलामेकां ततस्त्यक्त्वा सूत्रं गुल्फान्तसङ्गतम्[1] ॥
वेष्टयेच्चित्रको धीमान् समं सर्वत्र मानतः ।
ततो भागं परित्यज्य भूयस्सूत्रं प्रयुञ्जते[2] ॥ २४४
षड्विंशतिविधं सूत्रं तिर्यञ्मानेन रूपितम् ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रदेशानां विनिर्णयम् ॥
आकारं च तथा दैर्घ्यं स्थौल्यं विस्तारमेव च ।
छत्राकारं भवेच्छीर्षं शिखादेशे समुन्नतम् ॥२४६
शिखायाः पूर्वभागे तु किञ्चिन्निम्नं भवेत्तथा ।
शिखायाः पार्श्वयोर्निम्नं कलामात्रं विहाय तत् ॥
शिखायाः पश्चिमे भागे प्रोन्नतं जायते मनाक् ।
ततोऽधस्तात्परो गर्तः प्रणाळसदृशाकृतिः ॥ २४८
एकोऽङ्गुलस्तु विस्तारो दैर्घ्यं स्यादङ्गुलद्वयम् ।
कर्णाग्रसन्धौ संलग्नः कर्णपृष्ठेऽङ्गुलान्तरम् ॥ २४९

1 संयुतम्. 2 भूमिसूत्रं परित्यजेत् ॥

ततो ह्यङ्गुलातीत? त्र्यङ्गुलोऽधःकरोद्भवः ।
एकैकाङ्गुलविस्तारः शिरोगर्तस्य पार्श्वयोः ॥२५०
इत्येष पश्चिमे भागे कथितः केशसम्भवः ।
केशाः कृष्णाः विशङ्गा वा जटिलाः कुटिलाः क्वचित्
विरच्यते यथाशोभं तत्तद्रूपानुसारतः ।
अष्टादशाङ्गुलं पूर्वं पश्चिमार्धं तथैव च ॥ २५२ ॥
भवेतां कर्णयोरूर्ध्वं भागौ पूर्वापरौ यमौ ।
सीमन्ताद्गर्भमध्यान्तं भवेदष्टादशाङ्गुलम् ॥
वामदक्षिणयोर्वेष्टात् भवेत्तालैस्तु निर्मितम् ।
एवं भागद्वयेऽप्युक्तो विस्तारो मस्तकाश्रयः॥२५४
षट्त्रिंशदङ्गुलो ज्ञेयः परिणाहो विचक्षणैः ।
भूपृष्ठात्केशपर्यन्तं ललाटं त्र्यङ्गुलं भवेत् ॥ २५५ ॥
भ्रूयुग्ममध्यादारभ्य तदध्यर्धकलामितम् ।
भ्रुवोः प्रान्तात्तदेव स्यात्कलाद्वितियसम्मितम् ॥
आरोपितधनुःप्रख्याद्भ्रुवोल्लेखाद्विरच्यते ।
मात्रार्धकृतविस्तारात्क्रमश्च परिहीयते ॥ २५७ ॥
प्रान्ते श्लक्ष्णा च तीक्ष्णा च सा दैर्घ्यात्त्र्यङ्गुला भवेत्।
त्रिपञ्चरोमदैर्घ्यं तु भ्रुवोर्मध्ये विधीयते ॥ २५८ ॥
द्वितीयं तु भवेदादौ प्रान्ते स्याद्यवमात्रकम् ।

वितर्के हसने कोपे विस्मये मध्यकुञ्चिता ॥२५९॥
जुगुप्सिते सूक्ष्मदृष्टौ भ्रूमूलं कुञ्चितं भवेत् ।
केशान्तरेखाविन्यासो द्वितीयेन्दुकलाकृतिः ॥२६०
प्रान्तादुच्छेफनामानौ प्रदेशौ परिकीर्तितौ ।
उच्छेफाभ्यां समौ कुर्याद्भ्रुवोः प्रान्ते विचक्षणः ॥
एवं ललाटमामानं चतुष्कलमुदाहृतम् ।
उत्क्षेपः प्रीतिदेशे स्याद्दतुरूपालकावली ॥ २६२ ॥
कलामात्रा च सा ज्ञेया स्थापनी सूत्रकारिभिः ।
ततस्तिर्यग्भवेद्रेखा मात्राद्वितयसंयुता ॥ २६३ ॥
निर्गच्छति ततः कूर्चं तद्रेखामात्रया मितम् ।
कूर्चरेखा भ्रुवोः प्रान्ते मध्ये स्यादङ्गुलद्वयम् ॥
स एव शङ्खो विख्यातः प्रदेशविधिकोविदैः ।
पिप्पल्या कूर्चरेखायां भवेदङ्गुलमन्तरम् ॥ २६५ ॥
एवं ललाटविन्यासः कथितस्सोमभूभुजा ।
अर्धाङ्गुलं भ्रुवोर्मध्यं नासामूलं निरूप्यते ॥२६६॥
किञ्चिल्ललाटतो निम्नं तस्याः पार्श्वे कनीनिके ।
समन्तान्नेत्रयोर्गर्तावक्षिकूपौ प्रकल्पितौ ॥ २६७ ॥
अर्धाङ्गुलप्रमाणौ तौ नेत्रवर्त्मबहिस्स्थितौ ।
अर्धाङ्गुलप्रमाणेन नेत्रवर्त्मद्वयं भवेत् ॥ २६८ ॥

निमीलनादूर्ध्ववर्त्म भवेदङ्गुलसम्मितम् ।
त्रियवं पक्ष्मणां दैर्घ्यं साद्रिमा वक्रिमा शुभम्? ॥
अर्धाङ्गुलमिते ख्याते नेत्रमूले कनीनिके ।
द्व्यङ्गुलं नेत्रयोर्दैर्घ्यं विस्तारस्स्यात्तदर्धतः ॥ २७०
एवं पञ्चयवौ कार्यौ शुक्लभागौ विचक्षणैः ।
तन्मध्ये मेचकं कुर्यान्मण्डलं वर्तुलाकृति ॥ २७१
तच्च पञ्चयवं प्रोक्तं तन्मध्ये दृष्टिरिष्यते ।
वर्तुला यवमात्रा च पुत्रकाप्रतिबिम्बिनी ॥ २७२
रक्तता प्रान्तयोश्शस्ता तीक्ष्णताऽपाङ्गयोश्शुभम्[1]।
मध्योन्नतं नेत्रगोळं कर्त्रा कार्यं प्रयत्नतः ॥ २७३
आकारो नेत्रयोः कार्यो नीलोत्पलदलोपमः ।
अपाङ्गयोरधःकार्यौ कपोलौ द्व्यङ्गुलोन्नतौ ॥ २७४
कर्णपिप्पालिदेशान्तौ तिर्यक् सूत्रेण मापितौ ।
अपाङ्गपिप्पलीमध्ये पञ्चाङ्गुलमुदाहृतम् ॥ २७५
तदेव च समं तिर्यङ्मापितं चतुरङ्गुलम् ।
ऊर्ध्वाधोबन्धयोर्मध्ये कर्णयोस्त्र्यङ्गुलं भवेत् ॥
उपर्येकाङ्गुलं पश्चात्कर्णाच्छुष्कुलिमण्डलः ।
कर्णावर्तिर्बहिर्लेखा वृत्तायत्तसुरूपिणी ॥ २७७

[1] भृशम्.

षडङ्गुलायता रम्या सा रेखा परिकीर्तिता ।
अन्तस्यानुभवेद्रेखस्तदाकाराभिरुच्यते?॥ २७८ ॥
रेखाद्वितयमध्यस्य विस्तारः परिकथ्यते ।
आदौ चतुर्यवः प्रोक्तो मध्ये स द्वियवो भवेत् ॥
प्रान्ते तु धुरमात्रं स्यात्क्रमेणैवं निरूपितम् ।
तस्यां मध्याङ्गुले कार्ये पिप्पलीफलसन्निभा ॥
तस्य मूले भवेद्रन्ध्रं शब्दश्रवणकारणम् ।
चतुर्यवप्रमाणं तत् पिप्पल्या विनिगूहितम् ॥
अधस्तात्पिप्पलीभागात् कला लेख्या भवेद्बहिः ।
स्यादध्यर्धाङ्गुलायामा यवत्रितयविस्तृता ॥ २८२
ऊर्ध्वं गत्वा स्पृशेद्रेखां कर्णाभ्यन्तरवर्तिनीम् ।
रेखायाश्च वलेर्मध्ये पिजपीति निगद्यते ॥ २८३ ॥
वलेर्बाह्यप्रदेशस्स्यादुत्पात इति संज्ञया ।
अधोभागेन पिञ्जल्लकारे यत्र च सङ्गतः?॥ २८४ ॥
वलिस्तत्रोन्नता दृश्या सा चूलीति निगद्यते ।
चतुर्यवा यवा ज्ञेया यवाद्वितयविस्तृता ॥ २८५
लकारमध्ये यद्दृश्यं श्रोत्रमध्यस्य पार्श्वगम् ।
तत्कर्णकुहरं प्रोक्तमर्धाङ्गुलमितं शुभम् ॥ २८६
ऊर्ध्वं कर्णस्य विस्तारः स यवद्वयगोलकः ।

मध्ये वा द्व्यङ्गुलो ज्ञेयस्तले मात्रा च षड्यवा॥२८७
ततोऽधः पालिका कार्या चतुरङ्गुलमायता ।
सा दशाङ्गुलविस्तारा मूले मात्रापिताशुभा? ॥
मुनिबालादिकर्णानामविद्धानां विलेखने ।
प्रमाणमङ्गुलं प्रोक्तं कर्णपाल्या विचक्षणैः ॥२८९
विस्तारायामरेखाभिर्नामितो रूपतस्तथा ।
कर्णप्रमाणमाख्यातामिति सोममहीभुजा ॥ २९०
कनीनीमध्यमुद्दिष्टं नासामूलं तदङ्गुलम् ।
अध्यर्धमङ्गुलं मध्यं नासाग्रं द्व्यङ्गुलं भवेत् ॥
घोणाग्रमङ्गुलं तच्च तदर्धेन पुटो भवेत् ।
अङ्गुलद्वयविस्तारं नासायामिति कीर्तितम्॥२९२
घोणाबिलं समुद्दिष्टं कनिष्ठाङ्गुलिमात्रकम् ।
श्रमे श्वासे च हासे च कोपे कामे ततोऽधिकम् ॥
तिलपुष्पसमाकारा किञ्चिदग्रे समुन्नता ।
समयं साच नासोर्ध्वं कथितं सोमभूभुजा॥२९४
ततोऽर्धमात्रं विस्तारः श्मश्रुकेशो निगद्यते ।
स स्याद्विगोलकायामो नासायाः पुरतस्स्थितः ॥
तस्य मध्ये भवेद्गोजिप्रणालाकारधारिणी ।
अर्धाङ्गुला भवेद्दैर्घ्ये विस्तारे त्रियवा भवेत्॥२९६

उत्तरोष्ठे भवेत्तस्या अधस्ताद्भागदैर्घ्यकः ।
यवपञ्चकविस्तारः क्रमशः परिहीयते ॥ २९७
श्मश्रूत्तरोष्ठयोर्मध्ये रेखा किञ्चित्समुज्ज्वला ।
उन्नता यवमात्रा स्याद्दैर्घ्यादोष्ठप्रमाणिनी ॥ २९८
अधरोष्ठा भवेत्तस्मादधस्ताद्भागदैर्घ्यवान् ।
ओष्ठयोरुभयोः प्रान्तसंयोगे सृक्किणी मते ॥ २९९
नेत्रे ज्योतिस्समे कार्ये विकाररहिताकृती ।
विकारो वर्धते सृक्का तथा सङ्कोचमेति सः ॥
हसने दन्तनिष्कासे भीतमर्कटरोधने ।
वर्धते सृक्किणीद्वन्द्वमेकाङ्गुलसमायतम् ॥ ३०१
चुम्बने फूत्कृतौ तद्वदाम्रादिफलचूषणे ।
सङ्कुचेत्सृक्किणोर्द्वन्द्वमेकैकाङ्गुलहानितः ॥ ३०२
गोजिह्वाऽधरयोर्मध्यं व्यासेन चतुरङ्गुलम् ।
पार्श्वद्वयं क्रमाद्धीनं त्रिद्व्येकाङ्गुलमानतः ॥ ३०३
दन्ता द्वादश दृश्यास्स्युः पङ्क्तिद्वयसमाश्रिताः ।
ऊर्ध्वाः पञ्च[1] यवां दृश्यास्तलस्थास्त्रियवास्तथा ॥
राजदन्तौ तु मध्यस्थावूर्ध्वपङ्क्तिसमाश्रितौ ।
तयोः पार्श्वगतौ मध्यौ तत्पार्श्वे पारिपक्षकौ ॥

---

[1] एक.

अधः पङ्क्तिगतौ साध्यौ दन्तौ सन्दंशनामकौ ।
तत्पार्श्वगौ कर्तनाख्यौ ततः स्यातां तु खण्डनौ ॥
सुश्लक्ष्णाः कान्तिसम्पन्नाः स्वच्छाऽऽशुभ्रा निरन्तराः
दशनाश्शिल्पिभिः कार्या अच्छाया लेखनेऽपि च ॥
वीटिकाखण्डने हासे त्रासादङ्गुलिचर्वणे ।
दर्पणालोकने दृश्या दशनच्छदगूहिका ॥ ३०८ ॥
सृक्किणोः पार्श्वगौ देशौ गण्डौ स्यातां निरस्थिकौ ।
तस्माद्बहिश्चलास्थि स्यात्कर्णमूलेन सङ्गतम् ॥
क्रमशो हीयते तत्तु यावत्स्याद्धनुमण्डलम् ।
सार्धाङ्गुलं भवेदूर्ध्वं तिर्यक् स्याच्चतुरङ्गुलम् ॥
अधरोष्ठतलोद्देशो चिबुकं समुदाहृतम् ।
कुब्जकूर्चं भवेत्तस्मिन्निम्ने मात्राप्रमाणके ॥ ३११
हनुपृष्ठे भवेत्कूर्चं प्रबलास्थिक्रमेण तु ।
यवमात्रं प्रकुर्वीत कूर्चं प्रथमसम्भवम् ॥ ३१२
द्व्यष्टवत्सरदेशस्य पुरुषस्य विचक्षणः ।
प्रकुर्वीत ततश्चोर्ध्वमधिकं यवमानतः ॥ ३१३
अर्धा[1]ङ्गुला भवेद्ग्रीवा विस्तारेण निरूपिता ।
त्रिरला सा च दैर्घ्येण परिणाहे द्वितालिका ॥

[1] अष्टा.

ग्रीवामध्यप्रदेशे तु निगालः परिकीर्तितः ।
अधस्तस्य भवेद्धिक्का मात्रामात्रा प्रकीर्तिता॥ ३१५
हिक्काया हृदये तालस्तालश्च स्तनचूचुके ।
कक्षामूले तथा तालः तालः कक्षधरो भवेत् ॥
कन्धरास्कन्धसन्धिस्स्यात् हिक्कायाश्चतुरङ्गुलः ।
कक्षामूलात्कुक्षिधरो भवेदष्टाङ्गुलायतः ॥ ३१७
हिक्कायाः पार्श्वयोर्लग्ने जत्रुणी भुजमूर्धनि ।
एकादशाङ्गुले प्रोक्ते किञ्चिदुन्नतविग्रहे ॥ ३१८ ॥
हिक्कायाः कक्षमूलाच्च स्तनचूचुकबाह्यतः ।
मध्ये वक्षस्थलं प्रोक्तं तालमात्रं समन्ततः॥३१९
द्वयोश्चिबुकयोर्मध्यं तालमात्रमुदाहृतम् ।
कुचचूचकयोर्वृत्तं मेचकं द्वयङ्गुलं भवेत् ॥ ३२० ॥
चूचुके मण्डलस्यान्तर्यवमात्रं निगद्यते ।
उत्सेधाद्विस्तृते तद्वत्प्रमाणेन प्रकीर्तितम् ॥३२१॥
स्त्रीणां तु द्वियवं कार्यं चूचुकं चित्रकोविदैः ।
प्रोक्तस्थानपरीणाहस्स्तन ष्वादशाङ्गुळ? ॥ ३२२
बृहती नामतः ख्यातं कक्षमूलस्तनान्तरम् ।
षडङ्गुलं च मानेन सूत्रितं सूत्रकोविदैः ॥ ३२३ ॥
स्तनद्वितयमध्यस्थः किञ्चिन्निम्नः कलामितः ।

प्रदेशो बन्धुरित्युक्तश्चित्रशास्त्रविशारदैः ॥ ३२४ ॥
कन्धरास्कन्धसन्धिश्च बाहुमूर्धनि भागतः ।
पूर्वापरे कक्षमूले ताले[1] नैकेन सम्मिते ॥ ३२५ ॥
अभ्यन्तरे तथैव स्यात्ताल एको निरूपितः ।
कक्षमूले परीणाहस्तदेवं स्याद्वितालकम् ॥ ३२६ ॥
बाहुशीर्षस्य बाह्वोश्च सन्धिस्थानं निरूपितम् ।
अक्षमूलाद्भवेद्बन्दं तिर्यक्सूत्रप्रमाणकम् ॥ ३२७ ॥
बन्धुदेशाद्भवेन्नाभिस्तालेनैकेन मापिता ।
नाभिरङ्गुलविस्तारा वर्तुलार्धाङ्गुला परा ॥ ३२८
वृद्धस्य पार्श्वयोस्तिर्यक् विस्तारा स तु भागिकः ।
चतुर्यवसमोपेतस्त्वेवं सप्तदशाङ्गुलः ॥ ३२९ ॥
वार्ध[2] देशो परीणाह एकपञ्चादशादङ्गुलः ।
ततोऽधो मध्यभागस्तु प्रोक्तो मनुमिताङ्गुलः ॥
मध्यभागपरिणाहो द्विचत्वारिंशदङ्गुलः ।
नाभिदेशस्य विस्तारो भवेच्चन्द्रकलाङ्गुलः ॥ ३३१
नाभिस्थाने परीणाहो भवेत्तालचतुष्टयम् ।
श्रोणीदेशः परिख्यातः कायस्थानपरीक्षकैः ॥
पक्वाशयगते सूत्रे विस्तारोऽष्टादशाङ्गुलः ।
पक्वाशयपरीणाहः चतुष्पञ्चाशदङ्गुलः ॥ ३३३ ॥

---

[1] मले.  [2] बन्ध.

स प्रदेशः कटिर्नाम काञ्चीदामविधारकः ।
स्त्रीणां चेदधिकः कार्यो भागेनैकेन कर्तृभिः ॥
वस्तिमस्तकसूत्रस्य सप्तपञ्चादशाङ्गुलः ।
परिणाहो विधातव्यस्तन्त्रीभागे वितस्तिभिः ॥
वस्तिस्थानस्य विस्तारो विंशत्यङ्गुलसम्मितः ।
तस्य प्रोक्तः परीणाहः षड्द्व्यङ्गुलामितो बुधैः ॥
जठरं वक्षसा युक्तं कार्यं गोमुखसन्निभम् ।
स्त्रीणां मध्यं कृशं कार्यं नाहेन त्रिदशाङ्गुलम् ॥
भागेनैकेन तस्याधो लिङ्गसूत्रं प्रकल्पयेत् ।
लिङ्गस्य मूलविस्तारः कलामात्रो निगद्यते ॥
पार्श्वयोरुभयोस्तस्य मुष्कमूलं हि मात्रिकम् ।
एवं च लिङ्गमुष्कस्य मूलं स्याच्चतुरङ्गुलम् ॥
पञ्चाङ्गुलं लिङ्गदैर्घ्यं मुष्कयोश्चतुरङ्गुलम् ।
मूलोपान्ते प्रकर्तव्ये रेखे द्वे दक्षिणाश्रिते ॥ ३४०
विनिर्गते कलामात्रं तयोर्मध्यं द्विभागिकम् ।
रेखयोः प्रान्ततो वस्तेर्विस्तारस्स्यात् षडङ्गुलः ॥
भाग एको लिङ्गदैर्घ्यं मणिरेखाङ्गुलस्ततः ।
षडङ्गुलः परीणाहो मणिमूलोऽधिको मनाक् ॥
मुष्कयोर्भागिकं दैर्घ्यं तदर्धं बीजसंयुतम् ।

त्वगेव मूलभागे स्यात्तल्लीना सा प्रकल्प्यते ॥
मुष्कौ सबीजकौ वृत्तौ भागद्वयविभाजितौ ।
तालमात्रपरीणाहौ कर्तव्यौ शिल्पिकोविदैः॥३४४
अधस्तान्नीतसूत्रस्य लग्ने स्यातां कुकुन्दरे ।
पश्चाद्भागे प्रकर्तव्ये भागद्वयकृतान्तरे ॥ ३४५
वस्तिमस्तकसूत्रस्य कटिसूत्रस्य चान्तरम् ।
फलकाकृति कर्तव्यं पश्चाद्भागं च शिल्पिभिः ॥
वस्तिमस्तकसूत्राच्च लिङ्गाग्रपरिमाणकैः ।
स्फिजौ चैव विधातव्ये करिकुम्भसहोदरे ॥ ३४७
स्फिजोरधः परीणाहस्त्रयस्त्रिंशन्मिताङ्गुलः ।
ऊरुमध्यपरीणाहः कार्यष्षट्त्रिंशदङ्गुलः ॥ ३४८
श्रोणिदेशपरीणाहो भवेत्तालद्वयान्वितः ।
क्रमशो हीयमानौ तावूरू कार्यौ विचक्षणैः ॥
अलोमकौ वलीशून्यौ रम्भास्तम्भकृतोपमौ ।
श्लक्ष्णौ मनोहरौ वृत्तावूरू कार्यौ विचक्षणैः ॥
ततस्तु जानुनी कार्ये चतुरङ्गुलमायते ।
अङ्गुलत्रयविस्तारे तत्पार्श्वौ द्विकलौ मतौ ॥ ३५१
परिणाहौ निरुच्यौ स्यादङ्गुलान्येकविंशतिः ।
पश्चाद्भागे मनाङ्निम्ने मध्ये किञ्चित्समुन्नते ॥

जङ्घामूलपरीणाहो भवेत् षोडशमातृकः ।
इन्द्रवस्तिपरीणाहो भवेदष्टादशाङ्गुलः ॥ ३५३
जङ्घाप्रान्तपरीणाहश्चतुर्दशभिरङ्गुलैः ।
ततो गुल्फप्रदेशस्य नाहस्स्यात् षोडशाङ्गुलः ॥
चतुर्दशाङ्गुलं दैर्घ्यं चरणे गणितं बुधैः ।
उच्छ्रायः पार्ष्णिदेशस्य गणितश्चतुरङ्गुलः ॥ ३५५
तिर्यक् सूत्रसमं पार्ष्णेस्त्र्यङ्गुलं समुदाहृतम् ।
पार्ष्णिदेशस्य विस्तारो भवेत्पञ्चभिरङ्गुलैः ॥ ३५६
भागमात्रः कलादूर्ध्वं पार्ष्णितो भागतः परः[1] ।
गुल्फौ द्व्यङ्गुलकौ कार्यौ विस्तारेण समन्ततः ॥
पादपृष्ठं तु कर्तव्यं प्रोन्नतं गजपृष्ठवत् ।
तस्याधस्स्थलदेशस्तु निम्नोऽभ्यन्तरतो भवेत् ॥
बहिर्भागे समं कार्यं पार्ष्णेर्यावत्कनिष्ठिका ।
अङ्गुष्ठमूलदेशे तु तलं कार्यं समुन्नतम् ॥ ३५९
पादाग्रतलविस्तारष्षडङ्गुल उदाहृतः ।
पार्ष्णेश्च तलविस्तारः कथितश्चतुरङ्गुलः ॥ ३६०
पादपृष्ठस्य चोत्सेधभागस्त्वर्धाङ्गुलाधिकः ।
अग्रपादस्य चोत्सेधस्त्र्यङ्गुलस्समुदाहृतः ॥ ३६१

[1] भागमात्रतरादूर्ध्वं पार्ष्णितो भागतः पुरः.

अङ्गुष्ठमूलदेशस्य त्र्यङ्गुलस्स्यात्समुच्छ्रयः ।
अङ्गुष्ठस्य समुत्सेधो मात्रा स्याद्द्वियवाधिका॥३६२
अङ्गुष्ठदैर्घ्यमुद्दिष्टमङ्गुलत्रय[1]सम्मितम् ।
अङ्गुष्ठस्य परीणाहो भवेत्पञ्चभिरङ्गुलैः ॥ ३६३ ॥
द्विपर्वाङ्गुलमुद्दिष्टं प्रान्तपर्वान्ततो[2] नखः ।
तर्जनीदैर्घ्यमुद्दिष्टं त्र्यङ्गुलं द्वियवाधिकम् ॥ ३६४
अङ्गुलेस्तु परीणाहः तस्याः पर्वत्रयं भवेत् ।
मध्यमादैर्घ्यमुद्दिष्टं यवा द्वाविंशतिर्बुधैः ॥ ३६५ ॥
परिणाहस्तु तस्यास्स्याद्यवानामेकविंशतिः ।
आयामोऽनामिकायाश्च यवविंशतिरिष्यते ॥ ३६६
अनामिकापरीणाहः कार्योऽष्टादशभिर्यवैः ।
कनिष्ठादैर्घ्यमाख्यातं सप्तभिर्दशभिर्यवैः ॥ ३६७ ॥
कनिष्ठायाः परीणाहो यवाः पञ्चदश स्मृताः ।
पर्वत्रयं तु सर्वासामङ्गुलीनां प्रदर्शितम् ॥ ३६८ ॥
अर्धाङ्गुलसमुत्सेधस्सर्वासामग्रतो भवेत् ।
सर्वासां पादशाखानामग्रपर्वार्धतो नखाः ॥ ३६९ ॥
आताम्रास्ते तु कर्तव्याश्चित्रकर्मविशारदैः ।
कराग्रात् स्कन्ध[3]सन्धेस्तु पश्चाद्भागे कृकाटिका ॥

---

[1] द्वय.  [2] द्विपर्वाङ्गुष्ठतो  [3] कन्धरात् पर्व.

कृकाटीदेशतः कक्षामूलमेकादशाङ्गुलम् ।
स्कन्धाभ्यां निर्गतौ वंशफलकौ षट्षडङ्गुलौ ॥
तयोर्मध्ये भवेद्वंशः कलामात्रप्रमाणतः ।
उत्तानकदलीपत्रसन्निभः पृष्ठवंशकः ॥ ३७२ ॥
तदेवं पृष्ठभागस्य स्वरूपं परिकीर्तितम् ।
कक्षातः कूर्परं यावत् बाहुपर्वेति कथ्यते ॥३७३॥
अष्टादशाङ्गुलैर्दैर्घ्यान्नाभेरष्टादशाङ्गुलम् ।
कूर्परात्तालुपर्यन्तं पर्व सप्तदशाङ्गुलम् ॥ ३७४ ॥
परिणाहस्तु स ज्ञेयः[1] षोडशाङ्गुलसम्मितः ।
प्रकोष्ठस्य परिणाहश्चतुर्दशभिरङ्गुलैः ॥ ३७५
मणिबन्धपरीणाहः कर्तव्यो द्वादशाङ्गुलः ।
विस्तारस्त्रिकलो बाह्वोः कूर्पराङ्गुलपञ्चकम् ॥ ३७६
परिणाहत्रिभागेन प्रबाह्वोर्विस्तृतिर्मता ।
प्रकोष्ठे मणिबन्धे च परिणाहास्त्रिभागतः ॥ ३७७
एवं भुजस्य विस्तारः परिणाहश्च वर्णितः ।
सप्ताङ्गुलानि पार्ष्णेस्स्युः मध्यमाङ्गुलमूलतः ॥
षडङ्गुलं तु तर्जन्या अनामेस्सार्धपञ्चकम् ।
कनिष्ठामूलरेखाया भवेदङ्गुलपञ्चकम् ॥ ३७९

1 परीणाहः प्रबाह्वोस्तु,

इत्यायामस्तलः प्रोक्तः पञ्चमात्रा तु विस्तृतिः ।
अङ्गुष्ठमूलरेखायास्तर्जन्याश्च तथैव च ॥ ३८०
मध्यभागप्रमाणं स्यादङ्गुलत्रयसम्मितम् ।
कनिष्ठामूलरेखाया अधस्तादङ्गुलान्तरे ॥ ३८१
अनामेः कलया मूलमध्यायाः सार्धमात्रया ।
अयुर्लेखा भवेत्सा तु किञ्चिद्वक्रा प्रशस्यते ॥
मध्यमातर्जिनीमध्ये प्रविष्टां संप्रकल्पयेत् ।
अङ्गुष्ठमूलतर्जन्योस्त्र्यङ्गुलान्तरमध्यगा ॥ ३८३ ॥
शक्तिरेखा प्रकल्प्या स्यात्साऽपि वक्रा मनाग्भवेत् ।
मध्यमाया अधोभागे गोलकद्वितयान्तरे ॥ ३८४ ॥
अनामिकाकनिष्ठायास्सा स्यात् त्र्यङ्गुलदूरगा ।
तलमध्ये भवेदन्या रेखा[1] कार्मुकसन्निभा ॥ ३८५
पुंरेखा[2] लेखनीया तु सङ्गता शक्तिरेखया ।
कनिष्ठाऽनामिमध्यानां सन्धिस्सङ्कोचकारकः ॥
आयुर्लेखा भवेत्तत्र पुरा प्रोक्ता तु या मया ।
तर्जनीसन्धिदेशे तु शक्तिरेखासमुद्भवः ॥ ३८७ ॥
अङ्गुष्ठतलसन्धौ तु पुंरेखा संव्यवस्थिता ।
अङ्गुलत्रितयं सा स्यादायामेन कनिष्ठिका ॥

[1] ह्रस्वा. [2] सुरेखा.

अनामा द्विकलायामा यवद्वयसमन्विता ।
पञ्चाङ्गुलायता मध्या तर्जनी चतुरङ्गुला ॥ ३८९ ॥
अङ्गुष्ठस्य तदा दैर्घ्यं चतुरङ्गुलमीरितम् ।
अङ्गुष्ठस्य परिणाहः कर्तव्यश्चतुरङ्गुलः ॥ ३९०
तर्जन्यास्तु परीणाहस्त्र्यङ्गुलः परिकीर्तितः ।
सार्धाध्यर्धकला प्रोक्ता मध्यमापरिणाहतः ॥ ३९१
अनामा तर्जनीप्रख्या यवयुग्मेन हीयते ।
अनामिकापरीणाहस्त्र्यङ्गुलः परिकीर्तितः ॥ ३९२
अनामिकापरीणाहाद्द्वियवोना कनिष्ठिका ।
एवं दैर्घ्यपरीणाहः स्फुटं प्रोक्तः प्रमाणतः ॥
अङ्गुष्ठप्रथमं पर्व द्व्यङ्गुलं द्वियवाधिकम् ।
अग्रपर्व तथा प्रोक्तमङ्गुलाद्द्वियवाधिकम्[1] ॥ ३९४
अङ्गुष्ठस्य बहिः पर्व तृतीयं द्व्यङ्गुलं भवेत् ।
पृष्ठेऽर्धपर्वणश्चार्धे भवेन्नखसमुद्भवः ॥ ३९५
तर्जन्याः प्रथमं पर्व सार्धाङ्गुलमितं भवत्[2] ।
अङ्गुष्ठमध्यमं पर्व कीर्तितं द्वियवाधिकम् ॥ ३९६
आदिमं च तथैवोक्तं तदर्धे नखसम्भवः ।
पश्चिमं प्रथमं पर्व कथितं त्र्यङ्गुलायतम् ॥ ३९७

[1] द्वियवोनकम्.     [2] यवा. पञ्चदश स्मृताः.

मध्यमं पञ्च . . . . यवपञ्चदश स्मृतम्? ।
चतुर्दश द्वितीयं स्यादेकादश तृतीयकम् ॥ ३९८
त्रीण्यङ्गुलानि सार्धानि मध्यार्धं पर्व पश्चिमम् ।
अग्रपर्वार्धपृष्ठे तु नखः कार्यो विचक्षणैः ॥३९९॥
अनामेः प्रथमं पर्व सार्धमङ्गुलमिष्यते[1] ।
द्वितीयं च तथैव स्यात्तृतीयं तु यवा दश ॥४००॥
तस्यां पश्चिमपूर्वः स्यादेकादश तृतीयकम् ।
पूर्वस्मिन्नखरस्तस्मिन्नङ्गुल्यग्रे प्रकथ्यते ॥ ४०१ ॥
कनिष्ठाप्रथमं पर्व यवा दश तथाग्रिमम् ।
अङ्गुलं मध्यपर्व स्यात् तस्याः पूर्वत्र[2] पर्वाणि ॥
प्रथमे द्व्यङ्गुलं सार्धं दैर्घ्यं स्यात् पूर्ववन्नखः ।
निर्लोम प्रोज्ज्वलं कार्यं पाण्यङ्गुलितलं बुधैः ॥
अङ्गुल्यग्रे यवादर्वाक् सजीवः क्रियते बुधैः ।
ततोऽग्रे जीवहीनं तु नखाग्रं परिकल्प्यते ॥४०४॥
सजीवो लोहितः किञ्चित् निर्जीवो मधुरच्छविः ।
यवात्रितयमानेन नखाग्रं परिकल्पयेत् ॥ ४०५ ॥
प्रदेशलक्षणं प्रोक्तं स्थानानां लक्ष्म वक्ष्यते ।
पञ्चानां च चतुर्णां च तथा स्थानं यथाक्रमम् ॥

---

1 यवा दशामितं तथा. 2 पृष्ठे च.

ऋजु स्यात् सन्मुखं स्थानमन्यदर्ध्यर्जुसंज्ञितम् ।
तृतीयं स्थानकं साचि तुर्यार्धार्धाक्षिसंज्ञितम् ॥
पञ्चमं भित्तिकं प्राहुस्तज्ज्ञाः पार्श्वगतं च तत् ।
पञ्च स्थानानि मुख्यानि कथितानीह संज्ञया ॥
ऋज्वादिपदपूर्वं स्यात्परावृत्तं चतुर्विधम् ।
स्थानकानि नवैव स्युश्चित्रलेखाविधिं प्रति ॥ ४०९
नवस्थानकमध्ये स्युरष्टौ व्यन्तरसंज्ञया ।
तेषां तु लक्षणं वक्ष्ये ब्रह्मसूत्रविशेषतः ॥ ४१० ॥
पूर्वतः पूर्वभागस्स्यात्परभागस्तु पृष्ठतः ।
सुप्रमाणेवृद्धिभागो हीनश्चेत् क्षयभागकः ॥
चतुष्टयं प्रकाराणां व्यवहाराय दर्शितम् ।
भूलोकमल्लदेवेन बोधार्थं शिल्पकारिणाम् ॥
ब्रह्मसूत्राद्बहिस्सूत्रे षट्षडङ्गुलमध्यगे ।
यत्तत्स्यात्तदृजु स्थानं रूपमामुख्ययोगितम् ॥
सन्स्मुखं स्यादृजुस्थानं परभागोऽत्र नेक्ष्यते ।
पूर्वभागगतं गात्रं सम्पूर्णं दृश्यते स्फुटम् ॥ ४१४
कर्णौ मात्रामितावत्र शङ्खावङ्गुलिसम्मितौ ।
पादौ भागमितौ दृश्यावङ्गुल्यो वै त्रिभागिकाः ॥
ऋजु स्थानमिदं प्रोक्तं वक्राकारस्य धारणात् ।

अथार्धर्जुं प्रवक्ष्यामि स्थानकं च क्रमायतम् ॥
अन्तरं ब्रह्मसूत्रस्य चैकतः . . . . . . ।
अर्धा[1]ङ्गुलं ततोऽन्यत्र चतुरङ्गुलमन्तरम् ॥ ४१७॥
उक्तेऽप्यर्धर्जुगे स्थाने लम्बसूत्राक्रियाक्रमः ।
इदानीं सम्प्रवक्ष्यामि साचिसूत्रस्य लक्षणम् ॥
अपाङ्गात्कर्णपाल्याश्च स्तनस्यान्तरपार्श्वतः ।
जानुत्रिभागतो गुह्ये जङ्घाप्रान्ताद्विनिर्गतम् ॥
परभागगते पादे कल्प्यतेऽङ्गुष्ठमूलतः ।
ततस्स्तनप्रदेशाच्च कुचचूचुकतो बहिः ॥ ४२० ॥
जानुतः पञ्चमांशेन बहिर्भागे व्यवस्थितम् ।
पूर्वभागे तु मध्याया अनामायाश्च मध्यगम् ॥
स्यातामेवं पक्षसूत्रे ब्रह्मसूत्रं तु कथ्यते ।
ललाटे च भ्रुवोर्मध्ये नासाग्रे वा धृतो बहिः ॥
नाभिरन्ध्रबहिःपार्श्वे लिङ्गमध्ये समागतम् ।
परभागे तु तस्याङ्घ्रेर्गुल्फस्योपरि सङ्गतम् ॥ ४२३
ब्रह्मसूत्रप्रकारोऽयं भागेनैकेन संयुतः[2] ।
कथितोऽथ प्रदेशानां सन्निवेशो विधीयते ॥४२४॥
परभागे प्रदृश्येत कर्णावर्तौ यवद्वयम् ।

---

[1] अष्टा. [2] संकटम्.

इतरल्लुप्यते सर्वं तत्पाली दृश्यते मनाक् ॥ १२५
शङ्खश्चैवाक्षिकूटश्च कूर्चमूलं तथैव च ।
लुप्यते परभागे तु स्थानकेऽर्धर्जुसंज्ञिते ॥ १२६ ॥
पञ्चाङ्गुलं बाहुमूलं परभागे प्रदृश्यते ।
परभागे ततश्चाङ्घ्रेः किञ्चित्तिर्यग्बहिर्भवेत् ॥१२७॥
कर्णावर्तस्य यः प्रान्तः पूर्वभागे प्रलुप्यते।
सार्धाङ्गुलं प्रदृश्यं स्याच्छ्रवणे पूर्वभागतः ॥ १२८
नासिकाग्रं यवाः पञ्च परभागं व्यवस्थितम् ।
यवत्रयं पुटं तस्य ब्रह्मसूत्रव्यवस्थितिः ॥ १२९ ॥
नासापुटात्कपोलं स्यात्सार्धं द्व्यङ्गुलमन्तरम् ।
परभागौष्ठयुग्मस्य मात्रासन्धिर्यवो[1] भवेत् ॥
हनुश्चैव तथा ग्रीवा परभागेऽङ्गुलद्वयम् ।
ब्रह्मसूत्रात्परो भागो ग्रीवा दृश्या षडङ्गुला ॥१३१
ब्रह्मसूत्रपुरोभागो हिक्कामात्रान्तरो भवेत् ।
हन्वग्रात्परभागेऽसमधस्तादङ्गुले लिखेत् ॥ १३२ ॥
वार्धस्थब्रह्मसूत्रं च परभागस्थितस्ततः ।
पञ्चाङ्गुले प्रकर्तव्यः पुरस्सप्ताङ्गुलान्तरे ॥ १३३ ॥
कक्षमूलाद्बहिर्लेख्या बाहुमूलसमाश्रिता ।

---

[1] सा द्वियवा.

अष्टाङ्गुलान्तरा लेख्या चित्रकर्मविशारदैः ॥४३४
कक्षाद्वितयमध्ये स्यादङ्गुलानां तु विंशतिः ।
पञ्चाङ्गुलं परे भागे बाहुमूलं प्रकल्पयेत् ॥ ४३५ ॥
चूचुकात्परभागस्था बृहती द्व्यङ्गुले लिखेत् ।
लिखेत्पूर्वं कलाद्वन्द्वे बहिर्लेखां शरीरगाम्॥४३६॥
विस्तारे परभागश्च चतुर्विंशतिपर्वणः[1] ।
आयतोऽयं बुधैः कार्यो वृत्तः पूर्वकलामितः ॥
पार्श्वसूत्रे तु संलग्ना मध्यभागगता बुधैः ।
लेखनीया बहिर्लेखा पूर्वभागं समाश्रिता ॥४३८
नाभिगर्तात्तथा श्रोणी सार्धपञ्चाङ्गुलान्तरे ।
पूर्वभागे तथा श्रोणी भवेद्दशभिरङ्गुलैः ॥ ४३९
ब्रह्मसूत्रात्तथा काञ्ची परभागे षडङ्गुला ।
एकादशाङ्गुला पूर्वे भागे लेख्या विचक्षणैः॥४४०
मेढ्रमूलं परे भागे मात्रार्धं भागयुग्मकम् ।
दशाङ्गुलं पूर्वभागे लेखनीयं विशारदैः ॥ ४४१ ॥
लिङ्गमूलं परे भागे वङ्क्षणस्सार्धमङ्गुलम् ।
अङ्गुलद्वितयं सार्धं पूर्वभागे तु वङ्क्षणः ॥४४२ ॥
वङ्क्षणात्परभागस्थः सूत्र[2]शीर्षं बहिस्स्थितम् ।

[1] चतुर्दश यवास्ततः.　　[2] ऊरु

अष्टाङ्गुलं परे भागे पूर्वे तु त्रिदशाङ्गुलम् ॥४४३॥
परस्थमूरुमूलं तु मध्यादङ्गुलगूहितम् ।
पूर्वस्थितोरुमूलेन चित्रलेखनकोविदैः ॥ ४४४ ॥
जानुमण्डलतो बाह्यं कलामात्रं प्रदृश्यते ।
परभागे परे पादे पूर्वभागे कलाद्वयम् ॥ ४४५॥
पूर्वस्याङ्घ्रेरिदं मानं विपरीतं प्रदृश्यते ।
इतरत्सर्वमृजुवत्पूर्वजङ्घा[1] कृतं भवेत् ॥ ४४६ ॥
पूर्वभागाङ्गुष्ठमूलं परपार्ष्णिसमं लिखेत् ।
नखाग्रोपरि पादस्य भूमिसूत्रं विधीयते ॥ ४४७ ॥
पार्ष्णिप्रदेशिनी यावत्पाददैर्घ्यं नवाङ्गुलम् ।
पराधाङ्गुष्ठतश्चोर्ध्वामङ्गुलिं परिकल्पयेत् ॥ ४४८ ॥
प्रदेशिन्याः समारभ्य कनिष्ठा यावदङ्गुलः ।
यवद्वयविहीनास्स्युरङ्गुल्यः क्रमविस्तृताः ॥ ४४९॥
भूमिसूत्रादधोभागे ह्यङ्गुष्ठं[2] परिकल्पयेत् ।
कनिष्ठाग्रं तथा कार्यं भूमिसूत्रसमं यथा ॥४५०
अर्धर्जुकामिति स्थानं क्रमशो लक्षणान्वितम् ।
साम्प्रतं क्रमशः प्राप्तं साचिस्थानं निगद्यते ॥
अङ्गुलानि दशैकत्र कलामात्रं ततोऽन्यतः ।

[1] परजङ्घा [2] गुल्फमङ्गुष्ठम्

अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रद्वयस्य च ॥ ४५२ ॥
साचिस्थाने समाख्यातमूर्ध्वसूत्रमिति क्रमः ।
इदानीं वक्ष्यतेऽस्माभिः साचिरूपविनिर्णयः॥४५३
ललाटलोचनप्रान्तात् कपोलस्कन्धदेशतः ।
एकाङ्गुलस्स्तनस्यान्तर्नाभेस्सार्धाङ्गुलाद्बहिः ॥
वंक्षणादाणिदेशाच्च बहिर्व्यक्तं विनिर्गतम् ।
परपादाङ्गुष्ठमूले पार्श्वसूत्रं विनिर्दिशेत् ॥ ४५५ ॥
सीमन्ताच्च भ्रुवोर्मध्यान्नासारन्ध्रस्य मध्यतः ।
त्र्यङ्गुलार्धार्धतः पश्चान्नाभिरन्ध्रस्य मध्यतः ॥
मेहनस्य बहिर्भागाज्जानुमण्डलपूर्वतः ।
नलकस्य तथा प्रान्ताद्ब्रह्मसूत्रं न्यसेत्क्रमात् ॥
मस्तकस्य तथा पृष्ठात्कर्णोपान्तात्तथैव च ।
कन्धरास्कन्धसन्धेश्च स्तनचूचुकमण्डलात् ॥४५८
अङ्गुलात्पूर्वतश्चैव मध्यभागेन सङ्गतम् ।
कलामात्रं परित्यज्य काञ्चीदेशस्य मध्यतः ॥
मणिबन्धगतं तद्वत् पूर्वपादस्य पार्ष्णितः ।
अन्यपार्श्वगतं सूत्रं क्रमेणैव निरूपितम् ॥ ४६० ॥
ब्रह्मसूत्राद्बहिर्लेखात्केशान्ते परभागिकः ।
लिख्यते तु कलामानान्मस्तकस्यार्धमङ्गुलम् ॥

भाग एकः प्रदृश्यस्स्यादुत्सेधः पूर्वभागिकः ।
उत्सेधाच्च कलामानाद्बहिर्लेखा शिरस्स्थिता ॥
उत्सेधप्रान्ततो रेखा भागद्वयकृतान्तरा ।
ततश्शरासनाकारा कर्णावर्ताग्रगामिनी ॥४६३॥
लिख्यते शिरसो लेखा भागद्वयकृतान्तरा ।
शङ्खप्रदेशो केशान्ता लिख्यते सुविचक्षणैः॥ ४६४
केशान्ते परभागस्य ब्रह्मसूत्रस्य लक्षणम्[1] ।
कलामात्रं विनिर्दिष्टं भ्रूलेखार्धयवाधिका ॥४६५॥
भ्रूरेखा द्व्यङ्गुला दृश्या नासामूलं चतुर्यवम् ।
कनीनी लुप्यते तत्र श्वेतभागस्तु दृश्यते ॥
दृश्यते त्रियवज्योतिरवशिष्टं विलुप्यते ।
ब्रह्मसूत्राच्च नेत्रान्तमेवं सार्धाङ्गुलान्तरम् ॥
नासामूलाद्वर्त्मरेखा वक्रा कार्या विचक्षणैः ।
ब्रह्मसूत्राद्वर्त्मरेखाप्रान्तो रुद्रयवैर्मितः ॥ ४६८ ॥
यवद्वयं प्रलुप्येत पूर्वभागस्य चक्षुषः ।
करवीरस्मितो भाग इतरद्दृश्यते स्फुटम् ॥ ४६९
ब्रह्मसूत्रस्य नेत्रस्य सार्धमङ्गुलमन्तरम् ।
अक्षिकूटश्च शङ्खश्च कपोलो गण्डमण्डलम् ॥

1 चान्तरे.

पिप्पली कर्णपाली च कर्णमूली प्रदृश्यते ।
कर्णपक्षत्रिभागेन[1] दृश्यते पूर्वभागतः ॥ ४७१ ॥
नासामध्यं ब्रह्मसूत्राच्चतुर्यवमुदीरितम् ।
परभागे कपोलस्था बहिर्लेखा चतुर्यवा ॥ ४७२॥
परभागस्थनेत्रस्य वुद्ध्वत्र्म कपोलतः ।
ऊर्ध्वं विनिर्गतं कार्यं परिणाहाद्यवद्वयम् ॥४७३ ॥
नासाग्रं परभागस्थं ब्रह्मसूत्रेऽङ्गुलं भवेत् ।
ब्रह्मसूत्रात्पुरोभागे घोणापट्टोऽङ्गुलं भवेत् ॥४७४॥
दृश्यते तु यवो गोजि तदग्रेऽप्यधिको यवः ।
उत्तरोष्ठः प्रकर्तव्यः तत्समोऽप्यधिको भवेत्॥४७५
हनुवक्र[2]बहिर्लेखा तत्समा परिकल्प्यते ।
ब्रह्मसूत्रात्परे भागे स्यातामोष्ठौ तथा हनुः ॥४७६
चतुर्यवमिता दृश्याः पूर्वभागे यथा हनोः ।
हनुमण्डलतश्चाधो गलवृद्धिश्चतुर्यवा ॥ ४७७ ॥
ब्रह्मसूत्रात्पुरोभागे ग्रीवा लेख्या कलान्तरा ।
कन्धरास्कन्धसन्धेश्च गलवृद्धेस्तथाऽन्तरम्॥४७८॥
मात्रामात्रं प्रकुर्वीत हिक्का भागेन कल्प्यते ।
ब्रह्मसूत्रात्परे भागे कक्षामूलं तु भागतः ॥४७९

1 कर्णे गर्तत्रिभागेन. 2 चक्र.

कक्षामूलाद्बहिः कार्या ब्रह्मलेखाऽङ्गुलत्रया ।
ब्रह्मसूत्रात्परे भागे स्यात्कुचादूर्ध्वकूर्चकम् ॥
ऊर्ध्वभागः प्रदृश्येत बाहुरेखा ततो बहिः ।
अङ्गुलत्रितयोद्देशे करणीया विचक्षणैः ॥ ४८१
ब्रह्मसूत्रात्परे भागे मध्यदेशः कलामितः ।
ततो बहिर्बाहुलेखा द्व्यङ्गुला लिख्यते बुधैः ॥४८२
ब्रह्मसूत्रात्परे भागे भागस्स्याद्द्वियवाधिकः ।
ततो भवेद्बाहुलेखा द्व्यङ्गुला कथिता शुभा[1] ॥४८३
ब्रह्मसूत्रात्परे काञ्चीस्थानं पञ्चाङ्गुलायतम् ।
ततो भवेद्बाहुरेखा द्व्यङ्गुला द्वियवाधिका ॥ ४८४
ब्रह्मसूत्रात्परे भागे वस्तिमस्तकपार्श्वकम्
पञ्चाङ्गुलं प्रकर्तव्यं यवार्धाधिकतो बुधैः ॥ ४८५
सार्धद्व्यङ्गुलतः कार्या बाहुलेखा ततो बहिः ।
पञ्चाङ्गुले ब्रह्मसूत्राद्वस्तिपार्श्वे परं भवेत् ॥ ४८६ ॥
ब्रह्मसूत्रात्परे भागे मेढ्रमूलं चतुर्यवम् ।
तस्मादूरुशिरस्सन्धिर्भवेत्पञ्चाङ्गुलायतः ॥ ४८७ ॥
ऊर्वोः परे ब्रह्मसूत्रात्करणीये षडङ्गुले ।
मणिबन्धं गता रेखा द्व्यङ्गुले द्वियवाधिके ॥४८८॥

[1] द्वियवाधिका.

अङ्गुष्ठपार्श्वगा रेखा ब्रह्मसूत्राद्दशाङ्गुले ।
ततोऽधस्तात्प्रदृश्येत पताकाकारकं तलम् ॥४८९
कनिष्ठा लुप्यते तत्र लेखया सक्थिमध्यया ।
पञ्चाङ्गुलं ब्रह्मसूत्रात्सक्थिमध्यं प्रदर्शितम् ॥ ४९०
विप्रसूत्रात्परे भागे सक्थिमध्यं षडङ्गुलम् ।
ब्रह्मसूत्राद्भवेदाणी भवेदेकेन कल्पिता ॥ ४९१ ॥
जानुशीर्षं कलामानं जानुनोऽधस्ततोऽङ्गुलम् ।
शक्रवस्तौ ब्रह्मसूत्रं तलं त्यक्त्वा प्रगच्छति ॥
यवक्रमादङ्गुलान्तं पादपृष्ठेऽवतिष्ठते ।
परभागगते पादे मध्यमाक्रम्य गच्छति ॥ ४९३ ॥
पूर्वपादस्य पृष्ठे तु परपादस्य कोविदैः ।
भूमिरेखा प्रकर्तव्या पार्ष्णिस्तस्य विलुप्यते ॥
तत्र मात्रामितं दैर्घ्यं परपादे प्रकल्प्यते ।
अर्धर्जुकाकृतिः कार्यः पादश्चित्रविशारदैः ॥४९५॥
परपादस्य कूर्चायाः पूर्वपादतलस्य च ।
मध्ये व्योम प्रदृश्येत मात्रया मापितं स्फुटम् ॥
एकमङ्गुलमुत्सृज्य ब्रह्मसूत्रस्य पूर्वतः ।
ग्रीवा द्विभागिका लेख्या चित्रकर्मविशारदैः ॥
पूर्वभागे प्रकुर्वीत कक्षामूलं च तालुतः ।

कक्षामूलात्ततो बाहुर्भवेत्तिर्यग्विभागिकः ॥ ४९८ ॥
ब्रह्मसूत्रात्कलामात्रे हृदयं पुरतः स्थितम् ।
हृदयाच्चूचुकाधाग्रे गोलकत्रयदूरगम् ॥ ४९९ ॥
स्तनमेचकचक्रं तु लिख्यते वृत्तमायतम् ।
मात्रामितं तु विस्तारे दैर्घ्यगोलकमाविशेत् ॥५००
स्तनमण्डलतः कार्या बृहती चतुरङ्गुला ।
ततस्सप्ताङ्गुला लेख्या बाहुरेखा विचक्षणैः ॥५०१
बाहोरभ्यन्तरे रेखा निर्गत्य परिगच्छति ।
मध्यभागं परित्यज्य जघने सङ्गता भवेत् ॥ ५०२
मध्यस्य बाहु[1]रेखाया भवेद्व्यङ्गुल[2]मन्तरम् ।
श्रोणिश्च भुज[3]रेखाया अन्तराभोग इष्यते ॥५०३
ब्रह्मसूत्राद्भवेच्छ्रोणी पूर्वभागे दशाङ्गुलम् ।
एकादशाङ्गुलः काञ्चीगुणदेशः प्रकल्प्यते ॥५०४॥
पूर्वभागे प्रकोष्ठस्स्यात्सूत्रादेकादशाङ्गुलः ।
नितम्बो लुप्यते तत्र प्रकोष्ठेन निगूहितः ॥५०५
बहिर्भागे प्रद्वयं स्यात् स्फिक्तटं मणिबन्धतः ।
अर्धाङ्गुलप्रमाणेन पञ्चमीचन्द्रसन्निभम् ॥ ५०६ ॥
सूत्रात्तु मेहनं कुर्यात्कलामात्रेण कोविदः ।

[1] चाङ्ग. [2] त्र्यङ्गुल. [3] श्रोणेर्जानुज.

मेहनाद्व्यङ्गुले श्रोणिः श्रोणेरष्टाङ्गुले भुजः ॥५०७॥
पताकासन्निभः कार्यो दृश्यपृष्ठः करो बुधैः ।
कनिष्ठानखतो लेख्या सक्थिलेखा बहिर्गता ॥
सूत्रतो द्व्यङ्गुलं कार्यं कुमाराणां विचक्षणैः ।
पुरोदेशस्थितस्सूत्रादाणिदेशस्तु भागतः ॥ ५०९ ॥
आणिदेशाद्बहिर्लेखा भवेदष्टाङ्गुलैर्मिता ।
जानुनश्चित्रिका लेख्या ब्रह्मसूत्रात् षडङ्गुला ॥
षडङ्गुलाप[1]सन्धौ तु पूर्वजानु व्यवस्थितम् ।
द्व्यङ्गुलं तत्प्रमाणेन लेखनीयं समायतम् ॥ ५११
जानुचक्राद्बहिर्लेखा लेखनीया षडङ्गुलैः ।
सार्धं वा द्व्यङ्गुलं[2] तत्र जङ्घामध्यं प्रकीर्तितम् ॥
ततो नलकदेशस्य विस्तारः परिमातृकः ।
एकादशाङ्गुलं दैर्घ्यं पूवभागे प्रकीर्तितम् ॥ ५१३ ॥
एवं साचीगतं स्थानं साकल्येन निरूपितम् ।
द्व्यर्धाक्षि वक्ष्यते स्थानं लक्ष्यलक्षणसंयुतम् ॥
एकत्रैकाङ्गुलं यस्मिन्नन्यत्रैकादशाङ्गुलम् ।
मध्यद्व्यर्धाक्षिके स्थाने लम्बसूत्रक्रमो भवेत् ॥
केशान्तान्नासिकाग्राच्च कक्षमूलाच्च नाभितः ।

---

[1] पराङ्घ्रिजानु॰  [2] पश्चाङ्गुलं.

जानुमध्यात्पार्श्वसूत्रं मूलेऽङ्गुष्ठस्य संश्रितम्॥५१६
सीमन्ततो भ्रुवोर्मध्यात् ब्रह्मसूत्रं विनिर्गतम् ।
गजैर्हृते . . . . . कक्ष्यामूलादेशाच्च मात्रया ? ॥
अङ्गुलान्नाभितस्त्यक्त्वा लिङ्गपार्श्वात्तथाऽऽणितः ।
अङ्गुष्ठोपान्तदेशाच्च पूर्वसन्ध्यङ्गुलिर्भवेत् ॥ ५१८ ॥
अन्यपार्श्वगतं सूत्रमूर्ध्वपृष्ठाद्विनिर्गतम् ।
कन्धरास्कन्धसन्धेश्च मध्यदेशेन सङ्गतम् ॥ ५१९
मणिबन्धात्तर्जनीतः पूर्वपादस्य पार्ष्णितः ।
क्रमेणैवं प्रकुर्वीत सूत्रत्रयमितीरितम् ॥ ५२० ॥
ब्रह्मसूत्रात्परे भागे केशान्तश्चार्धगोलकः ।
अङ्गुलं च ततो दृश्या भ्रूलेखा यवतोऽधिका ॥
ततस्सूत्रात्परे भागे वस्तिसंधिश्च[1] षड्यवः ।
ततश्च निर्गतं वर्त्म बुध्नभागे यवद्वयम् ॥ ५२२ ॥
नासामूलस्थितात्सूत्रान्नेत्राग्रं परभागिकम् ।
दृश्यते षड्यवं तत्र त्रियवं पृष्ठ[2]मण्डलम् ॥ ५२३
त्रियवश्श्वेतभागस्स्यात् लुप्यते करवीरकः ? ।
नासामध्यात्तथा दृश्यः कपोलस्त्रियवस्स्फुटम् ॥
नसामध्यं ब्रह्मसूत्राच्चतुर्यवमुदाहृतम् ।

1 ब्रह्मसूत्रं च. 2 कृष्ण.

नासाग्रं ब्रह्मसूत्राच्च दृश्यं स्यादङ्गुलं परे ॥ ५२५
तस्मात्सूत्रात्परे भागे दृश्यः कक्षधरोऽङ्गुलः ।
ब्रह्मसूत्रात्परे भागे कक्षामूलात्तु मात्रया ॥ ५२६
कक्षामूलाद्बाहुमूलं मात्रामात्रं प्रदृश्यते ।
अन्या प्रलुप्यते बाहुजठरेण तलावधि ॥ ५२७ ॥
ब्रह्मसूत्रात्कुचावर्तो भवेदङ्गुलतो बहिः ।
अर्धचन्द्राकृतिर्दृश्यस्स एवाङ्गुलसंमितः ॥ ५२८ ॥
ब्रह्मसूत्रात्परे भागे नाभिरङ्गुलमात्रिका ।
ततो बहिः प्रदृश्येत जठरं चैकमङ्गुलम् ॥ ५२९ ॥
ब्रह्मसूत्रात्परः काञ्चीगुणदेशोऽङ्गुलत्रयम् ।
ब्रह्मसूत्राद्धस्तिशिरः पार्श्वे स्याच्चतुरङ्गुलम् ॥ ५३०
ब्रह्मसत्रान्मुष्कमूलं दृश्यते तच्चतुर्यवम् ।
मुष्को न दृश्यते तत्र लिङ्गेन परिगूहितः[1] ॥५३१
ब्रह्मसूत्रादूरुमूलं भवेदध्यर्धगोलकम् ।
लिङ्गस्याग्रे भवेदूरुभागस्स्यात्त्रियवाधिकः ॥५३२
सक्थिदेशाद्बहिर्दृश्ये अङ्गुष्ठश्चापि तर्जनी ।
ब्रह्मसूत्रात्परे देशे परभागास्त्रिभागतः ॥ ५३३ ॥
दृश्यते साचिवत्तस्मादङ्गुल्या पिहितर्धिकः ।

---

[1] पूरितः.

पूर्वाङ्घ्रेर्गुल्फशीर्षाच्च पराङ्घ्रिनखमध्यतः ॥ ५३४ ॥
भवेद्भूमिगतं सूत्रं परपादस्य लेखने ।
पराङ्घ्रिब्रह्मसूत्राच्च पूर्वभागे प्रदृश्यते ॥ ५३५ ॥
सप्ताङ्गुलकृतायामश्शेषं पूर्वेण लिख्यते ।
ऊरुश्च परपादस्य जङ्घावर्तेन लुप्यते ॥ ५३६ ॥
अभिपार्ष्णिश्च निखिलौ पूर्वपादेन दर्शितौ ।
वितस्तिः पूर्वपादे स्याद्दैर्घ्यमत्र निरूप्यते ॥ ५३७
साचिवाल्लिख्यते तज्ज्ञैरङ्गुष्ठो लुप्यते मनाक् ।
ब्रह्मसूत्रात्परे भागे शीर्षमेकादशाङ्गुलम् ॥ ५३८ ॥
उत्सेधस्य तथा चोर्ध्वं शीर्षं स्यात्सार्धमङ्गुलम् ।
उत्सेधस्य तथाऽपाङ्गे मस्तकं त्र्यङ्गुलं भवेत् ॥
तत्प्रदेशाच्छिरःपृष्ठं लेख्यं सप्तभिरङ्गुलैः ।
शङ्खस्थाने समे चोर्ध्वं निम्नं किञ्चिच्छिरो भवेत् ॥
ततश्शिरोगता रेखा धन्वाकारा प्रलेख्यते ।
ब्रह्मसूत्रात्पुरो भागे तालु स्यादङ्गुलत्रयम् ॥ ५४१
भ्रूलेखा यवमानात्तु तत्प्रमाणा विलिख्यते ।
नासामूलं ब्रह्मसूत्रादर्धमात्रं पुरस्स्थितम् ॥ ५४२
कनीनी त्रियवा दृश्या करवीरो न दृश्यते ।
द्वियवश्श्वेतभागस्तु दृश्यते तदनन्तरम् ॥ ५४३

दृश्यते त्रियवं तत्र लोचनं कृष्णमण्डलम् ।
श्वेतभागो ह्यपाङ्गस्थः समग्रः परिदृश्यते ॥५४४॥
समग्रो दृश्यते कण्ठो यवाद्वितयवर्जितः ।
कण्ठावर्ताद्वहिश्शीर्षपृष्ठं दृश्यं ततोऽङ्गुलम् ॥
कर्णपाली बहिर्देशे पृष्ठकेशान्तिको मनाक् ।
अर्धाङ्गुलप्रमाणेन दृश्यते चित्रलेखने ॥ ५४६ ॥
शङ्खः कपोलो गण्डश्च दृश्यते पूर्णमण्डलः ।
ब्रह्मसूत्रात्परे भागे भवेन्नासापुटोऽङ्गुलः ॥ ५४७ ॥
अर्धं प्रदृश्यते गोजेरोष्ठार्धं तु यवोनकम् ।
ब्रह्मसूत्रात्परे भागे हनुग्रीवस्य सङ्गमः ॥ ५४८ ॥
कथ्यते[1] त्र्यङ्गुला तज्ज्ञैः ग्रीवा तत्र द्विभागजा ।
ब्रह्मसूत्रात्परे भागे हिक्का सार्धत्रिभागिका[2] ॥५४९
ब्रह्मसूत्रात्परे भागे सार्धसप्तदशाङ्गुलम् ।
तिर्यङ्मानेन बोद्धव्यं बाहुमूलं विचक्षणैः ॥५५० ॥
ततो विनिर्गतं कार्यं बाहुशीर्षं त्रि[3]मात्रकम् ।
ब्रह्मसूत्रात्परे भागे कक्षामूलं भवेन्मुखम् ॥ ५५१
कक्षामूलाद्बाहुरेखा बाह्यभागद्वयं भवेत् ।
ब्रह्मसूत्रात्परे भागे त्र्यङ्गुलं समुदाहृतम् ॥५५२॥

---

[1] लिख्यते.　　[2] त्रिमात्रिका.　　[3] द्वि.

बाहोराभ्यन्तरी रेखा विधृता स्याद्दशाङ्गुला ।
सप्ताङ्गुलं बाहुमध्यं तिर्यक्सूत्रेण कल्पयेत् ॥५५३
बृहतीदेशमुत्सृज्य बाहोराभ्यन्तरी शुभा ।
रेखा लेख्या तथा तज्ज्ञैः जघने सङ्गता तथा ॥
कक्षस्य बाहुरेखाया अन्तरं त्र्यङ्गुलं भवेत् ।
कूर्परस्य तथा श्रोणेर्व्योम चाङ्गुलमिष्यते ॥५५५॥
कूर्परस्थानविस्तारः पञ्चाङ्गुल उदीरितः ।
नाभिस्थब्रह्मसूत्रस्य श्रोणेर्मध्यं निगद्यते ॥ ५५६ ॥
अङ्गुलैर्मनुसङ्ख्याकैस्तिर्यग्विस्तारकल्पितम् ।
कक्षाश्रयब्रह्मसूत्रभुजयोः कल्प्यमन्तरम् ॥५५७॥
चतुर्दशाङ्गुलं प्राज्ञैः प्रबाहुः पञ्चमात्रिकः ।
वस्तिशीर्षगतिर्ब्रह्मसूत्रस्य च भुजस्य च ॥५५८॥
अन्तरं तालमात्रं स्यात्प्रकोष्ठात्पञ्चमात्रिकम् ।
वस्तिस्थब्रह्मसूत्रस्य प्रप्रकोष्ठस्य चान्तरम् ॥
दशाङ्गुलं सार्धमात्रभागात्स्यात्तत्प्रकोष्ठतः ।
ब्रह्मसूत्रात्परे भागे लिङ्गं द्व्यङ्गुलसंमितम् ॥५६०॥
मुष्कमूलं भवेन्मात्रा बाहुरष्टाङ्गुलान्तरः ।
चतुरङ्गुलमुद्दिष्टो वस्ति[1]बन्धो विचक्षणैः ॥ ५६१ ॥

---

[1] मणि.

पताकेऽवकरः कार्य ऊरुलग्नतरो वुधैः ।
मणिबन्धाद्बहिर्देशे स्फिक्तटं द्व्यङ्गुलं भवेत् ॥५६२
ऊरुस्तस्मादधस्तालो लेखया करबाह्यया ;
करबाह्यगता लेखा सङ्गता सक्थिलखेया ॥ ५६३
मणिदेशस्य विस्तारो भागद्वय उदाहृतः ।
जानुसन्धिप्रमाणं तु सप्ताङ्गुलमुदाहृतम् ॥५६४॥
जानुचक्रस्य विस्तारस्सार्धमङ्गुलमिष्यते ।
इन्द्रवस्तेस्तु विस्तारो वितस्तेरर्धमिष्यते ॥ ५६५
तलसन्धेश्च विस्तारः कथितश्चतुरङ्गुलः ।
ततो विनिर्गता कार्या वृत्ता पार्ष्णिद्विमात्रिका ॥
यवद्वितयहीना सा कर्तव्या तु विचक्षणैः ।
कनिष्ठानामिकामध्यात्तासामूर्ध्वं प्रदेशिनी ॥५६७
अङ्गुष्ठादूर्ध्वतस्तासां कर्तव्योऽसौ क्रमेण तु ।
एवं द्व्यर्धाक्षिकस्थानं विस्तरेण निरूपितम् ॥
ऊर्ध्वरूपं प्रवक्ष्यामि भित्तिकं[1] स्थानकं स्फुटम् ।
लम्बसूत्रक्रमो ह्येष भित्तिके समुदाहृतः ॥ ५६९
शु . . के नासिकामध्ये चूचुके सेन्द्रमूर्धनि ।
अङ्गुष्ठगुल्फमूले च पक्षसूत्रं निवेश्यते ॥ ५७० ॥

[1] भक्तिकं.

पक्षसूत्रद्वयं तिष्ठेद्ब्रह्मसूत्रं न दृश्यते ।
तेनैव मिलितं कार्यं मध्यसूत्रं विचक्षणैः ॥५७१॥
नान्यत्र दृश्यते क्वापि ब्रह्मसूत्रं ततस्स्मृतम् ।
ऊर्ध्वं पृष्ठे तथा स्कन्धे कूर्परे पार्ष्ण्युपान्ततः ॥
इतरत्पक्षसूत्रं तु क्रमेणैवं विधीयते ।
ब्रह्मसूत्रात्पुरो भागे केशान्तस्त्रियवान्तरः ॥५७३
नासामूलस्य सूत्रस्य यवाद्वितयमन्तरम् ।
यवमानान्तरा गोजी निम्ना सा परिकल्प्यते॥५७४
आस्यमध्यगता रेखा सूत्रादर्धयवान्तरा ।
अन्तरं ब्रह्मसूत्रस्य चुबुकस्यैकमङ्गुलम् ॥ ५७५ ॥
हनुचक्रं ततो लेख्यं सूत्रात्पञ्चयवान्तरम् ।
द्व्यङ्गुलं हनुचक्रं स्यात् ग्रीवासन्धिस्तु मात्रया ॥
हिक्काभागान्तरा कार्या ब्रह्मसूत्रानुसारतः ।
घट्टिते ब्रह्मसूत्रेण स्तनरोहितचूचुके ॥ ५७७ ॥
मूलमग्रं च लिङ्गस्य भवेत्सूत्रेण घट्टितम् ।
ऊरुदेशं तथा जानु जङ्घां संत्यज्य गच्छति ॥५७८
अङ्गुष्ठद्वयमूले च सूत्रं तद्घट्टितं भवेत् ।
अन्यपक्षस्थिते सूत्रे मूर्धपृष्ठं तु घट्टितम् ॥५७९॥
सार्धाङ्गुलान्तरं कार्यं मस्तकाग्रं विचक्षणैः ।

साधाङ्गुलान्तरस्तद्वत् केशान्तः पश्चिमो भवेत् ॥
स्कन्धदेशः प्रकर्तव्यः पक्षसूत्रेण घट्टितः ।
कूर्परश्च तथा तेन पक्षसूत्रेण घट्टितः ॥ ५८१ ॥
पार्ष्णिप्रान्तप्रदेशश्च कार्यस्सूत्रेण घट्टितः ।
पक्षसूत्रस्य कूर्चस्य मध्ये द्व्यङ्गुलसम्मितम् ॥ ५८२
लम्बसूत्रगतश्चैव निम्नभागः प्रकीर्तितः ।
अधिकं सूत्रतो यत्तु तदिदानीं निरूप्यते ॥ ५८३
नासाग्रमङ्गुलं कार्यं ब्रह्मसूत्राद्विनिर्गतम् ।
मात्रया मात्रिकं कार्यमधिकं स्तनरोहितम् ॥५८४
बुध्ननिम्नप्रदेशस्स्यादधिको दशभिर्यवैः ।
सूत्रान्मध्यप्रदेशस्तु निर्गतोऽध्यर्धगोलकम् ॥ ५८५
जठरं तस्य बुध्नस्थमधिकं यवयुग्मकम् ।
नाभिरन्ध्रप्रदशस्स्यादधिकोऽध्यर्ध[1]गोलकम् ॥५८६
पक्वाशयस्तु बुध्नेन भवेद्भागेन निर्गतः ।
काञ्चीसूत्रप्रदेशस्तु भवेद्व्यङ्गुलतो[2]ऽधिकः ॥५८७॥
वस्तिशीर्षप्रदेशस्तु भवेदङ्गुलतोऽधिकः ।
अधिका त्र्यङ्गुला कार्या सूत्रादङ्गुष्ठिको बुधैः ॥
यवयुग्माधिके कार्ये प्रदेशिन्या च लेखने ।

[1] ध्यर्ध.		[2] दङ्गलतो.

अन्यस्य पक्षसूत्रस्य फलकं गोलकाधिकम् ॥
कलया बाहुमूलं स्यात्फलकाद्व्यङ्गुलात्ततः ।
भुजमध्यप्रदेशस्तु दशपञ्चयवाधिकः ॥ ५१० ॥
अर्धाङ्गुलाधिकं कार्यं फलकं तु विचक्षणैः ।
यवमानात्क्रमाद्धीना रेखा बाहोस्तु बाह्यगा ॥
यावत्कूर्परकस्थानं तत्र सूत्रेण घट्टितम् ।
कूर्परान्निर्गता काञ्ची जघनं स्फिक्तटं तथा ॥ ५१२
काञ्ची द्व्यङ्गुलिता कार्या त्र्यङ्गुलं वस्तिमस्तकम् ।
वस्तिसूत्रप्रदेशस्स्याच्चतुर्भिर्निर्मितोऽङ्गुलैः ॥५१३॥
स्फिजोर्मण्डलभागस्तु क्रमशो यवहीनकः ।
स्फिजोर्बुध्नप्रदेशस्तु सूत्रस्याङ्गुलतोऽधिकः ॥ ५१४
उरोबाह्यगता रेखा क्रमशः परिहीयते ।
घटिता जानुसन्धौ तु जङ्घा स्यादङ्गुलाधिका ॥
अधिकैरुत्थितः कूर्चः कथितस्सूक्ष्म[1]युग्मके ।
आकारलक्षणं वक्ष्ये प्रमाणेन यथाक्रमम् ॥
अर्धमङ्गं प्रदृश्यं स्याद्भित्तिके तन्न दृश्यते ।
ललाटार्धभ्रुवोर्लेखा लोचनं श्रवणं तथा ॥ ५१७
नासापुटस्तथाऽर्धं स्याद्बाहुरेकस्तथा पुनः ।

[1] सूत्र.

स्फिक्कटं सक्थिजङ्घा च दृश्यते पदयुग्मकम् ॥
एतदेव प्रदृश्यं स्यादन्यद्भित्तिगतं भवेत् ।
भाग एको ललाटस्स्याद्भ्रूलेखा त्र्यङ्गुला तथा ॥
शङ्खप्रदेशकस्तिर्यगङ्गुलत्रयसम्मितम् ।
अङ्गुलं कूर्चमूलं स्यान्मात्रामात्रं ततः परम् ॥
कथितः पूर्ववत्कर्णस्समग्रः परिलिख्यते ।
कनीनी लुप्यते तत्र करवीरो न दृश्यते ॥ ६०१
पुरतश्श्वेतभागोऽपि लुप्यते तत्र भित्तिके ।
कृष्णमण्डलकस्यार्धं लुप्यते चित्रलेखने ॥ ६०२
दृश्यं सार्धं यवद्वन्द्वं मेचके मण्डलेऽर्धतः ।
अपाङ्गश्वेतभागोऽत्र दृश्यते यवपञ्चकम् ॥ ६०३
कपोलो गण्डदेशश्च सम्पूर्णः परिदृश्यते ।
नासिकार्धं प्रदृश्येत गोजिकार्धं तथैव च ॥ ६०४
कलामात्रे प्रदृश्येते दशनच्छदने उभे ।
हनुमण्डलमध्यं च कलामात्रं प्रदृश्यते ॥ ६०५
ग्रीवा चाष्टाङ्गुला लेख्या चित्रकर्माणि भित्तिके ।
बाहुमूलद्वयस्योर्ध्वं हिक्कासूत्रस्य चोपरि ॥ ६०६
रेखयाऽर्धाकृतिर्लेख्या प्रदेशे भुजशीर्षके ।
हिक्कायत्तांसदेशस्य विस्तारस्तालमात्रिकः ॥

बाहुर्यथोदितः पूर्वं तथैव परिलिख्यते ।
पताकासन्निवेशेन लिख्यते करपल्लवः ॥ ६०८ ॥
चतुर्दशाङ्गुलं मध्यं भुजस्य जठरस्य च ।
दृश्यते केवलं लिङ्गं मुष्कमूलं च दृश्यते ॥६०९
ऊरू जानु च जङ्घा च लिख्यते ख्यातमानतः ।
चतुर्दशाङ्गुलं दैर्घ्यं पादयोः परिलिख्यते ॥ ६१०
षडङ्गुलस्तु विस्तारः पूर्वपादस्य लिख्यते ।
पूर्वपादस्य पृष्ठे तु द्व्यङ्गुलो दृश्यते परः ॥ ६११
अङ्गुष्ठो दृश्यते तस्य तत्परा च प्रदेशिनी ।
इतरा नैव दृश्यन्ते परभागार्धसंहिताः[1] ॥ ६१२
एवं लक्षणमुद्दिष्टं भित्तिकस्य यथाक्रमम् ।
ऋज्वर्धकसमं मानात् द्व्यर्धक्षे भित्तिकस्य च ॥
सूत्रतो लक्षणं प्रोक्तं समग्रं सोमभूभुजा ।
चतुष्प्रकारभित्तीनां वृत्तीनां वच्मि लक्षणम् ॥
सूत्रतो मानतश्चापि प्रदेशानां विनिर्णयात् ।
ऋजुकेऽर्धर्जुके साचिस्थाने द्व्यर्धाक्षिसंज्ञिके ॥
पक्ष[2]सूत्रे यथाप्रोक्ते परावृत्तिष्ठते तथा ? ।
शिखाकृकाटिकामध्यात्पृष्ठवंशात्स्फिगन्तरात् ॥

1 भागाद्विसंश्रिताः, 2 पद्म.

निर्गत्य पार्ष्णिमध्ये तु ब्रह्मसूत्रं प्रतिष्ठितम् ।
तिर्यक्कर्णाग्रगात्सूत्राच्छिरश्चन्द्रार्धसन्निभम् ॥६१७॥
षडङ्गुलं तदुत्सेध आयामस्तु दशाङ्गुलः ।
तस्मात् सूत्रादधोभागे प्रदेशः केशसंयुतः ॥६१८
षडङ्गुलं तस्य दैर्घ्यं विस्तारस्तु दशाङ्गुलम् ।
कर्णमूलप्रदेशे तु विस्तारस्स्याद्द्विरङ्गुलः ॥६१९॥
शिरोगतप्रदेशे तु विस्तारस्तु षडङ्गुलः ।
अधस्तात्कर्णरन्ध्रस्य विस्तारो द्व्यङ्गुलो मतः॥६२०
कर्णौ सार्धाङ्गुलौ दृश्यौ पात्यौ चाङ्गुलसम्मितौ ।
चलास्थिहनुविस्तारस्सूत्रप्रोक्तो दशाङ्गुलः॥६२१॥
ग्रीवा चाष्टाङ्गुला तिर्यग्विस्तारेण निगद्यते ।
पार्श्वतो ब्रह्मसूत्रस्य कक्षामूले तु नालिके ॥६२२
कक्षामूलात्ततो बाह्यबाहोर्लेखा षडङ्गुला ।
ऋजुवत्सर्वमङ्गं स्यान्मानेनान्यन्निरूपितम् ॥६२३
प्रदृश्यते तले तस्मिन् करपल्लवसंस्थिते ।
गुदस्थानात् स्फिजो लेखा द्वितीयाचन्द्रसन्निभा ॥
पक्षसूत्रावधि प्राप्ते स्फिङ्मध्ये बुध्नेदशतः ।
मुष्कौ वृत्ताङ्गुलौ दृश्यौ तदर्धे लिङ्गमङ्गुलम्॥६२५
ऊर्वोरभ्यन्तरं तत्र भवेदङ्गुलसम्मितम् ।

ऊर्वोर्मध्यप्रदेशे तु भवेद्गोलकमन्तरम् ॥ ६२६ ॥
पाणिदेशे तथा प्रोक्तमन्तरं चतुरङ्गुलम् ।
. . . पार्ष्णिकदेशस्य तावदीक्षेदनन्तरम् ॥ ६२७॥
भूमिसूत्रे तथा पार्ष्णिः कर्तव्योऽतिविचक्षणैः ।
भूमिसूत्रात्ततश्चोर्ध्वं कनिष्ठे सप्तमातृके ॥ ६२८ ॥
ऊर्ध्वं गुणाधिके तस्मिन्नतांसे मध्यमे क्रमात् ।
गुल्फदेशाद्बहिर्देशे न दृश्या च प्रदेशिनी ॥
अङ्गुष्ठोऽपि न दृश्येत जङ्घया परिगूहितः ।
ऋजुवृत्तिरिति ख्याता सूत्रमानानुसारतः ॥ ६३०
चित्रकाणां प्रबोधार्थं चित्रं सोममहीभुजा ।
वृत्तिरर्धर्जुकेदानीं कथ्यते लक्ष्मलक्ष्यतः ॥ ६३१ ॥
पक्षसूत्रे प्रकर्तव्ये यथैवार्धर्जुके तथा ।
चतुरङ्गुलमेकत्र भागद्वितयमध्यतः ॥६३२॥
अर्धर्जुके यथासूत्रं तद्वत्तद्वृत्तिके भवेत् ।
ऋजुके मस्तकं यद्वत्तद्वदस्य प्रकल्पयेत् ॥ ६३३ ॥
विस्तारादुच्छ्रयाच्चैव बुध्नभागेऽपि तद्विधम् ।
ब्रह्मसूत्रात्परे भागे कर्णपाल्येव दृश्यते ॥६३४॥
पूर्वभागे पुनः कर्णावृजू वृत्तौ यथा तथा ।
केशान्मध्यमगात्सूत्रात्परे भागे त्रिमात्रकः ॥६३५

चलास्थिजानुविस्तारः पूर्वस्सप्ताङ्गुलो भवेत् ।
ब्रह्मसूत्रात्परे भागे ग्रीवा गोलकसम्मिता ॥ ६३६
षडङ्गुला भवेत्पूर्वा विस्तारेण निरूपिता ।
ब्रह्मसूत्रात्परे भागे कक्षामूलं दशाङ्गुलम् ॥६३७॥
तालमानं भवेत्पूर्वे कक्षमूले सुनिश्चितम् ।
कक्षमूलात्परे भागे लेखा वाचोऽस्तु बाह्यगा? ॥
षडङ्गुला भवेत्तिर्यग्विस्तारेण प्रमाणतः ।
पुरस्तात्कक्षमूलात्तु रेखा बाहोस्तु मध्यगा ॥६३९
सप्तमात्रा भवेत्तिर्यग्विस्तारेण निरूपिता ।
ब्रह्मसूत्रात्परे भागे पूर्ववर्द्धीयते क्रमात् ॥ ६४० ॥
श्रोणी काञ्चीप्रदेशश्च वास्तिदेशस्तथैव च ।
ब्रह्मसूत्रात्परे भागे स्फिग्रेखा नवचन्द्रवत् ॥६४१॥
पूर्वभागस्फिजा लुप्तं रेखार्धं पारभागिकम् ।
ब्रह्मसूत्रात्परे भागे सक्थि दृश्यं दशाङ्गुलम्॥६४२
पूर्वभागे प्रदृश्यं स्यादूरुदेशस्तु मात्रिकः ।
परे तु मध्यदेशस्तु परभागे द्विभागिकः ॥ ६४३॥
पूर्वभागे प्रदृश्यं स्यात्सार्धमङ्गुलकं स्फुटम् ।
पराङ्घ्रिर्ब्रह्मसूत्रस्य पुरोभागः प्रदृश्यते ॥ ६४४ ॥
अर्धाङ्गुलप्रमाणेन यावत्फलकसङ्गमः ।

समग्रं दृश्यते सक्थि पूर्वभागस्य[1] सङ्गतम् ॥ ६४५
अधस्तादूरुमध्यस्य व्योम जानु व्यवस्थितम् ।
क्रमशो वर्धमानं तु यावत्सार्धाङ्गुलावधि ॥ ६४६ ॥
जङ्घयोरन्तरं तद्वत्सार्धमङ्गुलमिष्यते ।
इन्द्रवस्तिप्रदेशे तु किञ्चिदूनं प्रकल्प्यते ॥ ६४७ ॥
लुप्यते परपादेऽस्मिन्नङ्गुष्ठः पादशाखिका ।
अधस्ताद्भूमिसूत्रस्य पार्ष्णिः पूर्वपदाश्रिता ॥
यवप्रमाणका दृश्या वृत्तत्वाच्चित्रकर्मणि ।
अङ्गुष्ठमूलदेशस्य नवसन्धेर्यदन्तरम् ॥ ६४९ ॥
तत्कलामात्रकं कार्यं चित्रकर्मविशारदैः ।
भूमिसूत्रात्तथा चोर्ध्वं कनिष्ठा कलया स्मृता ॥
सर्वाङ्गुल्यस्तथाऽङ्गुष्ठो दृश्यते पूर्वपादगः ।
भूमिसूत्रं परित्यज्य पराङ्घ्रेः पार्ष्णिमण्डलम् ॥
अङ्गुलेन विधातव्यं भित्तिचित्रे ह्ययं क्रमः ।
एवमर्धर्जुका वृत्तिस्समग्रा परिकीर्तिता ॥ ६५२ ॥
क्षयवृद्धिप्रदेशैस्तु सूत्रमानात्सुनिश्चितम् ।
साचिस्थानगता वृत्तिरिदानीं परिकीर्त्यते ॥ ६५३
सूत्रत्रितयभेदेन पूर्वापरविभागतः ।

[1] पादस्य.

यथा साचिगतस्थाने पक्षसूत्रं विधीयते ॥ ६५४ ॥
तद्वत्तद्वृत्तिके कार्यं सूत्रात्रितयपातनम् ।
ब्रह्मसूत्रात्परे भागे केशान्तश्चाङ्गुलद्वये ॥ ६५५ ॥
दशाङ्गुलशिरःपृष्ठं पूर्वभागे विधीयते ।
परभागे प्रदृश्यस्स्याद्भ्रूयुगं मात्रया मितम् ॥
भ्रूयुगाच्चैव कर्णाग्रं भागेनैकेन कल्प्यते ।
सार्धमङ्गुलमुद्दिष्टा तिर्यक्कर्णस्य विस्तृतिः ॥६५७॥
ततो बहिःप्रदृश्यं स्यात्कर्णपृष्ठं चतुर्यवम् ।
मात्रामात्रं प्रकर्तव्या कर्णपाली विचक्षणैः ॥
कर्णावर्तात्पुरोभागे सार्धसप्ताङ्गुलं शिरः ।
पालिदेशात्समारभ्य कृकाटी षड्भिरङ्गुलैः ॥
तिर्यङ्मानेन कर्तव्या चित्रकर्मणि कोविदैः ।
ब्रह्मसूत्रात्परे भागे दृश्यायास्सार्धमङ्गुलम् । ६६०॥
यवमात्रमधोवर्त्म पक्षसूत्रात्प्रहीयते ।
ललाटं च कपोलं च पक्षसूत्रेण घट्टितम् ॥ ६६१
ब्रह्मसूत्रात्परे भागे कपोले द्व्यङ्गुले ततः ।
ब्रह्मसूत्रात्परे भागे पालिसन्धिस्तु गोलके ॥
ईषद्वक्रा प्रकर्तव्या गण्डरेखा विचक्षणैः ।
गण्डप्रान्तस्य हन्वोश्च सन्धिस्स्यात्पक्षसूत्रगः ॥

अङ्गुलान्तरितः कार्यो यवेनैकेन वाऽधिकः ।
अङ्गुलेन हनुः कार्या ब्रह्मसूत्रात्परे स्थिता ॥ ६६४
त्यक्त्वा पक्षगतं सूत्रं मात्रया सा व्यवस्थिता ।
कन्धरात्पृष्ठभागस्था हनुस्थानानिरूपिता ॥६६५॥
दशाङ्गुलं तथा तिर्यग्विस्तारेण भवेत् स्फुटम् ।
गलवृद्धेर्हनुप्रान्ताद्यवमानेन लम्बिता[1] ॥ ६६६ ॥
ग्रीवाया गलवृद्धेश्च सन्धिस्सार्धाङ्गुला भवेत् ।
अष्टाङ्गुला भवेद्ग्रीवा ब्रह्मसूत्रपुरास्स्थिता ॥ ६६७ ॥
सार्धमङ्गुलकं त्यक्त्वा ब्रह्मसूत्रं व्यवस्थितम् ।
ब्रह्मसूत्रात्परे भागे वार्धस्सप्ताङ्गुलो भवेत् ॥
कक्षामूलं पुरोभागे मात्रया समवस्थितम् ।
कक्षामूलं द्वयस्योक्तमन्तरं मनुमात्रया ॥ ६६९ ॥
बाहुमूलगता रेखा बाह्या पञ्चभिरङ्गुलैः ।
ब्रह्मसूत्रपरस्थेन बाहुना परिलोपितम् ॥ ६७० ॥
जठरं श्रोणिदेशस्य कथ्यं च न तु दृश्यते ।
तद्बाहुमध्यदेशस्तु रचनीयष्षडङ्गुलः ॥ ६७१ ॥
बाहुदेशस्य मध्यस्याप्यन्तरं स्याद्दशाङ्गुलम् ।
इतरस्य तथा बाहोर्मध्यदेशस्य मध्यगम् ॥

1 लम्बते.

द्व्यङ्गुलं दृश्यते व्योम यावच्छ्रोणितटं भवेत् ।
प्रकोष्ठस्तस्य मध्यस्याप्यन्तरं स्याद्दशाङ्गुलम् ॥
प्रकोष्ठस्तस्य बाहोश्च काञ्चीदेशेन गूहितः ।
अधोभागेन दृश्येत प्रकोष्ठस्तु करावधि ॥ ६७४
दृश्यं बाह्वन्तरस्थाया रेखायाश्श्रोणिदेशतः[1] ।
अन्तरं रचनीयं स्याद्दकूसङ्ख्यैरङ्गुलैः स्फुटम् ॥
काञ्चीसूत्रप्रदेशस्य दृश्यं बाह्वोर्यदन्तरम् ।
गदितं रविमात्राभिश्चित्रशास्त्रानुसारतः ॥ ६७६
वस्तिमस्तकदेशस्य दृश्यं बाह्वोर्यदन्तरम् ।
त्रयोदशाङ्गुलं ज्ञेयं चित्रकर्मविशारदैः ॥
वास्तिसूत्रप्रदेशस्य दृश्यं बाह्वोर्यदन्तरम् ।
तिथिमात्राभिरुद्दिष्टं तिर्यक्सूत्रप्रमाणतः ॥
दृश्यस्य मणिबन्धस्य . . . . चिदिगन्तरम् ।
दशाङ्गुलं तु विज्ञेयं चित्रव्यापारकोविदैः ॥
पूर्ववच्च स्फिजोर्लेखा कर्तव्या सुविचक्षणैः ।
कलामात्रं तथा लुप्ता स्फिजोर्लेखा परास्थिता ॥
त्रिभागलोपितं सक्थि पूर्वसक्थ्युपरिस्थितम् ।
समग्रो दृश्यते चाङ्घ्रिः पुरोभागसमाश्रितः ॥

[1] मध्यतः.

ऊरुमूलं तथा जानु जङ्घाकाण्डं तथैव च ।
त्रिभिर्भागैः प्रदृश्येत पराङ्घ्रिसमवस्थितम् ॥६८२॥
पूर्वाङ्घ्रिकूर्चदेशस्य पराङ्घ्रेर्नखसन्धितः ।
समग्रं दृश्यते बाह्यमङ्गुलार्धं विचक्षणैः ॥ ६८३ ॥
एकादशाङ्गुलं दैर्घ्यं पूर्वपादस्य कल्प्यते ।
घट्टिता भूमिसूत्रेण पार्ष्णिस्तस्मिन् परिस्फुटम् ॥
सार्धमङ्गुलमुत्सृज्य लिख्यते तु कनिष्ठिका ।
अङ्गुल्यश्च तथाऽङ्गुष्ठो लिख्यन्ते पूर्ववत् स्फुटम् ॥
प्रदेशिनी तथाऽङ्गुष्ठो लिख्यते पूर्ववत् स्फुटम् ।
प्रदेशिनी तथाऽङ्गुष्ठो मध्यमाग्रं तथैव च ॥ ६८६ ॥
दृश्यते परपादस्य पूर्वेणान्यत्प्रलुप्यते ।
परपादगता पार्ष्णिस्समग्रा दृश्यते पुनः ॥६८७॥
भूमिसूत्रात्परित्यज्य मानतस्सार्धमङ्गुलम् ।
ईदृक्साचीगता वृत्तिः कथिता लक्षणान्विता ॥
तिर्यक्सूत्रप्रदेशेन लम्बसूत्रक्रमेण च ।
द्व्यर्धाक्षितः प्रकर्तव्यं तद्वृत्तौ लम्बपूर्वकम् ॥६८९॥
ब्रह्मसूत्रात्परे भागे केशान्तस्थं गुणो भवेत् ।
शिरःपृष्ठं पुरोभागे केशान्तस्थं गुणो भवेत् ॥
शिरःपृष्ठं पुरोभागे रुद्रमात्राभिरीरितम् ।

ब्रह्मसूत्रात्परे भागे तालमङ्गुलतो भवेत् ॥६११॥
पुरोभागे ललाटं तु सार्धमङ्गुलतो भवेत् ।
कलामात्रा प्रदृश्या तु भ्रुवोर्लेखा सुनिश्चितम् ॥
अङ्गुलं तु परे भागे पुरोभागे तथाऽङ्गुलम् ।
भ्रूपुच्छतः कर्णमूलं पञ्चाङ्गुलमितीरितम् ॥६१३॥
कलामात्रो भवेत्कर्णस्तिर्यङ्मानेन निश्चितम् ।
अर्धपाली परा दृश्या पुरस्था मात्रया मिता ॥
पालिदेशात्कृकाटी स्याद्भागेनैकेन कल्प्यते ।
ब्रह्मसूत्रात्परे भागे नेत्रवर्त्म चतुर्यवम ॥ ६१५ ॥
अर्धाङ्गुलं परित्यज्य पक्षसूत्रं प्रतिष्ठितम् ।
पक्षसूत्रे तु संलग्नं पक्ष्म कार्यं विचक्षणैः ॥६१६॥
ब्रह्मसूत्रात्परे भागे दृश्यते कृष्णमण्डलम् ।
यवद्वयप्रमाणेन श्वेतभागश्चतुर्यवः ॥ ६१७ ॥
ब्रह्मसूत्रात्परे भागे बुध्नवर्त्म चतुर्यवम् ।
परे भागे प्रदृश्यस्स्यात्कपोलस्य चतुर्यवः ॥६१८
अर्धमात्रात्कपोलात्तु नासामध्यं प्रकल्प्यते ।
कक्षासूत्राद्विनिष्क्रान्तः नासाग्रं तु चतुर्यवम् ॥
अष्टौ तत्र प्रकर्तव्या तिर्यगङ्गुलिविस्तृतौ? ।
घट्टिताः पक्षसूत्रेण कर्तव्या सुविचक्षणैः ॥ ७००

ब्रह्मसूत्रात्परे भागे चुबुकं द्वियवं भवेत् ।
घट्टितं ब्रह्मसूत्रेण हनुचक्रं प्रकल्पयेत् ॥ ७०१ ॥
हनुचक्रात्तथा ग्रीवा भागेनार्धेन कल्प्यते ।
ग्रीवायाश्चैव विस्तारो भागद्वितयसम्मितः ॥
ग्रीवायाश्च बहिर्दृश्यः स्कन्धदेशस्तथाऽङ्गुलम् ।
ब्रह्मसूत्रात्पुरोभागे बाहुमूलं त्रिमात्रकम् ॥
पञ्चमात्रं पुरोभागे कक्षामूलं विधीयते ।
द्विकक्षामूलयोर्मध्यं भवेदेकादशाङ्गुलम् ॥ ७०४ ॥
उक्तादन्यः पुरो बाहुः कक्षामूलात्तु भागतः ।
कूर्परस्यान्तरे रेखा श्रोणिदेशे निगद्यते ॥
तस्याश्च मध्यरेखाया अन्तरं संव्यवस्थितम् ।
चापाकारं प्रकर्तव्यं तत्सार्धाङ्गुलविस्तृतम् ॥७०६
बाह्वोस्तस्य बहिर्लेखा वस्तिशीर्षेण घट्टिता ।
परपादस्फिजा गूढः प्रकोष्ठो नैव दृश्यते ॥
पूर्वेण पक्षसूत्रेण पृष्ठपार्श्वं विघट्टितम् ।
तेनैव घट्टिता रेखा स्फिजोरन्तरवर्तिनी ॥ ७०८
वस्तिशीर्षगतं सूत्रमुदरादर्धगोलकम् ।
स्फिङ्मण्डलगता रेखा बाह्या पञ्चाङ्गुला भवेत् ॥
. . . वर्धते यावत्कल्पितं नाभिसूत्रकम् ।

कूर्परस्य तथा नाभेरन्तरं सार्धगोलकम् ॥ ७१० ॥
भुजं विना शिरोदेशान्निर्गतं जठरं बहिः ।
हीयते च ततश्चाधो मणिबन्धावधि क्रमात् ॥
बस्तिसूत्रप्रदेशे तु यवषट्कमुदाहृतम् ।
ततो वंक्षणदेशस्स्यादङ्गुळं परिकल्पितम् ॥ ७१२ ॥
ऊरुमूलं ततः कुर्यात्करादङ्गुलतो बहिः ।
कनिष्ठाङ्गुलिसंलग्ना सक्थिरेखा विरच्यते ॥ ७१३ ॥
तर्जनी दृश्यते चार्धमङ्गुलाग्रेण सङ्गता ।
तिर्यक्फलस्य विस्तारं भागेनैकेन कल्पयेत् ॥ ७१४
पूर्वभागस्फिजो लेखा किञ्चिद्वक्रा प्रकल्प्यते ।
गुदात्सार्धाङ्गुला सा तु प्रदृश्या चित्रकर्मणि ॥
समग्रो दृश्यते चाङ्घ्रिः पूर्वभागसमाश्रितः ।
त्रयोदशाङ्गुलायामं पदं तस्य प्रदृश्यते ॥ ७१६ ॥
परभागास्थितं सक्थि सार्धभागं प्रदृश्यते ।
जानुभागो हि भागेन जङ्घामूलं च भागतः ॥
इन्द्रबस्तिप्रदेशस्य दृश्यं स्यादङ्गुलत्रयम् ।
कूर्चिका च तथा पार्ष्णिः प्रत्येकं त्र्यङ्गुलं मता ॥
पूर्वपादगता पार्ष्णिः भूमिसूत्रेण घट्टिता ।
भूमिसूत्रं परित्यज्य कनिष्ठा मात्रया भवेत् ॥

भूमिसूत्रं परित्यज्य परपार्ष्णिर्विधीयते ।
सार्धगोलकमानेन चित्रकर्मविशारदैः ॥ ७२० ॥
पूर्वाङ्घ्रिपृष्ठदेशे च परपादः प्रदृश्यते ।
पञ्चाङ्गुलकृतायामः शिल्पिभिः परिकल्पितः ॥
पूर्वाङ्गुष्ठनखादूर्ध्वं कल्प्यते च प्रदेशिनी ।
अङ्गुलान्तरिता कार्या पराङ्गुष्ठेन गूहिता ॥ ७२२ ॥
तर्जनी मध्यमाऽनामा कनिष्ठा च क्रमाद्बहिः ।
उपर्युपरि तिष्ठन्त्यः कल्प्यन्ते चार्धरूपतः ॥ ७२३
एवं द्व्यर्धाक्षिका वृत्तिर्विस्तरेण निरूपिता ।
लम्बसूत्रं पुरस्कृत्य तिर्यक्सूत्रानुसारतः ॥७२४॥
स्थानकानां च वृत्तीनां यत्प्रमाणं निरूपितम् ।
तदन्तरं प्रमाणेन व्यन्तराणि भवन्ति हि ॥
नवभेदप्रभिन्नानां स्थानकानां विनिर्णयः ।
आयुधानां विपर्यासाच्चतुर्ष्वपि च बाहुषु ॥ ७२६ ॥
जगन्नाथस्य वक्ष्यन्ते चतुर्विंशतिमूर्तयः ।
प्रादक्षिण्येन बोद्धव्याश्चतुर्विंशतिमूर्तयः ॥ ७२७ ॥
अधोहस्तक्रमेणादौ यथैवाक्षरसंज्ञया ।
अवशिष्टमधोबाहोश्चतुर्थं नामवाचकम् ॥ ७२८ ॥
प्राधान्यं व्यञ्जनेष्वेव दीर्घानुस्वारयोर्बहिः ।

छन्दसः पूरणार्थाय क्वचिदाद्यं प्रलुप्यते ॥ ७२९ ॥
प श चं के श पं गा ना गा च शं मा च गा प गो ।
गा प शा वि च शं पा म पा ग च त्रि श चा ग वा ॥
पं चां ग श्री ग चं पा हृ श प चा प प शा ग दा ।
ग श पा सं ग शा चं वा चा श गा प्र च गा शा नि ॥
च पा शं पु प गा शा थो चं पा गा नृ ग पा च चु ।
पा च शं ज श गा चो पे श चा प हृ श गा प ष ॥
चतुर्बाहुयुतास्सर्वा मूर्तयः . . . . ।
अष्टबाहोर्हरेर्मूर्तेरायुधानि वदाम्यहम् ॥ ७३३ ॥
नन्दकश्च गदा बाणः पद्मं दक्षिणबाहुषु ।
शङ्खो धनुस्तथा चक्रं खेटकं वामबाहुषु ॥ ७३४॥
त्रिविक्रमो नृसिंहश्च दशताळौ प्रकीर्तितौ ।
वामनस्सप्तताळस्तु विप्रमूर्तिर्हरिच्छविः ॥ ७३५ ॥
कृष्णाजिनोपवीती स्याच्छत्री धृतकमण्डलुः ।
कुण्डली शिखया युक्तः कुब्जाकारो मनोहरः ॥
श्रीरामश्च वराहश्च दशताळावुदाहृतौ ।
रामस्तु द्विभुजो लेख्यः शरचापधरो विभुः॥७३७
नृवराहं प्रवक्ष्यामि सूकरास्येन शोभितम् ।
गदापद्मधरं धात्रीं दंष्ट्राग्रेण समुद्धृताम् ॥ ७३८ ॥

बिभ्राणं कूर्परे वामे विस्मयोत्फुल्ललोचनाम् ।
नीलोत्पलधरां देवीमुपरिष्टात्प्रकल्पयेत् ॥ ७३९ ॥
दक्षिणं कटिसंस्थं च बाहुं तस्य प्रकल्पयेत् ।
कूर्मपृष्ठे पदं चैकमन्यन्नागेन्द्रमूर्धनि ॥ ७४० ॥
अथवा सूकराकारं महाकायं समुल्लिखेत् ।
तीक्ष्णदंष्ट्राग्रघोणास्यं स्तब्धकर्णोर्ध्वरोमकम् ॥
नरसिंहाकृतिं वक्ष्ये रौद्रसिंहमुखेक्षणाम् ।
भुजाष्टकसमायुक्तां स्तम्भपाटन . . . . . ॥७४२॥
हिरण्यकशिपुं दैत्यं दारयन्तीं नखाङ्कुरैः ।
ऊर्वोरुपरि विन्यस्य खड्गखेटकधारिणीम् ॥
तस्यान्त्रमालां निष्कृष्य बाहुयुग्मेन बिभ्रतीम् ।
आकारं पुरुषस्यैव धारयन्तीं मनोहराम् ॥७४४॥
अधस्स्थिताभ्यां बाहुभ्यां दारयन्तीं प्रकल्पयेत् ।
ऊर्ध्वस्थिताभ्यां बाहुभ्यामान्त्रमालां तु भिभ्रतीम्॥
मध्यस्थिताभ्यां बाहुभ्यां दक्षिणे चक्रपङ्कजे ।
कौमोदकीं तथा शङ्खं बाहुभ्यामभिवामतः ॥७४६
नीलोत्पलदलच्छायां किं वा चम्पकसप्रभाम् ।
तप्तकाञ्चनसङ्काशां बालार्कसदृशीं लिखेत् ॥ ७४७
आसीनं द्विभुजं देवं प्रसन्नवदनेक्षणम् ।

श्वेतस्फटिकसङ्काशं चतुर्बाहुमथापि वा ॥ ७४८
आजानुलम्बिनौ बाहू कर्तव्यौ तत्र दक्षिणे ।
समीपे कलयेच्चक्रं वामे शङ्खं समीपतः ॥ ७४९ ॥
ऊर्ध्वस्थिताभ्यां बाहुभ्यां दक्षिणे पङ्कजं न्यसेत् ।
वामे बाहौ गदां रम्यां लिखेच्चित्रविशारदः ॥
तथा त्रिविक्रमं वक्ष्ये वामपादेन मेदिनीम् ।
आक्रामन्तं द्वितीयेन साकल्येन नभस्स्थलम् ॥
ऊर्ध्वपादसमीपस्थं वामनं दीनलोचनम् ।
आलिखेच्च समीपस्थं बलिनं शार्ङ्गधारिणम् ॥
तस्य वन्धं प्रकुर्वन्तं गगनान्तं? प्रकल्पयेत् ।
मत्स्यावतारिणं देवं मत्स्याकारं प्रकल्पयेत् ॥
कूर्मावतारिणं देवं कमठाकृतिमालिखेत् ।
लिखेच्चतुर्मुखं देवं चतुर्बाहुं शुभेक्षणम् ॥ ७५४ ॥
रक्तकुण्डलसंयुक्तं लम्बकूर्चोपवीतिनम् ।
कृष्णाजिनधरं देवं शुक्लाम्बरविराजितम् ॥ ७५५॥
दक्षिणं वरदं हस्तं तथाऽन्यं स्रुवधारिणम् ।
कमण्डलुधरं देवं तथाऽन्यं संयुतं स्रुचा ॥ ७५६ ॥
बिभ्राणं च पुरो वेदान् पुरतश्चास्य विन्यसेत् ।
वामपार्श्वे तु सावित्रीं दक्षिणे तु सरस्वतीम् ॥

आज्यस्थालीं पुरोभागे महर्षींश्च समन्ततः ।
हंसारूढं लिखेत्क्वापि क्वचिच्च कमलासनम् ॥
स्रष्टारं सर्वलोकानां ब्रह्माणं परिकल्पयेत् ।
महादेवं प्रवक्ष्यामि यथा लेख्यस्स भित्तिषु ॥
मुक्तार्करश्मिसङ्काशस्तप्तस्वर्णनिभोऽपि वा ।
उन्नतांसो महाबाहुः कमलायतलोचनः ॥ ७६० ॥
द्वीपिचर्मपरीधानो वृत्तजङ्घोरुमण्डलः ।
केयूरहारसम्पन्नः कटिसूत्रत्रयान्वितः ॥ ७६१ ॥
नवेन्दुकलिकाक्रान्तजटाजूटविराजितः ।
इन्दुशूलत्रिणेत्रैणनागाभरणभूषितः ॥ ७६२ ॥
द्व्यष्टवत्सरदेशीयो नीलकण्ठो मनोहरः ।
कुण्डली पीनगण्डस्स्यादष्टभिर्बाहुभिर्युतः ॥
दशभिर्बाहुभिर्वाऽथ भुजैष्षोडशभिः क्वचित् ।
अष्टादशभुजः क्वाऽपि चतुर्बाहुरथापि वा ॥७६४॥
तेषु शस्त्राणि वक्ष्यामि . . . . . यथाक्रमम् ।
अक्षमालां शक्तिदण्डं शूलं वा दक्षिणे करे ॥७६५
खट्वाङ्गं चैव . . . कपालं खेटकं तथा ।
वरदं च तथा हस्तं वामभागे निवेशयेत् ॥७६६॥
गजासुरवधे नाट्ये बाहुभिर्दशभिर्युतः ।

पुरत्रयस्य दहने भुजैष्षोडशभिर्युतः ॥ ७६७ ॥
बाणश्चैव गदा चैव दक्षिणे त्वाधिकं भवेत् ।
धनुश्चैव तथा घण्टा शङ्खो वामेऽधिकं भवेत् ॥
दश पूर्वं भुजाः प्रोक्ताः षोडशैवं निरूपिताः ।
स्वच्छन्दभैरवाकारे बाहवोऽष्टादश स्मृताः ॥ ७६९
डमरुं च तथा शङ्कुमधिकं तत्र कल्पयेत् ।
त्रिशूलं डमरुं चैव वरदं चाक्षमालिकाम् ॥७७०॥
चतुर्बाहोर्महेशस्य शान्तमूर्तेस्समालिखेत् ।
अन्यास्तु दशहस्तस्य भवेयुर्हेतयः क्रमात् ॥
अष्टबाहोर्महेशस्य न स्यातां खड्गखेटकौ ।
अर्धनारीश्वरो रुद्रः कथ्यते लक्षणान्वितः ॥
दक्षिणं पुरुषाकारं वामं योषिन्मयं वपुः ।
त्रिशूलं दक्षिणे हस्ते वामहस्ते च दर्पणम् ॥
उत्पलं वा प्रकुर्वीत केयूरवलयान्वितम् ।
दक्षिणश्रवणे नागं वामकर्णे तु कुण्डलम् ॥७७४
जटाभारो दक्षिणे स्यादर्धचन्द्रविभूषितः ।
कुण्डलात्कबरीभारं वामभागे तु विन्यसेत् ॥
ललाटे लोचनस्यार्धं तिलकार्धं प्रकल्पयेत् ।
विशालं दक्षिणे वक्षो वामं पीनपयोधरम् ॥७७६

द्वीपिचर्मपरीधानं कटिसूत्रत्रयान्वितम् ।
देवस्य दक्षिणं पादं पद्मस्योपरि कल्पयेत् ॥
तस्यार्धं च तथा वामं नूपुरालङ्कृतं लिखेत् ।
नरनारीमयं देवमेवं चित्रे प्रकल्पयेत् ॥ ७७८ ॥
उमामहेश्वरस्यापि स्वरूपं वर्ण्यतेऽधुना ।
द्विभुजं वा चतुर्बाहुं जटामण्डलमण्डितम् ॥
त्रिणेत्रं पार्वतीस्कन्धविन्यस्तैककरं कुचे ।
करं द्वितीयं सव्ये तु शूलमुत्पलकं लिखेत् ॥
वामपद्मासनं पादं दक्षिणं किञ्चिदञ्चितम् ।
एवमर्धेन्दुसंस्थाने निविष्टं शङ्करं लिखेत् ॥७८१॥
वामोरुवर्तिनीं देवीं हरवक्त्रावलोकिनीम् ।
स्पृशन्तीं देवदेवस्य वामांसं लीलया लिखेत् ॥
दक्षिणैः करजैस्स्कन्धे स्पृशन्तीं कुक्षिमेव वा ।
उत्पलं वामहस्तेन दर्पणं वाऽपि बिभ्रतीम् ॥७८३
जयां च विजयां पार्श्वे गणेशं षण्मुखं लिखेत् ।
उमामहेश्वरस्यैवं स्वरूपं परिकीर्तितम् ॥ ७८४ ॥
देवं हरिहरं वक्ष्ये सर्वपातकनाशनम् ।
दक्षिणे शङ्करस्यार्धमर्धं विष्णोश्च वामतः ॥ ७८५
बालेन्दुभूषितः कार्यो जटाभारस्तु दक्षिणे ।

नानारत्नमयं दिव्यं किरीटं वामभागतः ॥ ७८६ ॥
दक्षिणं सर्पराजेन भूषितं कर्णमालिखेत् ।
मकराकारकं दिव्यं कुण्डलं वामकर्णतः ॥७८७॥
वरदो दक्षिणो हस्तो द्वितीयश्शूलभृत्तथा ।
कर्तव्यौ वामभागे तु शङ्खचक्रधरौ भुजौ ॥७८८॥
दक्षिणे वसनं कार्यं द्वीपिचर्ममयं शुभम् ।
पीताम्बरमयं भव्यं जघनं सव्यमालिखेत् ॥
वामपादः प्रकर्तव्यो नानारत्नविभूषितः ।
दक्षिणाङ्घ्रिः प्रकर्तव्यो भुजगेन्द्रेण वेष्टितः॥७९०॥
सुधांशुधवळ. कार्यः शिवभोगो विचक्षणैः ।
अतसीपुष्पसङ्काशो विष्णुभोगो विरच्यते ॥७९१
विलिखेत् षण्मुखं देवं मयूरवरवाहनम् ।
तरुणादित्यसङ्काशं बालाभरणभूषितम् ॥ ७९२ ॥
स्थानीये खेटके वाऽपि कुमारो लिख्यते यदा ।
भुजान् द्वादश कुर्वीत खेटके चतुरो भुजान् ॥
ग्रामे द्विबाहुर्लेख्यस्स्यात् लेखनीयो विचक्षणैः ।
वक्त्रैष्षड्भिरुपेतो वा मुखेनैकेन वा पुनः ॥७९४
दक्षिणं बुध्नगं पाणिं वरदं वाऽभयं लिखेत् ।
शक्तिं पाशमसिं बाणं शूलं वेत्युत्तरोत्तरम् ॥७९५

पताके कार्मुकं कुर्यात्खेटकं मुष्टिबन्धनम् ।
प्रसृतां तर्जनीं पाणौ ताम्रचूडं च वामतः ॥७९६
अभयो वरदो वैको द्वितीयः खड्गभृत्करः ।
दक्षिणे वामतश्शक्तिः पाशो वा कुक्कुटोऽपि वा ॥
द्विभुजस्य कुमारस्य करे शक्तिर्विधीयते ।
दक्षिणे वामतः कार्यस्ताम्रचूडधरः करः ॥ ७९८ ॥
विनायकस्य वक्ष्यामि मूर्तिं चित्रोपयोगिनीम् ।
गजवक्त्रां त्रिणेत्राङ्कां चतुर्बाहुं महोदराम् ॥७९९॥
भग्नैकदन्तसंयुक्तां स्तब्धकर्णां समालिखेत् ।
नागोपवीतिनीं पुष्टां पीनस्कन्धाङ्घ्रिपाणिकाम् ॥
भग्नदन्तधरं चैकमन्यमुत्पलसंयुतम् ।
दक्षिणे विलिखेद्वाहौ सकुठारशलाटुकौ ॥ ८०१ ॥
पार्श्वे सिद्धिकबुद्धिभ्यां अधस्तादाखुनाऽन्विताम् ।
आसीनामुत्तमे पद्मे सिन्दूरारुणविग्रहाम् ॥८०२॥
तथा कात्यायनीं देवीं शिवनारायणात्मिकाम् ।
बाहुभिर्दशभिर्युक्तां जटामुकुटमण्डिताम् ॥८०३॥
लोचनत्रयसंयुक्तामर्धेन्दुकृतशेखराम् ।
अतसीपुष्पसच्छायामिन्दीवरदलेक्षणाम् ॥ ८०४ ॥
पीनोन्नतकुचाभोगां तनुमध्येन शोभिताम् ।

त्रिभङ्गिस्थानसंस्थानां महिषासुरमर्दिनीम् ॥८०५
त्रिशूलं दक्षिणे खड्गं चक्रं शक्तिं वरं तथा ।
अधिज्यकार्मुकं वामे पाशमङ्कुशखेटकम् ॥ ८०६
घण्टां वा परशुं वाऽपि धारयन्तीं समालिखेत् ।
अधस्तान्माहिषं तस्याश्छिन्नग्रीवं समालिखेत् ॥
छिन्नस्थानसमुत्पन्नं खड्गखेटकधारिणम् ।
हृदि शूलेन निर्भिन्नं रुधिरारुणविग्रहम् ॥ ८०८ ॥
प्रबद्धं नागपाशेन भ्रुकुटीभीषणेक्षणम् ।
नाभेरूर्ध्वं विनिष्क्रान्तं दारुणं पुरुषं लिखेत् ॥
दक्षिणं चरणं देव्याः सिंहपृष्ठे प्रतिष्ठितम् ।
उत्तुङ्गमञ्चितं वामं माहिषस्योपरि स्थितम् ॥
सुरराजं प्रवक्ष्येऽहमैरावतसमाश्रितम् ।
किरीटकुण्डलधरं भुजद्वयसमन्वितम् ॥ ८११ ॥
कुलिशं दक्षिणे पाणौ वामहस्ते तथोत्पलम् ।
दिव्यरत्नविभूषाढ्यं दिव्यचीनांशुकैर्युतम् ॥८१२॥
छत्रचामरधारिण्यौ स्त्रियौ पार्श्वे च कल्पयेत् ।
सिंहासनस्थमथवा लिखेद्गन्धर्वसंयुतम् ॥ ८१३ ॥
इन्द्राणीं वामतस्तस्य लिखेदुत्पलधारिणीम् ।
दिव्यशृङ्गारसंयुक्तामिन्द्रवक्त्रावलोकिनीम् ॥ ८१४

वह्नेस्स्वरूपं वक्ष्यामि शुद्धकाञ्चनसप्रभम् ।
अर्धचन्द्रासनगतं रक्तवस्त्रविराजितम् ॥ ८१५ ॥
लोहितं वा प्रकुर्वीत बालार्कसमतेजसम् ।
युक्तं यज्ञोपवीतेन लम्बकूर्चेन शोभितम् ॥ ८१६
मेषपृष्ठस्थितं देवं भुजद्वयसमन्वितम् ।
दक्षिणे त्वक्षसूत्रं स्यात्करे वामे कमण्डलुः ॥८१७
स्वाहादेवी तु तत्पार्श्वे कुङ्कुमेन विलेपिता ।
अरुणैरम्बरैर्भव्या लख्या माणिक्यभूषिता ॥८१८
कुण्डस्थो वा प्रकर्तव्यो हव्यवाहो विचक्षणैः ।
ज्वालाभिस्सप्तभिश्शीर्षैश्शोभमानो महाद्युतिः ॥
पितृराजं प्रवक्ष्यामि नीलाञ्जनसमच्छविम् ।
दण्डपाशधरं दोर्भ्यां प्रदीप्ताग्निविलोचनम् ॥ ८२०
महामहिषमारूढं सिंहासनमथापि वा ।
मृत्युना चित्रगुप्तेन पार्श्वयोरुपशोभितम् ॥८२१॥
कगळैः किङ्करैश्चैव सुरासुरगणैस्तथा ।
धर्मिभिः पापिभिश्चैव सेव्यमानं निरन्तरम् ॥ ८२२
राक्षसेन्द्रं प्रवक्ष्यामि . . . निर्ऋतेस्स्थितम् ।
नरयानसमारूढं रक्षोभिर्बहुभिर्युतम् ॥ ८२३ ॥
कालमेघसमाभासं खड्गखेटकधारिणम् ।

पीतवस्त्रपरीधानं स्वर्णभूषणभूषितम् ॥ ८२४ ॥
जलेशं वर्णयिष्यामि कुन्दशङ्खेन्दुसमप्रभम् ।
पाशपङ्कजहस्तं च मकरस्योपरि स्थितम् ॥ ८२५
शुक्लाम्बरपरीधानं दिव्यरत्नकिरीटिनम् ।
पृथुवक्षस्स्थलन्यस्ततारहारविभूषितम् ॥ ८२६ ॥
समीरणं प्रवक्ष्यामि धूम्रं हरिणवाहनम् ।
चित्राम्बरधरं देवं चित्ररत्नविभूषितम् ॥ ८२७ ॥
वरदं दक्षिणं हस्तं वामं युक्तं पताकया ।
बिभ्राणं कुण्डलोपेतं किरीटवरधारिणम् ॥ ८२८ ॥
हरमित्रं प्रवक्ष्यामि दिव्यहारविभूषितम् ।
किरीटकुण्डलयुतं श्वेताम्बरविराजितम् ॥ ८२९ ॥
नरयुक्तविमानस्थं गदापाणिं वरप्रदम् ।
महोदरं महाबाहुं गौरवर्णं मनोहरम् ॥ ८३० ॥
अष्टभिर्निधिभिर्युक्तं द्रविणव्यग्रपाणिभिः ।
समन्ताद्गुह्यकैर्युक्तं चित्रकर्माणि लेखयेत् ॥ ८३१ ॥
ईशानं सम्प्रवक्ष्यामि शरदभ्रसमप्रभम् ।
शुभ्रं वृषभमारूढं बालेन्दुकृतशेखरम् ॥ ८३२ ॥
जयमङ्गळभूषाढ्यं लोचनत्रयभूषितम् ।
त्रिशूलपाणिं वरदं व्याघ्रचर्माम्बरावृतम् ॥ ८३३ ॥

फणिकुण्डलभूषाढ्यं नागयज्ञोपवीतिनम् ।
लिखेदेवंविधं देवं चित्रके चित्रकोविदः ॥ ८३४ ॥
मातॄणां लक्षणं वक्ष्ये ब्रह्माणी वैष्णवी तथा ।
माहेश्वरी च कौमारी वाराही वासवी तथा ॥
सप्तमी नारसिंही च तत्तद्रूपायुधैस्समाः ।
तत्तद्वाहनसंयुक्ताः कर्तव्या मातरो बुधैः ॥ ८३६ ॥
वीरेश्वरो विधातव्यो मातॄणामग्रतस्सदा ।
वीणात्रिशूलहस्तश्च वृषारूढो जटाधरः ॥ ८३७ ॥
श्रियं देवीं प्रवक्ष्यामि नवयौवनशालिनीम् ।
सुलोचनां चारुवक्त्रां गौराङ्गीमरुणाधराम् ॥
सीमन्तं बिभ्रतीं शीर्षे मणिकुण्डलधारिणीम् ।
श्रीफलं दक्षिणे पाणौ वामे पद्मं तु बिभ्रतीम् ॥
श्वेतपद्मासनासीनां श्वेतवस्त्रविभूषिताम् ।
कञ्चुकाबद्धगात्रीं च मुक्ताहारविभूषिताम् ॥८४०॥
चामरैर्वीज्यमानां च योषिद्भ्यां पार्श्वयोर्द्वयोः ।
सामजैस्स्नाप्यमानां च शृङ्गारसलिलोत्करैः ॥
नागानां वक्ष्यते रूपं नाभेरूर्ध्वं नराकृतिः ।
सर्पाकारमधोभागे मस्तकं भोगमण्डलम् ॥ ८४२
एका फणा त्रयो वापि पञ्च वा सप्त वा नव ।

द्विजिह्वास्ते विधातव्याः खड्गचर्मधरौ करौ ॥
किरीटकुण्डलोपेता वक्रदंष्ट्रा भयानकाः ।
नानाशस्त्रधराः कार्या दैन्यासुरगणाद्विषः ॥ ८४४ ॥
दानवा विकृताकारा भ्रकुटीकुटिलाननाः ।
किरीटेन च कुब्जेन मण्डिताऽशस्त्रपाणयः ॥
दंष्ट्राकराळवदना भ्रकुटीकुटिलेक्षणाः ।
नानारूपा महाकाया नानाशस्त्रधरास्तथा ॥ ८४६
कुटिलाः कृष्णमेघाभास्स्थूलबाहुमहोदराः ।
उत्फुल्लनासिकाः कार्या लेखने चित्रकोविदैः ॥
अत्यर्थं कृशकायास्ते चलास्थिस्नायुविग्रहाः ।
ह्रस्वकीर्णशिरोजास्स्युः पिशाचाश्चित्रकर्मणि ॥
ईदृक्षा एव वेताला दीर्घदेहाः कृशोदराः ॥
कपिलैर्मूर्धजैर्युक्ता लेखनीया मनीषिभिः ॥ ८४९
क्षेत्रपालो विधातव्यो दिग्वासाः कण्ठभूषितः ।
कर्तिकां डमरुं बिभ्रद्दक्षिणे तु करद्वये ॥ ८५० ॥
वामे शूलं कपालं च मुण्डमालोपवीतिकाम् ।
करोटीनिकरोदारमालो . . . . . . ॥ ८५१ ॥
वक्ष्येमनसिजं देवमिक्षुचापधरं सदा ।
पञ्चपुष्पमयान् बाणान् बिभ्राणं च करद्वये ॥

हरितं लोहितं वाऽपि दिव्याभरणभूषितम् ।
किञ्चित्कुटिलसंस्थानं पुष्पमालाधिवासितम् ॥
पीतं वस्त्रं वसानं च वसन्तेन समन्वितम् ।
नानाकुसुमभूषेण कङ्कोलीपत्रवाससा ॥ ८५४
दाडिमीकर्णपूरेण कण्ठे वकुळमालिनम् ।
चम्पकैस्स्वर्णसङ्काशैः कृतशेखरमालिनम् ॥
पार्श्वे वाऽश्वमुखः कार्यो मकरध्वजधारकः ।
प्रीतिर्दक्षिणभागेऽस्य भाजनोपस्करान्विता ॥
वामभागे रतिः कार्या रन्तुकामा निरन्तरम् ।
शय्या तु सारसैर्युक्ता वापिका नन्दनं वनम् ॥
रक्तवर्णो महातेजा द्विबाहुः पद्मभृद्रविः ।
सप्तभिस्तुरगैर्युक्तः सप्तरज्जुसमन्वितः ॥
एकचक्रे रथे तिष्ठन् पादाक्रान्तसरोरुहः ।
माणिक्यकुण्डलोदारः पद्मरागकिरीटकः ॥
रक्ताम्बरधरो रम्यः सुव्यक्ताङ्गो मनोहरः ।
पादौ तस्य प्रकर्तव्यौ सुमहातेजसा वृतौ ॥ ८६०
अनूरुस्सारथिः कार्यः प्रतीहारौ च पार्श्वयोः ।
दण्डपिङ्गळनामानौ खड्गकेटकधारिणौ ॥ ८६१
धृतावलेखनीहस्तो जगत्कर्मविलेखकः ।

कार्यो भानुसमीपस्थश्चित्रकर्मविशारदैः ॥ ८६२ ॥
चन्द्रश्चित्रे विधातव्यश्श्वेतश्श्वेताम्बरावृतः ।
दशश्वेताश्वसंयुक्तमारूढस्स्यन्दनं शुभम् ॥ ८६३ ॥
द्विभुजो दक्षिणे पाणौ गदां बिभ्रत्पृषोदरीम् ।
वामस्तु वरदो हस्तश्शशाङ्कस्य विनिश्चितः ॥
धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि ।
चतुर्भुजो मेषगामी चाङ्गारसदृशद्युतिः ॥ ८६५ ॥
दक्षिणं त्वधगं हस्तं वरदं परिकल्पयेत् ।
ऊर्ध्वं शक्तिसमायुक्तं वामौ शूलगदाधरौ ॥ ८६६
सिंहारूढं बुधं वक्ष्ये कर्णिकारसमप्रभम् ।
पीतमाल्याम्बरधरं स्वर्णभूषाविभूषितम् ॥ ८६७ ॥
वरदं खड्गसंयुक्तं खेटकेन समन्वितम् ।
गदया च समायुक्तं बिभ्राणं दोश्चतुष्टयम् ॥८६८॥
पीतो देवगुरुर्लेख्यः शुभ्रश्च भृगुनन्दनः ।
चतुर्भिर्बाहुभिर्युक्तश्चित्रकर्मविशारदैः ॥ ८६९ ॥
वरदौ साक्षसूत्रौ च कमण्डलुधरौ तथा ।
दण्डिनौ च तथा बाहू बिभ्राणौ परिकल्पयेत् ॥
सौरिं नीलसमाभासं गृध्रारूढं चतुर्भुजम् ।
वरदं बाणसंयुक्तं चापशूलधरं तथा ॥ ८७१ ॥

सिंहासनगतं राहुं कराळवदनं लिखेत् ।
वरदं खड्गसंयुक्तं खेटशूलधरं क्रमात् ॥ ८७२ ॥
धूम्रादिबाहवस्सर्वे वरदाश्च गदाधराः ।
गृध्रपृष्ठसमारूढा लेखनीयास्तु केतवः ॥ ८७३ ॥
ग्रहाः किरीटिनः कार्याः नवतालप्रमाणतः ।
रत्नकुण्डलकेयूरहाराभरणभूषिताः ॥ ८७४ ॥
चित्रकर्मोपयोगार्थं हयलक्ष्म प्रवक्ष्यते ।
आयामाच्च तथोत्सेधाद्विस्तारात्परिणाहतः ॥८७५
मुखं तालत्रयं प्रोक्तमायामेन प्रमाणिना ।
तन्मध्यवर्तिनो वक्ष्ये प्रदेशान्मात्रया मितान् ॥
वर्तुलं मस्तकं कार्यं षडङ्गुलमितं बुधैः ।
अङ्गुलं कर्णमूलान्तादुत्सेधेन व्यवस्थितम् ॥८७७॥
कर्णमूलात्तथा कर्णौ कार्यावष्टाङ्गुलायतौ ।
नागवल्लीदळप्रख्यौ चतुरङ्गुलविस्तृतौ ॥ ८७८ ॥
कर्णमूलस्य नेत्रस्य मध्यं कार्यं नवाङ्गुलम् ।
नेत्रस्य भागे दैर्घ्यं स्यात्सार्धद्व्यङ्गुलविस्तृतम् ॥
भ्रुवौ द्व्यङ्गुलविस्तारे दैर्घ्येण तु षडङ्गुले ।
भ्रुवोर्मध्यप्रदेशस्तु द्वादशाङ्गुलसंमितः ॥ ८८० ॥
षडङ्गुलं भवेद्भावः केशान्ते मध्यदेशतः ।

अष्टाङ्गुलं ततश्चाधो द्वादशाङ्गुलविस्तृतम् ॥ ८८१ ॥
एकतालं भवेद्दैर्घ्यं ललाटस्य प्रमाणतः ।
नयनाद्गण्डाविस्तारष्षोडशाङ्गुलसम्मितः ॥ ८८२ ॥
नासावंशस्य दैर्घ्यं स्याच्चतुरङ्गुलसम्मितम् ।
विस्तारस्त्र्यङ्गुलः प्रोक्तो नासिका चतुरङ्गुला ॥
नासापुटस्य विस्तारो द्व्यङ्गुलः परिकीर्तितः ।
पुटयोरन्तरं प्रोक्तमूर्ध्वभागे षडङ्गुलम् ॥ ८८४ ॥
एको भागस्त्वधोभागे तत्र रेखात्रयं भवेत् ।
तस्याधः प्रोथदेशस्स्याच्चतुरङ्गुलमायतः ॥ ८८५ ॥
चतुरङ्गुलविस्तारः पीनत्वं चतुरङ्गुलम् ।
मुखराजेः पुटस्यापि मध्यं स्याच्चतुरङ्गुलम् ॥ ८८६
मुखरेखाबाहिर्भागे हनुस्स्याच्चतुरङ्गुला ।
चिबुकं तत्र कर्तव्यं पञ्चाङ्गुलमितं बुधैः ॥ ८८७ ॥
प्रोथसस्सृक्किपर्यन्तमास्यरेखा स्वराङ्गुला ।
मस्तकात्काकशाखं वा चतुस्तालमितं भवेत् ॥
स्यात्केशदेशविस्तारः शीर्षदेशेऽङ्गुलित्रयम् ।
एको भावो भवेन्मध्यं प्रान्तेन भ्रामितो भवेत् ॥
कृतकेसरकस्स्कन्धः कर्तव्यः कीकसावधि ।
कीकसायां तथा कार्याः केसरा दैर्घ्यशालिनः ॥

मस्तके च तथा केशा द्वादशाङ्गुलदैर्घ्यकाः ।
तरङ्गिता घनास्स्निग्धाः श्लक्ष्णाः कार्या मनोहराः॥
निगालाद्वत्सपर्यन्तं ग्रीवा नलकदीर्घका ।
तालद्वितयमाख्यातस्तद्विस्तारोऽङ्गुलत्रयम् ॥ ८१२
स्कन्धमूलपरीणाहः षट्तालं चाङ्गुलद्वयम् ।
स्कन्धमध्यपरीणाहः चतुष्पञ्चाशदङ्गुलः ॥ ८१३ ॥
ग्रीवासन्धिपरीणाहः त्रितालश्च नवाङ्गुलः ।
वक्षोदेशस्य विस्तारो द्वादशाङ्गुलसम्मितः ॥ ८१४
अष्टादशाङ्गुलं दैर्घ्यं वक्षोदेशस्य कल्पितम् ।
कक्षाकीकसयोर्मध्यं द्विचत्वारिंशदङ्गुलम् ॥ ८१५ ॥
बाहुदैर्घ्यं भवेत्तत्र प्रोक्तं पञ्चदशाङ्गुलम् ।
बाहुमूलपरीणाहः त्रिंशदङ्गुलसम्मितः ॥ ८१६ ॥
बाहुमध्यपरीणाहो वितस्तिद्वयवेष्टनः ।
बाहुप्रान्तपरीणाहो भवेदष्टाङ्गुलस्स च ॥ ८१७ ॥
जङ्घायाश्च परीणाहो द्वादशाङ्गुलसम्मितः ।
पलिहस्तस्य दैर्घ्यं तु षडङ्गुलमुदीरितम् ॥ ८१८ ॥
पलिहस्तपरीणाहो भवेदष्टादशाङ्गुलः ।
कुष्टिकाया भवेद्दैर्घ्यं षडङ्गुलमुदीरितम् ॥ ८१९ ॥
कुष्टिकायाः परीणाहो द्वादशाङ्गुलसम्मितः ।

खुरदैर्घ्यं समुद्दिष्टं षडङ्गुलमितं बुधैः ॥ १०० ॥
भवेत्खुरपरीणाहो विंशत्यङ्गुलसम्मितः ।
पृष्ठदेशस्य दैर्घ्यं च चतुस्तालमुदाहृतम् ॥१०१॥
कक्षादेशपरीणाहस्सप्ततालो दशाङ्गुलः ।
मध्यभागपरीणाहश्शताङ्गुलामितो भवेत् ॥ १०२ ॥
रन्ध्रस्थानपरीणाहः सप्ततालो दशाङ्गुलः ।
रन्ध्रोपरन्ध्रयोर्मध्यं विंशत्यङ्गुलमायतम् ॥ १०३ ॥
त्रिकस्थानस्य विस्तारो द्विगुणैष्षोडशाङ्गुलैः ।
जघनस्य तु विस्तारः षट्चत्वारिंशदङ्गुलः ॥१०४॥
पुच्छमूलं भवेद्भागो नाहेन द्वादशाङ्गुलम् ।
वर्तिकादैर्घ्यमाख्यातं विंशत्यङ्गुलसम्मितम् ॥१०५
तत्र वालाः प्रकर्तव्याश्चमरीपुच्छसन्निभाः ।
दैर्घ्यं जनैरोह . . . द्वाविंशत्यङ्गुलो भवेत्?॥१०६
वक्कसक्थिगतं दैर्घ्यं षट्त्रिंशदङ्गुलैर्मितम् ।
मूले तस्य परीणाहस्स्याच्चत्वारिंशदङ्गुलः ॥१०७॥
सक्थिमध्यस्य नाहस्स्यादेकोनात्रिंशदङ्गुलः ।
सक्थिप्रान्तपरीणाहस्तालद्वितयसम्मितः ॥ १०८ ॥
नवाङ्गुलायता स्थूला नाहेन त्रिंशदङ्गुला ।
उपरन्ध्रान्तमारभ्य काशस्थानं तु तालतः ॥१०९

भागायतो भवेत्कोशो मुष्कावष्टाङ्गुलायतौ ।
स्थूलया बुध्नभागस्थे जङ्घेव पलिहस्तकैः॥ ११०॥
कुष्टे केचित्खुरद्वन्द्वं रेखां पौलस्त्यपादवत् ? ।
स्कन्धो मुखं च मध्यं च कृशं कायप्रमाणतः ॥
बडवाया महद्वक्षो जघनं च सुविस्तृतम् ।
एतल्लक्षणमुद्दिष्टं वाजिनां सोमभूभुजा ॥ ११२ ॥
गजस्य वक्ष्यते लक्ष्म सूत्रमानानुसारतः ।
गजस्य लक्षणं वक्ष्ये प्रमाणेन प्रमाणितम् ॥
चित्रकर्मोपयोगार्थं भित्तिचित्रप्रवेदिनाम् ।
केशान्ततस्समारभ्य यावत्स्यात्प्रतिमानकम् ॥
मुखं तत्कथितं तज्ज्ञैर्गजानां चित्रवेदिभिः ।
ऊर्ध्वं केशान्ततश्शीर्षं यावत्कुम्भसमुद्भवः ॥११५
शीर्षस्योपरि कुम्भौ द्वौ कर्तव्यौ कुचसन्निभौ ।
वार्यकुम्भस्य शीर्षस्य मन्धेराप्रतिमानतः ॥ ११६
पिप्पलीदन्तदंष्ट्राभ्यां वेष्टितं मुखमीरितम् ।
त्रिधा विभज्य त्रितलं त्रीन् भागान् परिकल्पयेत्॥
त्रिधा विभज्य तद्वक्त्रं त्रितालं परिकल्पयेत् ।
वास्तिशीर्षगतं सूत्रं कर्तुमिच्छति लेखने ॥ ११८॥
चतुर्धा भाजिते भागे त्वङ्गुलानि प्रकल्पयेत् ।

ऋजूनि लम्बसूत्राणि विधेयानि त्रयोदश ॥ १११
एकैकवालभिन्नानि चित्रकर्मविशारदैः ।
तत्तत्प्रमाणकान्येव तिर्यक् सूत्राणि कारयेत् ॥
एकादशैव तानि स्युः करिणां चित्रकर्मणि ।
विंशतिस्तु समुद्दिष्टाः कोष्ठास्तत्सूत्रमध्यगाः ॥
तत्र सूत्रेषु वक्ष्यामि प्रदेशान्नागसम्भवान् ।
लम्बसूत्रं बहिष्ठं यत् तच्छिष्टं प्रतिमानके ॥१२२
निदाने वायुकुम्भाग्रे दन्तमूले द्वितीयकम् ।
बिन्दुमध्ये मदच्छिद्रे सृक्किदेशे तृतीयकम् ॥ १२३
कण्ठे च पिप्पलीदेशे कुम्भप्रान्ते तुरीयकम् ।
आसने कर्णमध्ये च पदे नखरपश्चिमे ॥ १२४ ॥
द्वितीये नखरे लग्नं कार्यं सूत्रं तु पञ्चमम् ।
अंसे कर्णतलस्याग्रे पश्चान्नखरपश्चिमे ॥ १२५ ॥
सूत्रं षष्ठं प्रकुर्वीत सूत्रन्यासविशारदः ।
मध्यदेशे प्रयुञ्जीत लम्बसूत्रचतुष्टयम् ॥ १२६ ॥
सूत्राणां दशकं त्वेवं कथितं सूत्रवेदिभिः ।
मेचके च पराङ्गुश्च पादान्त्यनखमध्यगम् ॥ १२७
एकादशं भवेत्सूत्रं द्वादशं जघने स्मृतम् ।
त्रयोदशं बहिष्ठं च पुच्छमूले सुघट्टितम् ॥ १२८ ॥

लम्बसूत्रक्रमो ह्येष कुञ्जरस्य निरूपितः ।
तिर्यक्सूत्राणि वक्ष्यामि सङ्गतानि प्रदेशतः॥१२९
मस्तके वंशपृष्ठे च सूत्रमूर्ध्वं प्रकल्पयेत् ।
वायुकुम्भस्य शीर्षस्य बन्धौ पिप्पलिदेशतः ॥
पेचके च विधातव्यं सूत्रमेव द्वितीयकम् ।
वायुकुम्भस्य मध्ये च नेत्रकर्णदलाग्रनः ॥१३१॥
पेचकस्याप्यधोभागे सूत्रं कार्यं तृतीयकम् ।
मुखमध्ये सृक्किदेशे पुच्छमस्तकसङ्गतम् ॥ १३२ ॥
चतुर्थं कल्पयेत्सूत्रं चित्रकल्पनकोविदः ।
प्रतिमानात्प्रविष्टाच्च कण्ठाच्च गुदसङ्गतम् ॥१३३॥
पञ्चमं रचयेत्सूत्रं तिर्यक् सूत्रविशारदः ।
दन्ताग्राद्वत्सदेशाच्च कक्षभागात्समागतम् ॥१३४॥
षष्ठं सूत्रं विधातव्यं चित्रलेखनकोविदैः ।
पञ्चतालं भवेद्गात्रं जठरं पञ्चतालकम् ॥ १३५ ॥
चतुस्तालं तथा प्रोक्तमपरं चित्रवेदिभिः ।
मुख्यं च त्रिगुणं दैर्घ्यं कर्णात्पुच्छावधिस्थितम् ॥
जठरेण समं गात्रं तालहीनं ततोऽपरम् ।
एतल्लक्षणमुद्दिष्टं सूत्रमानानुसारगम् ॥ १३७ ॥
अनेनैव प्रमाणेन लेखनीया गजाकृतिः ।

असङ्ख्यातानि सत्वानि शक्यन्ते नैव भाषितुम् ॥
तत्तद्रूपानुसारेण लेखनीयानि कोविदैः ।
सादृश्यं लिख्यते यत्तु दर्पणे प्रतिबिम्बवत् ॥
तच्चित्रं विद्धमित्याहुर्विश्वकर्मादयो बुधाः ।
आकस्मिके लिखामीति यदा तूद्दिश्य लिख्यते ॥
आकारमात्रसंपत्त्वे तदविद्धमिति स्मृतम् ।
शृङ्गारादिरसो यत्र दर्शनादेव गम्यते ॥१४१॥
भावचित्रं तदाख्यातं चित्रकौतुककारकम् ।
सद्रवैर्वर्णकैर्लेख्यं रसचित्रं विचक्षणैः ॥ १४२ ॥
चूर्णितैर्वर्णकैर्लेख्यं धूलिचित्रं विदुर्बुधाः ।
सुप्रमाणं तथा विद्धमविद्धं भावचित्रकम् ॥१४३॥
रसधूलिगतं प्रोक्तं मानसोल्लासपुस्तके ।
निर्मितं चित्रलक्ष्मेदं चित्रं लोचनहारकम् ॥
भूलोकमल्लदेवेन चित्रविद्याविरिञ्चिना ।
चित्रं लक्षणसंयुक्तं लेखयित्वा महीपतिः ॥१४५॥
प्रासादे रुचिरे तुङ्गे सौवर्णकलशान्विते ।
नानावर्णविचित्राढ्ये रचनापरिशोभिते ॥ १४६ ॥
चित्रवस्त्रसमाकीर्णे वितानेनोपरञ्जिते ।
विशालस्तम्भविन्यस्तपट्टिकाधारधारिते ॥१४७॥

वरदारुसमाकीर्णे वेणुकर्त्रा विनिर्मिते ।
गुञ्जापुञ्जसुसञ्छन्ने मृत्तिकाश्लक्ष्णभित्तिके ॥ १४८ ॥
धराकुट्टिमशोभाढ्ये गोमयालेपनान्विते ।
पञ्चवर्णवितानाढ्ये मध्ये पद्मविभूषिते ॥ १४९ ॥
तिष्ठन् विलाससंयुक्तो भुवनाश्रयसद्मनि ।
ईशानकोणभागे तु सर्वलक्षणसंयुतम् ॥ १५० ॥
दक्षिणे मुखशालाङ्के देवतारूपचित्रितम् ।
स्नानगेहं तु तत्पार्श्वे कर्तव्यं वेदिकायुतम् ॥ १५१ ॥
होमशाला तथाऽभ्याशे वह्निकुण्डविमण्डिता ।
धूमनिर्गमनोपायकृतजालपरिष्करा ॥ १५२ ॥
कृत्वैवं देवतागारं तत्र सम्पूजयेद्धरिम् ।
हरिद्रारससंछन्ने बालमूलकभित्तिके ॥ १५३ ॥
मरुकैर्दमनैर्बद्धे सिकतामयभूतले ।
सेचिते गन्धतोयैश्च मण्डपे सुमनोहरे ॥ १५४ ॥
कान्ताभिर्वीज्यमानस्तु ग्रीष्मे मध्यन्दिनं नयेत् ।
प्रासादस्योर्ध्वभूभागप्राङ्गणे सुमनोहरे ॥ १५५ ॥
सुधाकरसुधाश्वेते सेचिते शशिवारिणा ।
पुष्पप्रकरशोभाढ्ये मृदुगन्धवहे सुखे ॥ १५६ ॥
सुखसंलापयोग्याभिः प्रेयसीभिस्समन्वितः ।

गीतज्ञैर्वाद्यनिपुणैस्सद्गुणज्ञानकोविदैः ॥ १५७ ॥
विदग्धैर्वाक्यचतुरैः परिहासविनोदिभिः ।
साहित्यरसभावज्ञैः कथाकथनकोविदैः ॥ १५८ ॥
प्रसादपात्रैश्च युतो निशार्धं गमयेन्नृपः ।
ततो विसृज्य तान् सर्वान् सुखशालामथो वसन्॥
प्रियया सह सम्प्रीतो निशाशेषं नयेत्सुखी ।
वसन्ते च तथा ग्रीष्मेऽप्येवंविधगृहोषितः ॥१६०
शीतलान् सुखसंस्पर्शान् भोगान् सेवेत भूपतिः ।
नीरन्ध्रके निवाते च शान्तशीकरवर्जिते ॥ १६१ ॥
हर्म्ये चतुष्किकायां वा वर्षासु निवसेन्नृपः ।
गवाक्षैरशोभिते हर्म्ये रम्ये सर्वप्रकाशके ॥१६२॥
निवातभूगृहे भव्ये हर्म्ये वा शीतवर्जिते ।
तिरस्करिण्या पिहिते कर्पटेन निगूहिते ॥१६३॥
वराङ्गीपीवरोत्तुङ्गस्तनस्तवकमध्यगः ।
हेमन्ते शिशिरे राजा निवसेच्छीतवर्जिते ॥१६४॥
एवं दिव्येषु गेहेषु निवसेद्यत्र भूपतिः ।
ऋतुकालविभागेन गृहभोगः प्रकीर्तितः ॥ १६५ ॥
एवं गृहोपभोगोऽयं कथितस्सोमभूभुजा ।

स्नानभोगः

अथ स्नानोपभोगस्तु कथ्यते सुमनोहरः ॥१६६॥
स्वगृहाभ्यन्तरेशानकोणे स्नानगृहं न्यसेत् ।
काञ्चनस्तम्भरुचिरं स्फुरत्स्फटिकवेदिकम् ॥१६७
काचकुट्टिमशोभाढ्यं दृषदाक्लृप्ताभित्तिकम् ।
चीनपट्टवितानेन चित्रेण परिशोभितम् ॥ १६८ ॥
वरुणस्य वितानेन स्पर्धमानं स्वतेजसा ।
तत्र स्थित्वा महीपालः स्नानभोगमथाचरेत् ॥
तापं कान्तिमती लक्ष्मीमर्थसञ्चयमापदम् ।
अनूनां सम्पदं कुर्यादभ्यङ्गादिनपर्ययः ॥ १७० ॥
द्वितीया सुखविध्वंसी दशमी पुत्रनाशिनी ।
एकादशी रूपहरा वित्तनाशी त्रयोदशी ॥ १७१ ॥
चतुर्दशी रोगकरी तत्राभ्यङ्गं विवर्जयेत् ।
सङ्क्रान्तौ च व्यतीपाते मन्वादिषु युगादिषु ॥
अभ्यङ्गं वर्जयेद्राजा पर्वणोरुभयोरपि ।
सोमे बुधे च मन्दे च योऽभ्यङ्गं कुरुते नृपः ॥
आयुः प्रवर्धते तस्य लक्ष्मीश्च विपुला भवेत् ।
केतकीबहुलामोदैर्जातीपरिमळोत्कटैः ॥ १७४ ॥
पुन्नागचम्पकोद्दामगन्धसंवासितैस्तिलैः ।
यन्त्रसम्पीडितैस्तैलं गृहीत्वाऽभ्यङ्गमाचरेत् ॥

केतकीगर्भपत्राभनखैस्तरुणीजनैः ।
सुकुमारकरस्पर्शहर्षोत्कर्षकरैर्वरैः ॥ १७६ ॥
ओषधीगन्धसंसिद्धैस्त्वचो दोषापहैश्शुभैः ।
तैलैरभ्यज्य गात्राणि मल्लैस्संवाहयेदिति ॥ १७७ ॥
मृदुहस्ततलैस्स्वैरं मर्दनं च समाचरेत् ।
कोष्ठं तक्कोलकं मुस्ता ग्रन्थिपर्णी निशाद्वयम् ॥
पालकं तगरं मांसी चाजगन्धा च पुष्करम् ।
एषां मूलानि सङ्गाह्य छायाशुष्काणि कारयेत् ॥
निम्बस्य राजवृक्षस्य तुलस्याश्चार्जकस्य च ।
पत्राण्येतानि चाहृत्य प्रागुक्तैस्सह मेलयेत् ॥ १८०
एला जाती सर्षपाश्च तिलाः कुस्तुम्बरूण्यपि ।
वाकुची चक्रमर्दश्च बीजान्येषां समाहरेत्[1] ॥ १८१
लवङ्गं पद्मकं लोध्रं श्रीखण्डं सुरदारु च ।
अगरुं सरळं चैव काष्ठान्येतानि निक्षिपेत् ॥ १८२ ॥
नागकेसरपुन्नागकाकलीपिचुमन्दकम्[2] ।
पुष्पाण्येतानि सङ्गृह्य तेषां मध्ये विनिक्षिपेत् ॥
गुग्गुलुं सैन्धवं चैव चोळं सर्जरसं तथा ।
द्रव्याण्येतानि सम्पेष्य पयसा काञ्जिकेन वा ॥

[1] बीजान्येकत्र कारयेत.	[2] कान्ताकुङ्कमचम्पकम्

अभ्यक्तगात्रो नृपतिरुद्वर्तनमथाचरेत् ।
आरनाळसुसंसिद्धं गोधूमश्लक्ष्णचूर्णकैः ॥ १८५ ॥
मदनस्य च मूलेन चूर्णितेन विमिश्रिता ।
श्रीखण्डक्षोदसंयुक्ता लक्ष्मीपल्लवसंयुता ॥ १८६ ॥
[1]श्रीतास्नेहाय नयने पिशुनैवोक्तमाखली ? ।
नानातीर्थाहृतैस्तोयैर्विमलैर्मलहारिभिः ॥ १८७ ॥
सुगन्धवासनायुक्तैः सुखोष्णैस्स्पर्शसौख्यदैः ।
एभिरापूरितैः पात्रैर्लोहकूर्परकादिभिः ॥ १८८ ॥
कलशैः काञ्चनोत्पन्नैः कान्तैः कान्ताकरस्थितैः ।
शातकुम्भमयैः कुम्भै राजद्भिरपि राजतैः ॥१८९॥
करिकुम्भयुगप्रख्यपयोधरविडम्बिभिः ।
चन्द्रकान्तमुखाभासाः परिपूर्णपयोधराः ॥ १९०॥
स्वलावण्यतरङ्गिण्यः प्रत्यक्षाः जल[2]देवताः ।
मेघकान्तद्रवश्यामाः कान्ताः कनकविद्युतः ॥
अभिषेकाम्बुधारोत्थस्फुरत्स्वनितविभ्रमाः ।
इतस्ततः पर्यटन्त्यः सविलासा वरस्त्रियः ॥ १९२
स्नपनं भूपतेः कुर्युस्तन्मुखाहितदृष्टयः ।
सुगन्धामलकैश्श्लक्ष्णैरनुलिप्य शिरोरुहान्[3] ॥

---

[1] स्नेहापनयने योज्या पिशुनेनोतमाकुली. [2] कुल. [3] सल्लिख्य शिखरोन्मुखान्

तान्यप्यपनयेयुस्तास्सुखोष्णसलिलैः पुनः ।
वङ्गचोलकलिङ्गान्ध्रमलयक्षेत्रजातयः ॥ ९९४ ॥
धूपवासितयाऽत्यर्थं कृतालेपा हरिद्रया ।
ईषच्छीतेन तोयेन रागिण्यो रागहेतवः ॥ ९९५ ॥
स्नपयेयुर्महीपालं स्नानभोग इतीरितः ।
निर्वर्त्यैवं नृपस्स्नानं परिधायाङ्गमार्जनम् ॥ ९९६ ॥
सितं सुधौतवसनं धृतमार्द्रं परित्यजेत् ।
एवं भूलोक[1]देवेन स्नानभोग उदाहृतः ॥ ९९७ ॥

पादुकाभोगः.

इदानीं पादुकाभोगः कथ्यते लक्ष्मलक्ष्यतः[2] ।
श्रीपर्णीदारुघटिते हरिचन्दननिर्मिते ॥ ९९८ ॥
गिरिमल्लीसमुद्भूते स्यन्दनद्रुमकल्पिते ।
मयूरपिञ्छगुच्छाभिस्समन्तात्परिशोभिते ॥ ९९९ ॥
चर्मणा निर्मिते वाऽपि नानावर्णसुरञ्जिते ।
गजदन्तसमुद्भूते सुवर्णरचनान्विते ॥ १००० ॥
विचित्रे सुदृढे श्लक्ष्णे संजाते[3] सुमनोहरे ।
.... लघुक्षताधारसुस्पर्शे पादुके समे ॥ १००१
अध्यास्ते यन्महीपालः पादुकाभोग इष्यते ।
इरितः पादुकाभोगस्सोमेश्वरमहीभुजा ॥ १००२ ॥

1 भूलोकमल्ल.  2 ललितक्रमः.  3 शिञ्जाने.

ताम्बूलभोगः

इदानीमुत्तमो भोगस्ताम्बूलस्य निगद्यते ।
स्नानगेहादथागम्य प्रविश्य सुखमन्दिरम् ॥
ताम्बूलभोगमन्विच्छन् ताम्बूलस्याधिकारिणम् ।
समाहूय महीपालस्ताम्बूलास्वादनं चरेत् ॥
मेघवर्तिपुरोद्भूतांस्तथेश्वरपुरोद्भवान् ।
कारटीपुरजान् वाऽपि क्रमुकौघान् सुपाकिनः ॥
भङ्गे पाटलसङ्काशान् कषायमधुरान्वितान्[1] ।
फलीकृत्योष्णतोयेन प्रक्षाळ्याशोष्य घर्षितान् ॥
माकन्दफलवृन्तोत्थनिर्यासेन सुभावितान् ।
कर्पूरवारिणा सिक्तान् श्रीखण्डक्षोदमिश्रितान् ॥
कस्तूरीकल्कसंयुक्तान् छायाशुष्कान् मनोहरान् ।
तरुणानि सवल्कानि ताम्बूलार्थं समाहरेत्[2] ॥
वनवासप्रभूतानि क्रमुकस्य फलानि च ।
कृत्वा त्वचा वियुक्तानि छायायां शोषितानि च ॥
चतुर्भागवियुक्तानि ताम्बूलार्थं समाहरेत् ।
वनवासे राष्ट्रराज्ये सम्भृतानि वराणि च ॥
कर्पूरवल्लीजातानि नागवल्ल्युद्भवानि च ।
उषितानि समं वल्ल्यां वत्सरं भरकेषु च ॥१०११

[1] मधुरान् वरान्.    [2] कथितानि प्रयत्नतः.

नादेयोदकसिक्तानि पाण्डराणि गुरूण्यपि ।
पर्णानि प्रान्तकृत्तानि द्विपञ्चाशन्मितानि च ॥
वहिस्थकृष्णवर्णानि निकटे विहितानि च ।
शैलोदकसमुद्भूतं शिलापाकसमुद्भवम् ॥१०१३॥
मुक्ताशुक्तिभवं चूर्णं विडकेषु निधापितम् ।
अपक्कमुज्ज्वलं स्वच्छं कर्पूरस्फटिकोपमम् ॥
मलयाचलसम्भूत[1] लतानिर्याससम्भवम् ।
तालिनं शकलाकारं चन्द्रकान्तसमप्रभम्॥१०१५॥
सहकारसमानेन सौरभेण समन्वितम् ।
ईशावासाभिधानं च कर्पूरं सहजं वरम् ॥१०१६
समानीय महीपालस्ताम्बूलार्थं प्रकल्पयेत् ।
कस्तूरीचूर्णकं श्लक्ष्णं घनसारस्य चूर्णकम् ॥
मिश्रयित्वा समं कृत्वा ताम्बूलार्थं नियोजयेत् ।
कस्तूरीशशितक्कोलं जातीफलसुचूर्णकम् ॥
श्लक्ष्णं करम्भकं हृद्यं नानापरिमळोत्कटम् ।
खदिरक्वाथचूर्णं तु कस्तूरीक्षोदमिश्रितम् ॥
श्रीखण्डकल्कसंयुक्तं कर्पूररजसाऽन्वितम् ।
मेलयित्वा समैर्भागैर्गुलिका कल्पिता शुभा ॥

---

[1] शृङ्गोत्थ.

त्रिदोषशमनी कण्ठदन्तानां च बलावहा ।
अन्यत्खदिरसारस्य चूर्णं कोष्ठाम्लसंयुतम् ॥
जातीफलस्य चूर्णेन मिश्रितं मुखरञ्जनम् ।
जम्बीरबीजपूरस्य कलिकाभिस्समन्वितम् ॥
कर्पूरपूर्वं खादेच्च तदनु क्रमुकान्वितम् ।
इत्थं विविधयोगेन ताम्बूलं पृथिवीक्षिता ॥१०२३
यत्त्वद्यते स ताम्बूलभोगश्चतुर इरितः ।
ताम्बूलभोगः कथित श्श्रीसोमेश्वरभूभुजा ॥

विलेपनोपभोगः.

विलेपनोपभोगोऽयं भोगिनां कथ्यते प्रियः ।
अच्छं विलेपनं रम्यमङ्गसौख्यप्रदायकम् ॥
ततस्समाचरेद्भूपः कान्ताजनमनोहरम् ।
चन्दनागरुकर्पूरकस्तूरीकुङ्कुमान्वितम् ॥ १०२६ ॥
सुरभीकेसरोन्मिश्रं ग्रन्थि [1] पर्णसमायुतम् ।
जातीपूतिफलोद्दीप्तं सुश्लक्ष्णं भूरि धूपितम् ॥
वसन्ते लेपनं कुर्याद्यक्षकर्दममुत्तमम् ।
कक्षभागे कर्णसन्धौ नाभौ वंक्षणयोरपि ॥
स्वेदगन्धविनाशार्थं सान्ध्याख्यं लेपमाचरेत् ।

---

[1] कुम्भि.

चन्दनस्य तरोर्मूलग्रन्थिकोटरकर्परम् ॥ १०२९ ॥
गन्धोत्कटं हिमस्पर्शं वरिष्ठं तन्निरूपितम् ।
यच्छेदे रक्ततां धत्ते घर्षे पीतत्वमेति च ॥ १०३० ॥
शोषे शुभ्रत्वमायाति स्वादे तिक्तरसं भवेत् ।
पुन्नागकेसरैर्युक्तं श्रीखण्डं शशिना युतम् ॥ १०३१
केतकीमल्लिकोन्मिश्रं पाटलीगन्धवासितम् ।
शशाङ्ककरसंङ्काशं हिमडिण्डीरपाण्डरम् ॥ १०३२
निदाघे शीतलं लेपं नृपः कुर्यात्समुज्ज्वलम् ।
श्रीखण्डं तादृशं भव्यं निघृष्टं पेषितं पुनः ॥
मसृणं लेपयेद्गात्रे स्वच्छमित्थं विलेपनम् ।
काश्मीरदेशसम्भूतं हरिचन्दनकेसरम् ॥ १०३४ ॥
लोहितं तत्समादाय पेषिण्या श्लक्ष्णपेषितम् ।
कटुतैलसमायुक्तं लाक्षारागसमप्रभम् ॥ १०३५ ॥
तादृशं कुङ्कुमं श्रेष्ठं लेपनार्थं महीभृताम् ।
कुङ्कुमं लघु सम्मिश्रं घनसारसुधूपितम् ॥ १०३६
कुर्वीत लेपनं रम्यं वर्षाकाले नरेश्वरः ।
मह[1]त्तारुण्यसम्पन्नमृगनाभिसमुद्भवा ॥ १०३७ ॥
गोलकाकारसंस्थानकिञ्चित्कुङ्कुमपिञ्जरा ।

---

[1] मद.

मृदिता चिक्कणीभूता द्विगुणेव विलोक्यते ॥
दग्धा याति नभस्सत्यं लसत्सिमिसिमास्वना ।
स्वादे तिक्ता कटुर्वाऽपि तोलने लघुतां गता ॥
ईदृग्विधा वरिष्ठा या कस्तूरी सा नृपोचिता ।
एवंविधां समादाय कस्तूरीं दिव्यसम्भवाम्[1] ॥
पेषण्या पेषयित्वा तां तोयमिश्रां विलेपयेत् ।
गण्डीमार्जारबीजानि समाहृत्य विनिक्षिपेत् ॥
उष्णतोये[2] समुद्धृत्य कटुतोयेन[3] लेपयेत् ।
विकीर्य च निशाचूर्णं छायायां च विशोषयेत् ॥
एवं साश्विनुयाद्भूरि क्वाथयेत्सश्वितान्यपि ।
श्रीवृक्षाम्रकजम्बूनां तुलसीबीजपूरयोः ॥ १०४३
पल्लवैः क्वाथितैस्तोयैर्बीजानि क्षाळयेत्ततः ।
प्रक्षाळ्य शोषयेत्तज्ज्ञः ततः कुर्याच्च खण्डशः ॥
निक्षिप्य वारिमध्ये च बीजपूरफलत्वचा ।
क्वाथयेन्मात्रया पश्चात्ततस्स्नेहो विनिस्सरेत् ॥
तोयोपरि सितं स्नेहं शक्तया काञ्चनजातया ।
आहरेच्च प्रयत्नेन यद्वा बीजानि तापयेत् ॥ १०४६
पेषण्या पीडयित्वा च स्नेहं निस्सारयेद्बुधः ।

[1] सौरभाम्. [2] तैले. [3] तैलेन.

निस्सारितं ततस्स्नेहं सितया धूपयेत्ततः ॥
पश्चाच्च लघुकर्पूरैर्दशवारं च धूपयेत् ।
पुलिङ्गं नाम तं प्राहुर्दिव्यगन्धं मनोहरम् ॥
नृपाणां लेपनं शस्तं हेमन्तशिशिरादिषु ।
चन्दनं बहुसौरभ्यं मिलितं पद्मकेसरैः ॥१०४९॥
उत्पलावासितं लेपे शरत्काले प्रशस्यते ।
नवकेसरसम्भूतं कुङ्कुमं कायरञ्जनम् ॥ १०५० ॥
सुगन्धितैलसंयुक्तं शीतकालेऽनुलेपनम् ।
वस्त्रभूषानुसारेण शृङ्गाराङ्गं विलेपनम् ॥१०५१॥
ललाटे बाहुशिखरे कण्ठे वक्षस्यथोदरे ।
नानागन्धसमोपेतं नानावर्णसमन्वितम् ॥१०५२
विलेपनोपभोगोऽयं वर्णितस्सोमभूभुजा ।

वस्त्रभोगः.

वस्त्राणामुपभोगोऽयमधुना परिकीर्त्यते ॥१०५३॥
अश्विनी वस्त्रदा प्रोक्ता रोहिणी धनवर्धिनी ।
पुनर्वस्वोर्वसुप्राप्तिः पुष्ये सौख्यं प्रवर्धते ॥१०५४
उत्तरायां भवेल्लाभो हस्ते सिद्धिस्तु कर्मणाम् ।
चित्रायां सुखसम्प्राप्तिः स्वात्यां सौभाग्यसम्पदः ॥
विशाखायां जनप्रीतिर्मैत्रेमि त्रसमागमः ।

तुष्टिस्स्यादुत्तराषाढे धनिष्ठा धान्यपूरिणी ॥
उत्तरायां सुतप्राप्तिः रेवती रत्नवृद्धिकृत् ।
एवमृक्षगुणाः प्रोक्ता नवीनाम्बरधारणे ॥१०५७॥
बुधे धनागमं विन्द्यात्प्रजा[1]वृद्धिर्भवेद्गुरौ ।
आयुः प्रवर्धते शुक्रे नूतनाम्बरधारणे ॥ १०५८ ॥
नृपोत्सवे विवाहे च परभूपालसङ्गमे ।
उत्सवेषु च सर्वेषु गीतनृत्तविनोदने ॥ १०५९ ॥
दानकर्माणि यज्ञे च तथा युद्धमहोत्सवे ।
जनै[2]र्नवाम्बरं धार्यं न दुष्यति कदाचन ॥१०६०
कृतानुलेपो राजेन्द्रो वस्त्रभाण्डाधिकारिणः ।
आनेतुमादिशेद्वस्त्राण्युत्तमानि बहूनि च ॥ १०६१
पोहालपुरजातानि चिरभ[3]ल्लीभवानि च ।
अवन्तीक्षेत्रजातानि सुवर्णानि लघूनि च ॥
नागपट्टणजातानि पाण्ड्यदेशोद्भवानि च ।
अल्लिकाकरजातानि सिंहलद्वीपजान्यपि ॥ १०६३
गोपाकस्थानजातानि गणाकप्रोद्भवानि च ।
अणिलावाटजातानि सुरापुरभवानि च ॥ १०६४
गुञ्जणस्थानजातानि मूलस्थानोद्भवानि च ।

---

[1] प्रज्ञा. [2] जये. [3] चीरपल्ली.

तोण्डिदेशसमुत्थानि पञ्चपट्टणजानि च ॥ १०६५
भिन्नजातानि दिव्यानि महाचीनभवानि च ।
कलिङ्गदेशजातानि वङ्गदेशभवानि च ॥ १०६६ ॥
वसनानि विचित्राणि पट्टसूत्रमयानि च ।
कार्पासक्षौमसूत्राणि रोमभिर्निर्मितानि च ॥
श्वेतानि रक्तवर्णानि पीतानि हरितानि च ।
नीलानि कृष्णवर्णानि धूम्राणि मधुराणि च ॥
पाटलान्यभिरामाणि जम्बूफलसमानि च ।
नानावर्णविचित्राणि नानारूपमयानि च ॥१०६९
मध्ये रक्तानि कृष्णानि पीतानि हरितानि च ।
तथोपान्ते च रक्तानि पल्लवेषु सितानि च ॥१०७०
एतद्विविधचिह्नानि सितरेखामयानि च ।
नानावर्णसुरेखाणि पञ्चवर्णाञ्चलानि च ॥ १०७१
तिर्यगायतरेखाणि रेखाभङ्गयुतानि च ।
वक्ररेखासुरम्याणि रेखात्रययुतानि च ॥१०७२॥
उत्तरीयार्हरेखाणि मध्ये सूक्ष्मसुरेखया ।
अङ्गुल्यायतरेखाणि सूक्ष्मरेखाणि मध्यतः ॥
अङ्गुलिद्वयरेखाणि वृत्तरेखाणि कुत्रचित् ।
चतुष्कोणसुरेखाणि क्वचिद्द्वन्द्वयुतानि च ॥ १०७४

सुश्लक्ष्णानि सुरेखाणि घनानि विरलानि च ।
लघूनि बहुमूल्यानि गुरूणि च दृढानि च ॥
प्रक्षालेऽधिकरङ्गानि रङ्गितानि च यन्त्रकैः ।
तन्तुबन्धसुरक्तानि नानावर्णाकृतीनि च ॥१०७६
माञ्जिष्ठारागरक्तानि लाक्षाद्रवयुतानि च ।
कौसुम्भरससिक्तानि सिन्दूरारुणितानि च ॥
हरिद्रारागमिश्राणि नीलरागोत्कटानि च ।
अभयारसकृष्णानि निशानीलमयानि च ॥
शुकपिञ्छसवर्णानि केकिकण्ठच्छवीनि च ।
पिञ्छाकपिञ्छवर्णानि हंसतुण्डनिभानि च ॥
चीरघट्टकसेलाकप्रच्छदापाङ्गिकानि च ।
पट्टं काचपुटीपट्टपट्टाश्च विविधाश्शुभाः ॥ १०८०
अङ्गिकाच तथोष्णीषः टोपिका विविधाकृतिः ।
प्रावारा बहुधाकारा दर्शिता वस्त्रधारिभिः ॥
विचित्रवर्णवस्त्राणि पट्टसूत्रमयानि च ।
वसन्ते बिभृयाद्राजा क्षौमकार्पासजानि च ॥
सुश्लक्ष्णानि मनोज्ञानि सूक्ष्माणि विरलानि च ।
निदाघे धारयेद्राजा सितानि वसनानि च ॥
रोमजानि सुसूक्ष्माणि श्लक्ष्णानि च घनानि च ।

माञ्जिष्ठानि च रक्तानि प्रावृट्काले विधारयेत् ॥
पाटलान्यभिरामाणि धूम्राणि मधुराणि च ।
शरत्कालेऽतिसूक्ष्माणि वसनानि विधारयेत् ॥
कौसुम्भानि सुभव्यानि लाक्षिकानि घनानि च ।
अङ्गिकाश्च पटीजातं शीतकाले भजेन्नृपः ॥
शीते बहिःप्रयाणे च यदा वा वीरखेलने ।
अङ्गिकाष्टोपिकाश्चैव बिभृयात्सर्वदा नृपः ॥
सूक्ष्माणि बहुमूल्यानि वर्णाढ्यानि वराणि च ।
नानाद्वीपसमुत्थानि शृङ्गारी धारयेन्नृपः ॥१०८८॥
ऋतूनामनुसारेण शृङ्गारस्यानुसारतः ।
एवं यो बिभृयाद्वस्त्रं वस्त्रभोगः प्रकीर्तितः॥१०८९
वस्त्रभोगोऽयमाख्यातस्सोमेश्वरमहीभुजा ।

माल्यभोगः

अधुना कथ्यते सम्यक् माल्यभोगो मनोहरः ॥
वस्त्रप्रसाधनं कृत्वा ततो माल्यं विधारयेत् ।
चम्पकं मल्लिकाजातिपुन्नागबकुलान्यपि ॥१०९१
केतकीशतपत्राणि गन्धाढ्यं कारवीरकम् ।
पाटला यूथिकाश्चैव सुराणिः सुरपाणिका॥१०९२
तगरं च मुकुन्दं च कुन्दमिन्दीवरं तथा ।

गन्धोत्पलं च नेपालमतिमुक्तं तथैव च ॥ १०९३
मल्लीचम्पकजम्बीरं मिश्रवन्ती तथैव च ।
बाणपुष्पं च माल्येषु शोभार्थं च विधारयेत् ॥
चम्पकं मल्लिकायुक्तं चम्पकान्युत्पलैस्सह ।
चम्पकं सुरभीयुक्तं चम्पकं पाटलान्वितम् ॥
मल्लिका पाटलायुक्ता मल्लिका सुरभीयुता ।
मल्लिका बकुलैर्मिश्रा मल्लिकोत्पलसंयुता ॥ १०९६
मालती बकुळोपेता मालती पाटलान्विता ।
मालती मल्लिकोपेता मालती सुरभीयुता ॥
करवीरेण संयुक्तं शतपत्रं मनोहरम् ।
शतपत्रं समरुकं शतपत्रं सपाटलम् ॥ १०९८ ॥
मालती मल्लिकायूथिबाणपुष्पेण संयुता ।
उरुवैरं तथा यूथी पाटला च तथा मता ॥ १०९९
बिभर्ति माल्यं शिरसा नृपो मत्यनुसारतः ।
खोपकेषु च कुम्भ्यां च माल्यभोगः प्रकीर्तितः ॥
भूलोकत्राणदक्षेण सोमेश्वरमहीभुजा ।
कथितो माल्यभोगोऽयं भूषाभोगोऽधुनोच्यते ॥

भूषाभोग.

एवंविधानि माल्यानि भूषणान्यथ भूपतिः ।
रत्नहेममयान्यङ्गे बिभृयात्सप्रभाणि च ॥ ११०२ ॥

यन्त्रसङ्कट्टितानीव सुवृत्तान्युज्ज्वलानि च ।
नवनीरदकान्तानि मौक्तिकानि वराणि च ॥११०३
शुक्तिगर्भसमुत्थानि कुम्भिकुम्भोद्भवानि च ।
वंशरन्ध्रप्रसूतानि मेघधाराभवानि च ॥ ११०४ ॥
सिंहलद्वीपजातानि रत्नाकरभवानि च ।
दाडिमीबीजकान्तानि शक्रगोपनिभानि च॥११०५
रक्तपद्मसरागाणि बालसूर्यप्रभाणि च ।
माणिक्यान्यपि रम्याणि स्थूलानि विविधानि च ॥
अतसीपुष्पसङ्काशं हरिकान्तसमप्रभम् ।
हरकण्ठसमच्छायं इन्द्रनीलं प्रभान्वितम् ॥११०७
लाहणादिसमुद्भूतं तृणग्राहि मनोहरम् ।
मसृणं चातिशोभाढ्यमिन्द्रनीलं सपीवरम्॥११०८
इन्द्रायुधान्तगर्भेण हरितेन समप्रभम् ।
कीरपक्षसदृक्षाभं गरुडोद्गारसम्भवम् ॥ ११०९ ॥
श्लक्ष्णं मरकतं कान्तं नलिनाभं दलोपमम् ।
विषघ्नं दुर्लभं रत्नं बहुमूल्यं मनोहरम् ॥ १११० ॥
सितं ब्राह्मणजातीयं रक्तं क्षत्रियजातिकम् ।
वैश्यजातीयकं पीतं कृष्णं वृषलजातिकम् ॥
षट्कोणशुद्धं तीक्ष्णं च फलकेषु समं लघु ।

वैराकरभवं वज्रं विप्रजातीयमुत्तमम् ॥ १११२ ॥
एतानि रत्नमुख्यानि कथितानीह लक्ष्मतः ।
गोमूत्रवर्णनिर्णीतं रत्नं गोमेधिकं भवेत् ॥ १११३
ईषत्कृष्णं सिताभं च वैडूर्यकमुदाहृतम् ।
ईषत्पीतं च वज्राभं पुष्यरागं प्रचक्षते ॥ १११४
पक्वबिम्बसमाभासं शुकतुण्डसमप्रभम् ।
काकतुण्डीसमच्छायं प्रवालमभिधीयते ॥ १११५
तपस्यातपसंस्पर्शा[1] दुद्गिरत्यनलं हि यः ।
सूर्यकान्तं विजानीयात् स्फाटिकं रत्नमुत्तमम् ॥
अमृतांशुकरस्पर्शात् संस्रवत्यमृतोदकम् ।
दुर्लभं तन्महारत्नं चन्द्रकान्तं विदुर्बुधाः ॥ १११७
श्वेताभ्रकसमं वर्णं हिमाद्रिशिखरोद्भवम् ।
निर्मलं च प्रभायुक्तं स्फाटिकं परिकीर्तितम् ॥
सर्वेषामेव रत्नानां लक्षणं समुदाहृतम् ।
निजवर्णसमुत्कर्षात् कान्तिमत्त्वान्महार्घता ॥
स्थूलमुक्ताफलैः कार्या कण्ठे त्वेकावली वरा ।
मध्यं मुक्ताफलैः कार्यं त्रिसरं सुविचक्षणैः ॥
तथा पञ्चसरं कुर्यात् नवसप्तसरं तथा ।

[1] तपनस्यातपस्पर्शात्.

उपान्ते नीलमाणिक्यमिश्रितं सुमनोहरम् ॥
काचिनीभिर्मृणालीभिः पङ्क्तिस्थाभिस्सुशोभितान् ।
क्रमशो हीयमानांश्च सरान् कुर्यान्मनोहरान् ॥
गुच्छीकृतमृणालीभिः हारे सर्वान् समान् सरान् ।
नीलमाणिक्यसंयुक्तान् पूर्ववत् परिकल्पयेत् ॥
नीलैर्युक्ता तथा मुक्ताफलैर्मध्ये त्रिभिर्युता ।
नीललम्बानिका ख्याता हरिन्माणिक्यजा तथा ॥
तथैव नीलसंयुक्तमुक्तं पूर्वक्रमेण तु ।
कृतो वर्णसरो नाम दर्शनीयो मनोहरः ॥११२५॥
एत एव सरा हीना मृणालीभिस्सुसंहताः ।
आनाभिलम्बिता भूषा ब्रह्मसूत्रमितीरिता ॥
सुवर्णोपरिविन्यस्तरत्नराजिसमन्वितम् ।
हरिन्माणिक्यनीलने बृंहिता नायकेन च ॥
मध्यदेशनिविष्टेन मणिना परिशोभितम् ।
पदकं रुचिरं रम्यं वक्षस्स्थलविभूषणम् ॥ ११२८
नानारत्नविचित्रं च मध्यनायकसंयुतम् ।
सरकैर्लम्बितं रम्यं पदकं वन्धुरं विदुः ॥ ११२९ ॥
सिंहवक्त्रसमाकारं नानारत्नविचित्रितम् ।
सूसुकैर्लम्बनैर्युक्तं केयूरं बाहुभूषणम् ॥ ११३० ॥

सौवर्णमणिविन्यस्तमुक्ताजालकमङ्गदम् ।
पेचकापिच्छसंयुक्तं बाहुसन्धिविभूषणम् ॥११३१
सुवर्णोपरिविन्यस्तनानारत्नविराजितम् ।
हस्तस्य कटकं रम्यं स्वप्रभापरिशोभितम् ॥
वज्रद्वितयमध्यस्थं हरिन्माणिक्यनोलकम् ।
द्विहीरकमिति ख्यातमङ्गुलीयकमुत्तमम् ॥११३३॥
अष्टकोणनिविष्टैश्च पात्रैभिः परिशोभितम् ।
मध्ये रत्नसमायुक्तमष्टवज्रमुदीरितम् ॥ ११३४ ॥
वृत्ताकारनिविष्टैश्च कुलिशैः परिवेष्टितम् ।
मध्ये च मणिना युक्तं मणि[1]मण्डलमीरितम् ॥
ऋज्वायतचतुष्कोणक्रमोन्नतिनिवेशिभिः ।
वज्रैर्मध्यगमाणिक्यै र्नन्द्यावर्ताङ्गुलीयकम् ॥
माणिक्येन सुरङ्गेण मौक्तिकेन सुशोभिना ।
प्रवाळेनातिरम्येण तथा मकरतेन च ॥ ११३७ ॥
पुष्यरागेण वज्रेण नीलेन परिशोभिना ।
गोमेधिकेन रत्नेन वैडूर्येण विनिर्मितम् ॥११३८॥
रत्नैर्नवग्रहस्थानैर्नवभिः परिकल्पितम् ।
नवग्रहामिति ख्यातमङ्गुलीयकमुत्तमम् ॥ ११३९ ॥

[1] रवि.

अङ्गुलीवेष्टितं वज्रैर्वेष्टितं वज्रवेष्टकम् ।
अन्यरत्नैश्च यत्त्वेवं तत्तद्वेष्टकमुच्यते । ११४० ॥
हीरयोरुभयोर्मध्ये कीलितं हीरमुत्तमम् ।
त्रिहीरकामिति ख्यातमङ्गुलीयकमुत्तमम् ॥ ११४१
यत्तु नागफणाकारं बहुरत्नविभूषितम् ।
अङ्गुलीवलयैर्वज्रैर्वेष्टिता शक्तिमुद्रिका ॥ ११४२ ॥
अन्यैश्च विविधै रत्नैस्सन्निवेशाविशेषतः ।
नानारूपाभिधानैश्च कल्पिता मुद्रिका शुभा ॥
केवलैर्मौक्तिकैरेव वलये सुनिवेशितैः ।
मुक्तानाटङ्कसंज्ञं तत्कर्णभूषणमुत्तमम् ॥ ११४४
वलयद्वयविन्यस्तं मुक्ताफलविराजितम् ।
मध्ये नीलेन संयुक्तं द्विराजिकमुदाहृतम् ॥ ११४५
एवं त्रिराजिकं प्रोक्तं पूर्णमध्यं च मौक्तिकैः ।
तत्पूर्णमध्यमाख्यातं मुक्ताफलविभूषितम् ॥
मौक्तिकानि बहिःपङ्क्तौ तन्मध्ये नलकं ततः ।
वज्राणि च ततोऽप्यं(?) तद्वज्रगर्भमितीरितम् ॥
एवं बहिष्ठमुक्तं यन्मध्ये वज्रैश्च भूषितम् ।
मध्ये माणिक्यसंयुक्तं मणिमण्डलमुच्यते॥११४८
नीलैर्मरकतैश्चैव माणिक्यैश्च करम्भितम् ।

यद्रूपै रचितं मध्ये तत्तत्संज्ञकमुच्यते ॥ ११४९ ॥
सोपानक्रमविन्यस्तवज्रपङ्क्तिविराजितम् ।
षडष्टनेमिभिः कान्तं कुण्डलं तत्प्रचक्षते ॥११५०
शोधितेन सुवर्णेन रुचिरेणातिकान्तिना ।
शृङ्खला विविधा कार्या ताटङ्ककटकानि च ॥
स्त्रीपुंसयोस्समानानि भूषणान्यत्र विस्तरात् ।
कथितान्यत्र वक्ष्यामि स्त्रीणां पुंसां पृथक् पृथक् ॥
अश्वत्थपत्रसङ्काशं सुवर्णेन विनिर्मितम् ।
माणिक्यवज्रखचितमायतैर्मौक्तिकैर्युतम् ॥११५३
तत्र मुक्ताफलैः पार्श्वे मूलकाभ्यां विराजितम् ।
ताभ्यां बहिर्मरालाभं नानारत्नैः प्रकल्पयेत् ॥
तदूर्ध्वं वज्रमाणिक्यमौक्तिकैर्बहुभिर्युतम्[1] ।
तदिदं सज्जतिलकं[2] योषित्सीमन्तभूषणम् ॥११५५
कनत्काञ्चनपट्टेन पिनद्धं वलयाकृति ।
मुक्ताजालं तदूर्ध्वं च कृतं तद्दण्डकं भवेत् ॥११५६
क्रमशो वर्धमानं तच्चूडामण्डलमुत्तमम् ।
केतकीदलसङ्काशं कनत्काञ्चनकल्पितम् ॥११५७
दण्डकस्योर्ध्वभागस्य भूषणं तदुदाहृतम् ।

---

[1] कृतबन्धनम् [2] हंस.

सौवर्णकल्पितं पद्मं नानारत्नविराजितम् ॥११५८
चूडिकापरभागस्य भूषणं परिकीर्तितम् ।
सौवर्णैः कुसुमैः क्लृप्तं मुक्ताजालसमन्वितम् ॥
बृहन्माणिक्यनीलैश्च लम्बनं चूलिभूषणम् ।
पिचुमन्दफलाकारैः मौक्तिकैर्नीलकैः कृतम् ॥
माणिक्यैर्मण्डितै[1]र्हीरैर्मुकुलं कर्णभूषणम् ।
नवभिर्दशाभिर्वाऽपि स्थूलमुक्ताफलैः कृता ॥
कण्ठप्रमाणरचिता सरिका गलभूषणम् ।
तस्या बाहिश्च संलग्ना लम्बिनी नीलनिर्मिता ॥
ततो बाहिश्च संलग्ना वज्रसङ्कलिका[2] शुभा ।
सिंहावक्त्रसमाकारौ स्वर्णरत्नविनिर्मितौ ॥ ११६३
मुक्तसूसुकसंयुक्तौ नीलमाणिक्यलम्बिनौ ।
कण्ठिकैः[3] कीलितौ कार्यौ भुजभूषणकैरवौ ॥
नामतो बाहुवलयौ पुंसि यावङ्गदाभिधौ ।
काञ्चनीभिश्शलाकाभिः सुसूक्ष्माभिर्विनिर्मितौ ॥
मणिबन्धमितादूर्ध्वं वलयैर्विहितैः क्रमात् ।
प्रादेशमात्रकं दैर्घ्यं विस्तारे बाहुवेष्टनम् ॥ ११६६
द्विधा विभज्य कर्तव्यं ग्रथितं कालकेन तु ।

---

[1] गारुडै..　　[2] वक्रश्रृङ्खलिक .　　[3] कञ्चुकै.

अनेनैव प्रमाणेन वज्रमाणिक्यमौक्तिकैः ॥ ११६७
चूडकं मण्डनं स्त्रीणां प्रकोष्ठस्य विभूषणम् ।
अनेनैव प्रकारेण तदर्धेन विनिर्मितम् ॥ ११६८
अर्धचूडमिति ख्यातं स्त्रीणां प्रियतमं सदा ।
चतुरङ्गुलविस्तारं जघनाभोगवेष्टितम् ॥ ११६९ ॥
सौवर्णरत्नखचितं सूत्रकैर्लम्बनैर्युतम् ।
हैमघर्घरघण्टाभिर्निर्मितं स्वसंयुतम् ॥ ११७० ॥
काञ्चीदामेति विख्यातं कटिभूषणमुत्तमम् ।
हस्तचूडकवज्रस्य जङ्घाकाण्डप्रमाणकौ ॥ ११७१
नानारत्नैश्च खचितौ विख्यातौ पादचूडकौ ।
सुवर्णरचितौ कार्यौ त्रिभागकृतखण्डनौ ॥ ११७२
सन्धिदेशे सुसंश्लिष्टौ कीलकेन च कीलितौ ।
चतुरश्रौ षडश्रौ वा तथाऽष्टाश्रौ च कारयेत् ॥
सौवर्णैर्बुद्बुदै रम्यैः पङ्क्तिस्थैर्वा विराजितौ ।
श्लक्ष्णौ वा कान्तिसंयुक्तौ नादवन्तावथापि वा ॥
रत्नैर्वा विविधैर्युक्तौ कटकौ पदभूषणौ ।
त्रिपञ्चशृङ्खलाक्लृप्तौ नानारत्नसरैः कृतौ ॥ ११७५
कीलकाहितसङ्घातौ पादपट्टाविती रितौ ।
किङ्किण्यस्स्वर्णरचिता गुणगुम्भितविग्रहाः ॥

नादवत्यस्सुरम्यास्ता पादघर्घरिकाभिधाः ।
ईदृग्रूपसमायुक्ता नानारत्नैर्विनिर्मिताः ॥ ११७७
ध्वनिहीनास्सुशोभाढ्या एडकाः परिकीर्तिताः ।
आयताश्च सुचक्राश्च कटकाकारनिर्मिताः ॥
अन्दुका इति विख्याताः योषितां पादभूषणम् ।
पादतर्जनिमानेन कनत्काञ्चननिर्मिताः ॥ ११७९
स्थूलाश्च ध्वनिसंयुक्ताः यमला मुद्रिका वराः ।
शिखरैश्शोभितं यत्तु शेखरं तद्विदुर्बुधाः ॥ ११८०
मुकुलाभं भवेद्यत्तु मुकुलं तत्प्रकीर्तितम् ।
मध्ये चाष्टाङ्गुलं पञ्चपञ्चभिश्शिखरैर्युतः ॥ ११८१ ॥
सौवर्णरत्नसंयुक्तपट्टो राज्ञां प्रशस्यते ।
केवलं सरकैर्युक्तं शिरोवेष्टनमुच्यते ॥ ११८२ ॥
एवं विरचितै रत्नै राज्ञां मस्तकभूषणम् ।
दलकं हेमरचितं व्याघ्रपुच्छविनिर्मितम् ॥ ११८३
मुक्तामाणिक्यरचितं पुरुषाणां विभूषणम् ।
शुचिना भूषणं धार्यं दिव्यरत्नविनिर्मितम्॥ ११८४
रत्नाधिदेवतास्तुष्टा यच्छन्ति महतीं श्रियम् ।
यथारुचि यथायोगं प्रयच्छन्ति च सम्मतम् ॥
धत्ते यद्भूषणं राजा भूषाभोगः प्रकीर्तितः ।

भूषाभोगोऽयमाख्यातस्सोमेश्वरमहीभुजा॥११८६

आसनभोगः

सम्प्रत्यासनभोगश्च कथ्यते राजवल्लभः ।
चम्पकाम्रमधूकानां पनसोदुम्बरस्य वा ॥ ११८७
पीठानि सुविशालानि चतुष्पादयुतानि च ।
आयतं चतुरश्रं च काञ्चनेनोपशोभितम् ॥११८८
श्लक्ष्णं मनोहरं पीठं मङ्गलासनमुत्तमम् ।
श्रीपर्णीरचितं रम्यं हस्तमात्रयुतं शुभम् ॥११८९
अरत्निविस्तृतं पीठं पवित्रासनमुच्यते ।
सालदारुमयं भव्यं दृढश्लक्ष्णं सुविस्तृतम्॥११९०
चतुष्पादयुतं पीठं मज्जनासनमीरितम् ।
इष्टकानिर्मितं पीठं पृष्ठाधारेण संयुतम् ॥ ११९१
सुधाकुट्टिमशोभाढ्यं मज्जने पीठमीरितम् ।
कार्पासपूरितं वृत्तं द्वित्रिपट्टाव[1]कुण्ठितम् ॥
हंसपिञ्छभृतं वाऽपि गर्दिकाख्यं सुखावहम् ।
छागचर्ममयं रक्तमूर्णागर्भं सुविस्तृतम् ॥ ११९३
नानावर्णविचित्रं तदासनं पट्टगर्दिका ।
तस्योपरि सुविन्यस्तहंसपिञ्छैस्सुपूर्णितम् ॥

[1] छागीपादाव.

सितपट्टपिनद्धं च श्वेतप्रच्छदसंवृतम् ।
सङ्गीतकप्रसङ्गे च गजवाजिविनोदने ॥ ११९५ ॥
सर्वदा सुखसंवासे भूशय्यासनमुत्तमम् ।
पञ्चभिस्सप्तभिर्वाऽपि नवभिर्लोहजैः पदैः ॥
लोहपट्टकृताधारैर्लोहजालकमूर्धभिः ।
पट्टिकापट्टगर्भस्थं कार्पासेन विनिर्मितम् ॥११९७
लोहासनमिदं प्रोक्तमुपरिष्टात्तु कीलितम् ।
सालदारुविनिर्माणं दन्तिदन्तविचित्रितम् ॥
नानावर्णकृताकारं पृष्ठे फलकसंयुतम् ।
चतुष्पादकृताधारं सार्धहस्तं सुविस्तृतम् ॥११९९
वितस्तिसप्तकायाममृदुशय्यासमन्वितम् ।
शोभाढ्यं रुचिरं श्लक्ष्णं दृढं चित्रं मनोहरम् ॥
ईषत्समुन्नतं राज्ञां पृष्ठाधारसमन्वितम् ।
रुचिरेण सुवर्णेन निर्मितं रत्नरञ्जितम् ॥ १२०१
अष्टभिस्स्फाटिकैस्सिंहैर्मूर्धभिस्सुविधारितम् ।
अथ काञ्चनविन्यस्तरत्नवेदित्रयान्वितम् ॥ १२०२
आस्थानमण्डपे राज्ञां सिंहासनमिति स्मृतम् ।
पूतासनं देवकार्ये शोषायां? मङ्गलासनम्॥१२०३
स्वैरमन्यानि पीठानि सहर्म्यास्थानमण्डपे ।

एतानि पीठान्यध्यास्ते राजा विभवभूषितः ॥
एवमासनभोगोऽयमभिज्ञैः परिभाषितः ।
एवमासनभोगोऽयं कथितस्सोमभूभुजा ॥१२०५

चामरभोगः

चारुचामरभोगोऽयं कथ्यते देववल्लभः ।
आस्थानमण्टपे रम्ये विशाले सुखशीतले ॥
विन्यस्तरत्नशोभाढ्ये हेमस्तम्भविभूषिते ।
चित्रभित्तिमनोरम्ये नानावर्णवितानके ॥ १२०७
सुधाकुट्टिमके दिव्ये सिंहपीठस्थितं नृपम् ।
शरच्छशाङ्कसङ्काशैः यशःपुञ्जनिभैस्सितैः ॥
मण्डितैर्हेमदण्डैश्च रत्नकान्तिविचित्रितैः ।
मयूरपिञ्छसम्भूतैः चमरीपुच्छसम्भवै ॥ १२०९
चामरैर्हस्तविन्यस्तैर्वीजयन्ति वराङ्गनाः ।
सहस्राक्षमुखाभासैः बर्हिबर्हविनिर्मितैः ॥ १२१०
कूर्चकैर्विजयन्त्योऽथ श्यामलाः कुन्तलाङ्गनाः ।
वालकव्यजनै रम्यैस्सौरभेण मनोहरैः ॥ १२११
वीजयन्ति महीपालं कामिन्यः कामदेवताः ।
चन्द्रमण्डलसङ्काशैः नानापट्टविनिर्मितैः ॥१२१२
वीजयन्ति धरापालं व्यजनैर्मृगलोचनाः ।

तालपत्रसमुद्भूतैरभ्रकालङ्कृतैः शुभैः ॥ १२१३ ॥
व्यजनैश्चतुरश्रैश्च वीजयन्ति सुमध्यमाः ।
शोभार्थं विभवार्थं च स्वेदापनयनाय च ॥१२१४
चामरैर्वीजनं यत्तत्स्म भोगश्चामरशाभिधः ।
एवं चामरभोगोऽयं भाषितस्सोमभूभुजा ॥१२१५

आस्थानभोगः.

अधुनाऽऽस्थानभोगोऽयं कथ्यते जनवल्लभः ।
चामरव्यजनैरेवं वीज्यमानो महीपतिः ॥ १२१६
आस्थानमण्टपन्यस्तवरसिंहासनस्थितः ।
समाहूय प्रतीहारं सर्वाह्वानं समादिशेत् ॥ १२१७
ततो दौवारिकाहूता विशन्ति नृपमन्दिरम् ।
पटीपिनद्धदोलान्तास्स्थिताः शुद्धान्तयोषितः ॥
विचित्रछत्रसञ्छन्नछायाश्चामरवीजिताः ।
सौविदल्लकरोच्चण्डवेत्रदण्डनिवारणैः ॥ १२१९ ॥
अपसर्पापसर्पेति गच्छ गच्छेति तर्जनैः ।
सुदूरोत्सारिताशेषमार्गस्थजनवर्जिताः ॥ १२२० ॥
प्रविशेयुर्नृपस्थानं सर्वाभरणभूषिताः ।
नानारत्नमयैर्दिव्यैर्मुक्तामाणिक्यसम्भवैः ॥ १२२१
पट्टकै रत्नशोभाढ्यैर्वलिमण्डनमाण्डितैः ।

सीमन्तस्यान्तरे हंसतिलकेन विराजिताः ॥
मुक्तामरकतोत्कीर्णैर्नीलमाणिक्यलम्बनैः ।
कर्णावतंसैर्मुकुलैः कुण्डलैर्मणिमण्डितैः ॥१२२३
क्वणभूषणकैर्दिव्यैर्मुक्तामाणिक्यसम्भवैः ।
पदकै रत्नशोभाढ्यैर्दिव्यरत्नयुतैस्सरैः ॥ १२२४ ॥
हारैर्मुक्तामयैश्शुभ्रैः स्तनस्थलविभूषणैः ।
विचित्ररत्नराचितैरङ्गदैर्बाहुभूषणैः ॥ १२२५ ॥
सन्धिभूषणकैर्दीप्तैश्चूडकै रत्नरञ्जितैः ।
कटकै रत्नखचितैर्नानारत्नाङ्गुलीयकैः ॥ १२२६ ॥
रत्नकाञ्चीकलापैश्च जङ्घाभूषणचूडकैः ।
नूपुरैः पादकटकैः दिव्यरत्नविभूषितैः ॥ १२२७ ॥
पादपट्टकधाराभिः किङ्किणीजालकैरपि ।
अङ्घ्रिशाखाविभूषाभिः क्वणन्तीभिः पदेपदे ॥
मुद्रिकाभिर्विचित्राभिर्भूषिता नृपयोषितः ।
दिव्यवस्त्रपरीधानपट्टकञ्चुकशोभिताः ॥ १२२९ ॥
क्षौमकार्पासकैर्युक्ता गन्धमाल्याविभूषिताः ।
श्रीखंडक्षोदशुभ्राङ्ग्यः कुङ्कुमद्रवरञ्जिताः ॥१२३०
सान्द्रकस्तूरिकापत्रवल्लीभिस्समलङ्कृताः ।
तिलकैर्विविधैर्भव्यैर्नानावर्णैर्मनोहरैः ॥ १२३१ ॥

मनोरमा रमण्यस्ताः तरुण्यस्सुखभूमयः ।
यथायोग्यं यथास्थानं यथारूपं यथासनम् ॥ १२३२
समन्तान्नृपमावेष्ट्य निविष्टाः पर्युपासते ।
काश्चित्तुरङ्गमारूढाः काश्चिदश्वतरीस्थिताः ॥
काश्चिच्चरणसञ्चारैः[1] चालयन्त्यो मनो नृणाम् ।
काश्चित्कनकभूषाढ्याः काश्चिद्रत्नविभूषिताः ॥
काश्चिन्मुक्तामयैर्हारैर्मण्डितस्तनमण्डलाः ।
काश्चिच्छङ्खमयैश्श्लक्ष्णैर्नानारूपविनिर्मितैः ॥
मणिभिर्भूषिताः काश्चिन्नयनानन्दचन्द्रिकाः ।
काश्चित्सुरक्तवस्त्रैश्च रञ्जयन्त्यो मनो नृणाम् ॥
हरितैर्वसनैः काश्चिद्धरन्त्यो हृदयं नृणाम् ।
नीलाम्बरधराः काश्चिन्निगिरन्त्यो दृशौ नृणाम् ॥
श्वेताम्बरैस्तथा काश्चित्प्रविशन्त्यो मनो नृणाम् ।
मल्लिकामालिकाः काश्चित्काश्चिच्चम्पकमालिकाः ॥
मालतीमालिकाः काश्चित्काश्चित्कमलमालिकाः ।
काश्चिदुत्पलमालाभिः भूषिताश्चोत्पलेक्षणाः ॥
काश्चित्सुरभिमालाभिर्भाजिता भ्रमराकुलाः ।
काश्चित्कुन्तलकामिन्यः कुटिलीकृतकुन्तलाः ॥

---

[1] सञ्चारा.

काश्चिद्द्राविडकामिन्यः प्रकाशितपयोधराः ।
काश्चिच्च लाटललनाः सिन्दूरारुणमस्तकाः ॥
महाराष्ट्रस्त्रियः काश्चित् लम्बलोलकभूषिताः ।
आन्ध्रनार्यो वराः काश्चिदपसव्योत्तरीयकाः ॥
गुर्जर्यो वनिताः काश्चिदापाणिकृतकञ्चुकाः ।
काम्भोजललनाः काश्चिद्राकाचन्द्रसमाननाः ॥
काश्चित्प्रहासवदनाः काश्चिद्रम्यमुखास्स्त्रियः ।
सुनीलमूर्धजाः काश्चित्काश्चिच्चन्द्रार्धभालिकाः ॥
सुशोभश्रवणाः काश्चित्काश्चित्स्वास्तिकपोलकाः ।
भ्रूभङ्गवित्रासकराः[1] काश्चिद्दीर्घविलोचनाः ॥
रम्यनासापुटाः काश्चित्काश्चिद्दाडिमदान्तिकाः ।
पक्वबिम्बाधराः काश्चित्काश्चित्कम्बुशिरोधराः ॥
वृत्तबाहुलताः काश्चित् काश्चित्कोमलपाणयः ।
केतकीनखराः काश्चित्काश्चित्पीनपयोधराः ॥
कृशोदर्यस्तथा काश्चित् काश्चित्स्थूलनितम्बिकाः ।
रम्भोरुयुगलाः काश्चित्काश्चिज्जङ्घामनोहराः ॥
मृदुपादतलाः काश्चित् काश्चिच्चन्द्रनखत्विषः ।
मुग्धाश्श्यामाङ्गनाः काश्चित् काश्चित्स्वर्णसमप्रभाः ॥

[1] विभ्रमाः काश्चित्.

वंशश्यामाः स्त्रियः काश्चित्काश्चिच्चम्पकसत्त्विषः ।
यूनां हृदयहारिण्यो गौराश्श्यामाश्च काश्चन ॥
चित्तवृत्तिहरा नृणां कङ्कुश्यामाश्च काश्चन ।
काश्चिदुत्पलवर्णेन समत्वेनाभिवर्णिताः ॥१२५१॥
काश्चिद्भ्रमरपक्षाभाः स्निग्धकान्तिमनोहराः ।
काश्चिन्मरालगामिन्यः काश्चिन्मृगविलोचनाः ॥
कलकण्ठरवाः काश्चित्काश्चित्सर्वगुणान्विताः ।
काश्चिद्बाला मनोहार्यः काश्चिन्मुग्धा वरस्त्रियः ॥
मध्ये मनोहराः काश्चित्काश्चित्प्रौढिविचक्षणाः ।
आस्थानभूषणास्सर्वास्समागत्य नृपालयम् ॥
प्रवेश्योभयभागे च पृष्ठभागे च सुस्थिताः ।
उत्फुल्लसलिलाक्रान्तकेतकीपत्रसन्निभैः ॥१२५५॥
कटाक्षैर्वीक्ष्य राजानं हर्षयन्ति मुहुर्मुहुः ।
कान्ता दन्तविनिर्मुक्तचन्द्रिकाश्चित्तचित्रितैः ॥
सिञ्चन्त्य इव भूपालं हसितेन वराङ्गनाः ।
प्रतिरूपगुणाकारैरलङ्कारैरलङ्कृताः ॥ १२५७ ॥
कुमारा विनयोपेताः प्रणम्य जनकं नृपम् ।
आसने च यथोद्दिष्टे यथार्हं पृथिवीभुजा ॥१२५८
उपविष्टाः पुरोभागे नातिदूरे मनस्विनः ।

पुरोधाऽशुक्लवसनो रक्तकुण्डलमण्डितः ॥१२५९॥
कुमाराभ्याशदेशे च निविशेत शुभासने ।
अमात्यमन्त्रिसचिवाः भूषिता वस्त्रभूषणैः ॥
निविशेयुर्नृपस्थानं नृपादिष्टासने क्रमात् ।
मण्डलाधीश्वराश्शूरास्समन्तात्साधका अपि[1] ॥
उदारभूषणैर्दान्ताः पट्टवीरविराजिताः ।
वामदक्षिणपार्श्वस्थाः पुरोभागे महीभुजः ॥
संविशेयुर्यथास्थानमासनेषु नृपाज्ञया ।
देशाधिकारिणः केचित् केचिद्ग्रामाधिकारिणः ॥
धर्माधिकारिणः केचित् केचिदर्थाधिकारिणः ।
कामाधिकारिणः केचित् केचित्कोशाधिकारिणः ॥
माल्याधिकारिणः केचित्केचिदर्घाधिकारिणः ।
तुलाधिकारिणः केचित्केचिन्मुद्राधिकारिणः ॥
दूताधिकारिणः केचित्केचिद्द्वीपाधिकारिणः ।
भाराधिकारिणः केचित्केचिद्दुष्टाधिकारिणः ॥
तीर्थाधिकारिणः केचित्केचिद्वित्ताधिकारिणः ।
मार्गाधिकारिणः केचित्केचिद्द्वाराधिकारिणः ॥
द्वास्थाधिकारिणः केचित्केचिन्मल्लाधिकारिणः ।

[1] सामान्तामात्यका अपि.

अङ्गाधिकारिणः केचित्केचिद्योधाधिकारिणः ॥
देवाधिकारिणः केचित्केचित्सर्वाधिकारिणः ।
दानाधिकारिणः केचित्केचिद्दण्डाधिकारिणः ॥
गजाधिकारिणः केचित्केचिदश्वाधिकारिणः ।
रथाधिकारिणः केचित्केचित्प्रासाधिकारिणः ॥
शस्त्राधिकारिणः केचित्केचिच्चापाधिकारिणः ।
मृगाधिकारिणः केचित् केचित्प्रेक्षाधिकारिणः ॥
स्थलाधिकारिणः केचित्केचित्सूदाधिकारिणः ।
तोयाधिकारिणः केचित्केचित्खाद्याधिकारिणः ॥
दीपाधिकारिणः केचित्केचित्तैलाधिकारिणः ।
गन्धाधिकारिणः केचित्केचिन्माल्याधिकारिणः ॥
वनाधिकारिणः केचित्केच्छास्त्राधिकारिणः ।
गवाधिकारिणः केचित्केचित्क्षीराधिकारिणः ॥
स्नानाधिकारिणः केचित्केचिद्वासाधिकारिणः ।
कीराधिकारिणः केचित्केचित्कर्माधिकारिणः ॥
शय्याधिकारिणः केचित्केचित्कान्ताधिकारिणः ।
पुत्राधिकारिणः केचित्केचिद्विद्याधिकारिणः ॥
वाद्याधिकारिणः केचित्केचिद्गेयाधिकारिणः ।
नृत्ताधिकारिणः केचित्केचिच्चित्राधिकारिणः ॥

वेश्याधिकारिणः केचित्केचित्खन्यधिकारिणः ।
शुल्काधिकारिणः केचित्केचिद्धान्याधिकारिणः ॥
सुराधिकारिणः केचित्केचिद्दास्त्वाधिकारिणः ।
अश्माधिकारिणः केचित्केचिच्छूद्राधिकारिणः ॥
पटीपट्टाङ्गिकाश्चित्रा दीर्घबाहुविनिर्मिताः ।
धारयन्तश्शुभोष्णीषा हेमाभरणभूषिताः ॥१२८०
प्रविशेयुर्यथास्थानं भक्तिनम्रा नृपेश्वरे ।
कृताञ्जलिपुटास्सर्वे मुखालोकनतत्पराः ॥१२८१
ताम्बूलधारिणो भक्ता विश्वस्ताः खड्गधारिणः ।
राज्ञस्सकाशे तिष्ठेयुस्सावधाना जितेन्द्रियाः ॥
कवयो गायकाश्चैव वादिनो वाग्मिनस्तथा ।
पाठकाः कथकाः भट्टास्सूता मागधवन्दिनः ॥
वाग्गेयकाराश्चतुरा गायका वांशिका अपि ।
वैणिका वाद्यकाराश्च नर्तकाश्चारणा नटाः ॥
वैतालिकाश्चाटुकाराः प्रहासचतुरा नराः ।
अङ्कमल्लाश्च योधाश्च तथाऽन्ये विविधा नराः ॥
विचित्रवर्णैस्सौवर्णैर्भूषणैर्भूषिताम्बराः ।
दिव्यपट्टांशुकोष्णीषभ्राजिता भव्यमूर्तयः ॥१२८६
शौर्यौदार्यैस्तपोयुक्ताः नृपचित्तानुरञ्जकाः ।

वारं वारं समन्तात्ते जय जीवेति वादिनः ॥१२८७
उपासीरन्नृपश्रेष्ठं सेवाधर्मविशारदाः ।
तच्चित्तवेदिनस्सर्वे विनयानतमस्तकाः ॥१२८८॥
आस्थानमण्डपान्तस्स्थैस्सर्वैस्समेवागतैर्नृपम् ।
वीक्षमाणैर्नरैर्भाव्यं नवं चन्द्रमिवोदितम् ॥१२८९
नानादेशाधिपान् भूपान् स्वात्मरक्षार्थमागतान् ।
प्रवेशने प्रतीहारीमादिशेत्पृथिवीपतिः ॥१२९०॥
प्रवेशितान् प्रतीहारैः प्रणतान् दण्डवद्भुवि ।
सप्रसादमिति ब्रूयादुत्तिष्ठत निषीदत ॥ १२९१ ॥
नृपाणामासनं योग्यं दापयेन्मानपूर्वकम् ।
आसनेषूपविष्टानां दृष्ट्या सन्तोषमावहेत् ॥
वचनेन महाप्रीतिं जनयित्वा गतक्लमान् ।
दिव्यैर्वस्त्रैः पटीपट्टैर्विचित्रैस्स्वर्णभूषणैः ॥ १२९२
सुरत्नाभरणैर्दिव्यैर्वाजिभिर्वरवारणैः ।
ग्रामैः पुरैस्तथा देशैस्तोषयेत्पार्थिवान् नृपः ॥
विसर्जयेच्च तान् सर्वान् बहुमानपुरस्सरम् ।
आवासेषु सुरम्येषु स्थापयेत्पृथिवीपतिः ॥
कांश्चित्प्रसन्नया दृष्ट्या कांश्चिन्मधुरभाषितैः ।
कांश्चित्प्रभूतदानेन कांश्चिन्मानेन हर्षयेत् ॥

कुमारान् मन्त्रिणोऽमात्यान् सचिवान् मण्डलाधिपान् ।
सुभटान् सेवकान् दक्षान् सर्वानप्यधिकारिणः ॥
विद्याप्रसादपात्राणि भाग्यपात्राणि कानिचित् ।
तोषयित्वा यथायोग्यं सर्वांस्तांश्च विसर्जयेत् ॥
तरुणान् प्रेमदृष्ट्या च मुग्धान् मुग्धावलोकनैः ।
प्रौढांश्च चतुरालापैः प्रियवाक्यैर्मनःप्रियाः ॥१२९९
इत्थं सन्तोषितान् सर्वान् प्रस्थाप्य निजमन्दिरम् ।
पुरन्दरनिभो राजा प्रविशेत्केलिकेतनम् ॥ १३००
करोत्यास्थानमित्थं यः पार्थिवः प्रथितोन्नतिः ।
एवमास्थानभोगोऽयं[1] कथितस्सोमभूभुजा ॥

पुत्रोपभोगः.

पुत्राणामुपभोगोऽयमधुना परिकीर्त्यते ।
ऋतुकालमनुल्लङ्घ्य पुत्रार्थी सङ्गमाचरेत् ॥१३०२
सवर्णासु विशेषेण सतां धर्ममनुस्मरन् ।
रजोदिनात्समारभ्य यावत्षोडशवासरम् ॥१३०३
ऋतुस्तावद्भवेत् स्त्रीणां प्रजापतिविनिर्मितः ।
तिथिं द्वितीयां यत्नेन चतुर्थीं च विवर्जयेत् ॥

[1] आस्थानभोग इत्येष.

समासु रात्रिष्वन्यासु भक्तिमान् पुत्रवाञ्छया ।
विषमासु भवेत्कन्या तस्मात्ताः परिवर्जयेत् ॥
पुष्टाहारा भवेत्कन्यां तस्मात्कुर्वीत तां कृशाम् ।
रक्ताधिक्याद्भवेत्कन्या शुक्राधिक्याद्भवेत्सुतः ॥
तस्माच्छुक्रस्य वृद्ध्यर्थं वृष्यं भुञ्जीत भोजनम् ।
जाते गर्भे भवेत् स्त्रीणां पाण्डुरं गण्डमण्डलम् ॥
कुचयोश्चूचुकं कृष्णं जठरं किञ्चिदुन्नतम् ।
तृतीये मासि सम्प्राप्ते कुर्यात्पुंसवनाक्रियाम् ॥
श्रवणे मृगशीर्षे च हस्ते पुष्ये पुनर्वसौ ।
मूले पुंसाञ्ज्ञिते धिष्ण्ये वारेऽङ्गारे[1] बृहस्पतौ ॥
माषाद्वितयमध्यस्थं यवं घृतसमन्वितम् ।
प्राशयेत्तु पतिः पत्नीं वेदमन्त्रमुदीरयन् ॥१३१०॥
एतत्पुंसवनं ख्यातं गर्भस्थः पुरुषो भवेत् ।
अष्टमे मासि षष्ठे वा धिष्ण्ये पुंनामके नृपः ॥
समन्तोन्नयनं कुर्यादष्टमङ्गलसंज्ञितम् ।
उदुम्बरफलैः क्लृप्तं कुर्यात्कण्ठविभूषणम् ॥१३१२
शल्लीपुच्छसंभूतकण्टकाग्रेण मूर्धनि ।
सीमन्तोन्नयनं कुर्याद्भार्यायाः पृथिवीपतिः ॥

1 वारेऽङ्गारे

वैणिकैर्वादयद्भिश्च सोमरागमनोहरम् ।
उच्चारयत्सु विप्रेषु साममन्त्रान् शुभाक्षरान् ॥
पटहादिभिरन्यैश्च तूर्यैः पञ्चमहास्वनैः ।
अष्टमङ्गलनामानं कुर्यादुत्सवमूर्जितम् ॥ १३१५॥
तोषयेद्विजमुख्यांश्च भूभृत्स्व[1]र्णाम्बरादिभिः ।
सम्पूर्णे नवमे मासि जाते पुत्रे मनोहरे ॥१३१६
जातकर्म प्रकुर्वीत स्वगृह्योक्तेन कर्मणा ।
सौवर्णमुद्रिकालिप्ते प्राशयेन्मधुसर्पिषी ॥ १३१७
बालकं च ततो मातुः पाययेच्च पयोधरम् ।
तत्राभ्युदयिकश्राद्धं हेम्ना कुर्वीत भूपतिः ॥१३१८
प्रातस्सन्ध्यासु सायाह्ने रात्रावपि सुखावहम् ।
दिवसाष्टादशादूर्ध्व[2]मुत्तरात्रितये मृगे ॥ १३१९ ॥
चित्रानुराधाहस्तेषु श्रवणादित्रयेऽपि च ।
अश्विन्यां रोहिणीस्वात्यो रेवत्यां पुष्यमूलयोः ॥
शुभे वारे तिथौ लग्ने पुत्रराश्यनुरूपतः ।
विख्यातं राजवंश्यानां नामकुर्यान्महीपतिः ॥
सिंहं मल्लं तथा बाहुं पालं वर्म पराक्रमम् ।
सेनं चन्द्रं तथाऽऽदित्यं सत्वं केसरिणं तथा ॥

[1] गोभूस्व.

[2] द्वादशाद्वत्सरादूर्ध्वं.

अनीकं च पदं प्रान्ते कुर्यान्नाम्नो यथारुचि ।
षष्ठे मासि शिशोः कार्यमन्नप्राशनमुत्तमम् ॥
रेवतीरोहिणीहस्तपुष्यश्रवणयुग्मके ।
उत्तरात्रितये चापि वारे चेन्दौ बृहस्पतौ ॥१३२४
बुधभार्गवयोश्चैव शस्ते लग्ने शुभे तिथौ ।
बालकानां स्वकीयानामव्यक्तं शृणुयाद्वचः ॥
अर्धार्धं भाषितं तेषां गालिदानं? मनोहरम् ।
जानुचङ्क्रमणं पश्येत्स्खलितं च पदक्रमम् ॥
मातृहस्तावलम्बेन ललितं गमनं शनैः ।
फलप्रदर्शनाद्बालमागतं मातुरङ्कतः ॥ १३२७ ॥
अङ्कमारोपयेदेनमुरस्स्कन्धतलं तथा ।
रक्षामन्त्राक्षरैः पत्रै रक्षया परिवेष्टितैः ॥१३२८॥
शार्दूलनखसंयुक्तं प्रवालाङ्कुरशोभितम् ।
कन्दर्पकेन[1] चित्रेण शङ्खेन च विराजितम् ॥
अजलोमजसम्मिश्रं बिभ्राणं कण्ठसूत्रकम् ।
पञ्चलोहसुतसैश्च वलयैर्भूषिताङ्घ्रिकम् ॥ १३३० ॥
पदयोः कटिदेशे तु हेमघर्घरिकायुतम् ।
स्वर्णकुण्डलिकाप्रोतकर्णपालीविराजितम् ॥

---

[1] कपर्दकेन.

अश्वत्थपत्रसङ्काशमूर्धभूषाङ्कितालिकम् ।
मातरं पितरं दृष्ट्वा धावमानमितस्ततः ॥ १३३२॥
कुमारं सुकुमाराङ्गमालिङ्गेदवनीपतिः ।
कर्णौ कचे च कर्षन्तं वर्षन्तं हर्षमात्मनि ॥१३३३
चुम्बन्तं वदनं भूपः परिष्वज्य सुखी भवेत् ।
योगीन्द्रमिव सानन्दं दिग्वस्त्रमपरिग्रहम् ॥१३३४
जटिलं भूतिभूषाढ्यं गङ्गाधरमिवात्मजम् ।
दिगम्बरमसव्रीळं जटिलं धूलिधूसरम् ॥ १३३५
भाग्यवन्तो हि पश्यन्ति गङ्गाधरमिवात्मजम् ।
विष्णुरुद्रसमाभासं नरकत्राणकारणम् ॥ १३३६॥
पुत्रं गात्रात्समुत्पन्नमीक्षन्ते पुण्यभागिनः ।
एवं[1] द्विवत्सरस्यान्ते कारयेत्कर्णवेधनम् ॥ १३३७
आश्विन्यां शोभने वारे तिथौ लग्ने च शोभने ।
वत्सरद्वितयादूर्ध्वं चूडा कार्या यथाकुलम् ॥१३३८
अश्विनीरेवतीमूलाज्येष्ठासु श्रवणत्रये ।
हस्तत्रये च पुष्ये च तथैवादितिदैवते ॥ १३३९॥
शस्ते वारे शुभे लग्ने तिथौ च शुभशंसिनि ।
अन्नप्राशनधिष्ण्येषु ध्रुवनक्षत्रवर्जिते ॥ १३४० ॥

---

1 एक.

भौमे सौम्ये गुरौ शुक्रे कुर्यान्मौञ्जीनिबन्धनम् ।
वर्षे गर्भाष्टमे वाऽपि गर्भैकादशकेऽपि वा ॥१३४१
व्रतबन्धं प्रकुर्वीत क्षत्रियस्य यथोचितम् ।
आर्द्रायां श्रवणे स्वात्यां चित्रायां हस्तमूलयोः ॥
पूर्वात्रये च रेवत्यामाश्लेषायां पुनर्वसौ ।
मृगशीर्षे धनिष्ठायामश्विनीपुष्ययोरपि ॥ १३४३
वारे बुधे गुरौ शुक्रे विद्यारम्भं च कारयेत् ।
वेदमध्यापयेत्पुत्रमस्त्रविद्यां च शिक्षयेत् ॥१३४४॥
गजाश्वारोहणे तद्वद्रथयाने विशारदम् ।
शस्त्रशास्त्रकृताभ्यासान् गजारोहविशारदान् ॥
सुशिक्षितान् सुतीक्ष्णांश्च सद्विद्यैस्तान् परीक्षयेत् ।
एकैकं क्रमशः पुत्रं परीक्षेत विचक्षणः ॥ १३४६ ॥
पाटवं च बलं प्रज्ञां कलाकौशलमेव च ।
श्रुतौ नीतौ तथा तर्के काव्ये व्याकरणेऽपि च ॥
धनुर्वेदे भूमिबले स्वरशास्त्रे कलास्वपि ।
दृढघाते दूरपाते लघुसन्धानमोक्षणे ॥ १३४८ ॥
विचित्रव्यथने लक्ष्ये चापविद्यां परीक्षयेत् ।
दूरे दृढं चले लक्ष्यं लाघवं बाणमोक्षणे ॥१३४९
विद्योत्कर्षं परीक्षेत बलं कोदण्डकर्षणे ।

गात्रेषु सौष्ठवं पादसञ्चारे लाघवं तथा ॥१३५०॥
हस्ते निष्ठुरता दृष्टौ स्थैर्यं शौर्यं च चेतसि ।
वितस्तिस्त्रिचतुःपञ्चभेदा ख्याताऽसिधेनुषु ॥
खड्गकुन्तगदाचक्रशक्तिशूलपरश्वधैः ।
परप्रयुक्तघातेषु वञ्चना प्रौढिरिष्यते ॥ १३५२ ॥
स्वयंप्रयुक्तघातेषु दृढं कर्म परीक्ष्यते ।
छुरिकायां तथा लट्व्यां? बन्धचातुर्यमीक्ष्यते ॥
परस्य बाहुसंरोधं वीक्षते पादतो नृपः ।
एवमस्त्रप्रकर्षं तु कुमाराणां मनस्विनाम् ॥१३५४
कृतास्त्राणां परीक्षेत तज्ज्ञैः सह महीपतिः ।
गजाश्वारोहणं तेषां प्रावीण्यं पृथिवीश्वरः ॥
कुमाराणां निरीक्षेत लक्ष्यलक्षणकोविदः ।
तेषामुत्कर्षमान्विच्छेत् स्वस्मादप्यवनीपतिः ॥
गुणाधिकतराः पुत्राः प्राप्यन्ते सुकृताधिकैः ।
विनीताश्श्रुतसम्पन्नाश्शास्त्रेषु च कृतश्रमाः ॥
गजाश्वारोहणे दक्षा लक्ष्यन्ते सुकृतैश्शुभाः ।
धर्मज्ञानदयोपेताः पितृशुश्रूषणे रताः ॥ १३५८॥
रूपौदार्यगुणोपेता दृश्यन्ते सुकृतैस्सुताः ।
एवं गुणाधिकान् पुत्रान् दृष्ट्वा रोमाञ्चकञ्चुकः ॥

आलिङ्ग्य मूर्ध्नि चाघ्राय त्वाशीर्भिरभिनन्दयेत् ।
पुत्राणां दर्शनं चन्द्रदर्शनादपि सौख्यदम् ॥
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ।
इति ब्रुवन् महीपालो वाग्भिरालप्य पुत्रकान् ॥
गजाश्वरत्नभूषाभिस्तोषयित्वा सुखी भवेत् ।
उपाध्यायेषु सर्वेषु ग्रामपट्टणकं धनम् ॥१३६२॥
वस्त्राणि काञ्चनं भूरि मानपूर्वं प्रकल्पयेत् ।
सम्प्राप्तयौवनान् पुत्रान् कृतगोदानसत्क्रियान्[1] ॥
समावर्तनसपन्नान् कामभोगसुखोचितान् ।
रूपलावण्यवर्णाढ्यान् लक्षणैस्समलङ्कृतान् ॥
महाकुलसमुत्पन्नान् समजातिनिरूपितान् ।
विवाहविधिना राजा रत्नभूषणभूषितान् ॥ १३६५
कुमारान् प्रापयेत्कन्या धर्मार्थं सुखमन्दिरम् ।
अतोऽहं नरनारीणां शुभाशुभफलोदयम् ॥१३६६
विचार्य पूर्वशास्त्राणि कथयामि यथातथम् ।
मांसवर्णैर्नखैर्भूपः पद्मताम्रोपमैर्धनी ॥ १३६७ ॥
रक्तवर्णैर्नखैर्मर्त्यो भवेत्सौभाग्यभाजनम् ।
श्वेतैर्नखैर्विरूपैश्च दुःखजीवी भवेन्नरः ॥ १३६८ ॥

---

[1] मङ्गलान्

शूलाभैस्स्फुटितैः कृष्णैर्नखैर्दारिद्र्यभाग्भवेत् ।
दुराचारास्तु कुनखाः ब्रह्महा हरितैर्नखैः ॥
बन्धुक्षयकराः पापा पाश्चात्यनखलोहिताः ।
अङ्गुल्यस्संहताश्श्लक्ष्णाः क्रमाद्दैर्घ्यसमन्विताः ॥
ऋजवः प्रोन्नताग्राश्च भवन्ति सुखिनस्सदा ।
पादाङ्गुष्ठमतिक्रम्य प्रदेशिन्यातिवर्तते ॥ १३७१ ॥
यस्य पुंसस्स लभते नारीभोगमनुत्तमम् ।
कनिष्ठायां तु दीर्घायां बहुवित्तो भवेन्नरः ॥१३७२
अङ्गुल्यः कुटिलाश्शुष्का विरला दुःखगामिनः ।
अस्वेदिनौ मृदू रक्तौ पुष्टौ चारुनखान्वितौ ॥
लग्नाङ्गुली सुपार्ष्णी च सिराविरहितौ तथा ।
मांसलौ गूढगुल्फौ च कूर्मपृष्ठसमावपि ॥ १३७४
भवेतां चरणौ यस्य स भवेत् पृथिवीपतिः ।
विकृतौ शूर्पसङ्काशौ सस्वेदौ ह्रस्वपाण्डरौ ॥
रोमशौ चरणौ यस्य स भवेद्दुःखजीवितः ।
दीर्घाः पादतले रेखाः यस्य दृश्या हलाङ्कुशाः ॥
स धराधिपतिर्ज्ञेयः पुरुषो नात्र संशयः ।
क्रमाद्ध्रस्वे प्रशस्येते जङ्घे स्निग्धे नरोमके ॥
सिंहव्याघ्रसमे जङ्घे धनी स परिकीर्त्यते ।

काकजङ्घो भवेद्राजा मृगजङ्घोऽपि तादृशः ॥
जङ्घोऽपि मीनवद्यस्य सोऽपि साम्राज्यभाजनम् ।
स्थूलजङ्घा दीर्घनखा जायन्ते पथिकास्सदा ॥
सृगालकोरुजङ्घा ये ते नरा दुःखभागिनः ।
मांसले जानुनी वृत्ते समे शब्दविवर्जिते ॥
निगूहितास्थिनी किञ्चिदुन्नते धरणीभुजाम् ।
ऊरू करिकराकारौ मग्नचूचुकिनो नृपाः ॥ १३८१
. . . . . . . . . प्रेष्यास्स्युर्लम्बचूचुकाः ।
अचूचुकास्सुतैर्हीनाः दुःखिनस्समचूचुकाः ॥
उच्चकक्षः क्षमापालो भोगाढ्यस्समकक्षकः ।
निर्धनो निम्नकक्षः स्याद्दुःखी विषमकक्षकः ॥
अमग्नमांसलं पृष्ठं मग्नवंशं शुभावहम् ।
निन्दितं विपरीतं स्याद्दुःखदारिद्र्यकारणम् ॥
उन्नतैर्जत्रुभिर्ज्ञेया भोगवन्तस्सदा नराः ।
तैरेव विषमैर्निम्नैर्भवन्ति धनवर्जिताः ॥ १३८५ ॥
सुश्लिष्टौ विपुलावंसौ निर्वलीकौ सुखावहौ ।
रोमशौ बलसंयुक्तौ निर्मांसौ दुःखभागिनाम् ॥
बाहू करिकराकारौ राज्ञामाजानुलम्बिनौ ।
भाग्यभोगविहीनानां बाहू ह्रस्वौ च रोमशौ ॥

मणिबन्धैर्महीपाला गूढसुश्लिष्टसन्धिभिः ।
हीनरक्ते करछेदश्श्वथैर्दुखं सशब्दकैः? ॥ १३८८ ॥
कान्त्या करिकराकारैः करैर्लाक्षारुणैर्नृपाः ।
पीवरैरर्धनिम्नैश्च पाणिभिर्द्रविणान्विताः ॥१३८९॥
उन्नतैः करमध्यैस्तु धनाढ्यास्त्यागशीलिनः ।
शुष्कहस्ततला मर्त्याः पितृवित्तविवर्जिताः ॥
विषमैः पाणिभिर्निस्स्वाः व्याधास्स्युर्व्याघ्रपाणयः।
अगम्यागमनापीतैः? करै रूक्षैस्तु निर्धनाः॥१३९१
हस्तस्याङ्गुलयो दीर्घा भवन्ति चिरजीविनाम् ।
विदुषां निर्वलीकास्स्युश्चिपिटाः कर्मकारिणाम् ॥
स्थूलास्स्युरर्थहीनानां शास्त्रान्तानां? बहिर्नताः ।
न्यूनाभिरधिकाभिर्वा पापिनोऽङ्गुलिभिर्मताः ॥
विरलाङ्गुलिका निस्स्वाः समृद्धस्संहताङ्गुलिः ।
दीर्घमायुरवाप्नोति दीर्घैरङ्गुलिपर्वभिः ॥ १३९४ ॥
यल्लक्ष्म कथितं पूर्वं नखानां पदवर्तिनाम् ।
तदेव करसंस्थानां विज्ञातव्यं शुभाशुभम्॥१३९५
शूरस्स्यान्माहिषग्रीवः कम्बुग्रीवः क्षमापतिः ।
शस्त्रान्तरकरग्रीवः . . . . . . . . . . ॥ १३९६ ॥
सिरालनिबिडा शुष्का ग्रीवा दारिद्र्यकारिणी ।

वक्रा विषमसंस्थाना सुदीर्घा कन्धराऽधमा ॥
अभिन्नाग्रं मृदु स्निग्धं घनं श्मश्रु प्रशस्यते ।
आरक्तं विषमं कूर्चं स्थूलरोम न शोभनम् ॥
समन्ततः . . . . संवृत्तं . . . प्रसादवत् ।
पूर्णचन्द्रसमाकारं मनुजानां मुखं शुभम् ॥
स्त्रीमुखा निरपत्यास्स्युः शठानां वर्तुलं मुखम् ।
निस्वास्स्युर्दीर्घवदनाः भीतास्याः पापकारिणः ॥
चतुरश्राननाः धूर्ता निम्नास्याः पुत्रवर्जिताः ।
कृपणा ह्रस्ववक्त्रास्स्युर्दुःखिनो निष्प्रभाननाः ॥
स्निग्धश्लक्ष्णसमाताम्रैरोष्ठैर्द्रविणभागिनः ।
विवर्णैः स्फुटितै रूक्षैः नरा धनविवर्जिताः ॥
तीक्ष्णा दंष्ट्रास्समास्स्निग्धाः सर्जुतेजोघनाघनाः? ।
कुन्दपुष्पसवर्णास्स्युर्नराणां भोगगामिनाम् ॥
त्रिंशता दशनैर्युक्ता नरा दुखैकभागिनः ।
ऋक्षवानरदन्तास्स्युर्बुभुक्षापीडिता नराः ॥ १४०४
करालैर्विकृतैर्ह्रस्वैर्दशनैर्दुःखिनो नराः ।
द्वात्रिंशद्दशना राज्ञामेकात्रिंशच्च भोगिनाम् ॥
रक्ता दीर्घा समा श्लक्ष्णा जिह्वा भोगसुखावहा ।
. . माजिह्वो भवेत्पापी स्थूलजिह्वश्च पापवान् ॥

कृष्णा च कर्बुराऽधस्ताद्रसना दुःखिनो भवेत् ।
श्लक्ष्णं स्वच्छं समं तालु रक्तवर्णं शुभावहम् ॥
परुषं कृष्णवर्णं च तालु दुःखकरं मतम् ।
राजानः प्रोन्नतैर्गण्डैः श्लक्ष्णैः कान्तिसमान्वितैः ॥
समैश्च मन्त्रिणः प्रोक्ता निम्नैर्दारिद्र्यभागिनः ।
लम्बमांसलकर्णास्स्युः सुखिनो मानवास्सदा ॥
शङ्ककर्णाश्च भूपाला लोमकर्णा गतायुषः ।
विस्तीर्णकर्णा धनिनः सिराकर्णास्तु निष्ठुराः ॥
कृपणा ह्रस्वकर्णास्स्युः पापार्ताः शुष्ककर्णकाः ।
पशुनासः सुखी प्रोक्तः सिसयु? श्शुष्कनासिकः॥
अगम्यगामी पुरुषो नासया च्छिन्नकल्पया ।
सुभगो दीर्घया प्रोक्तश्चोरः कुञ्चितया तया ॥
अवटीटो वयोमृत्युः धनी वक्राग्रनासिकः ।
क्रूराणां दक्षिणे वक्रा नासिका कथिता बुधैः ॥
समाल्पविवरा मृद्वी ऋज्वी भाग्यवतां भवेत् ।
धनिनः पद्मपत्राक्षाः रक्तान्ताक्षाः श्रियः पदम् ॥
महाढ्या मधुपिङ्गाक्षाः सैन्येशा द्विरदेक्षणाः ।
गभीरनेत्रा धनिनः स्थूलाक्षाः मन्त्रिणो मताः ॥
सुभगाः श्यावनयनाः बुधा नीलोत्पलेक्षणाः ।

एणाक्षास्सारमेयाक्षा जिंह्माक्षास्तस्करा मताः ॥
केकराकारनेत्राः स्युः पापा मार्जारलोचनाः ।
निस्स्वा निर्गतनेत्रास्स्युर्दीनाक्षा वित्तवर्जिताः ॥
कृष्णनेत्रा भवन्त्यन्धाः स्रवन्नेत्राश्च दुःखिताः ।
भ्रुवाऽल्पया तथाऽल्पायुः विशालान्ततया सुखी ॥
भ्रुवा विषमया नीचः बालेन्दुनिभया धनी ।
उन्नतैर्विपुलैश्शङ्खैः भवन्ति धनिनो नराः ॥
निम्नैरर्थेन संत्यक्ताः स्तनैश्च विवर्जिताः ? ।
ललाटैर्विषमैर्निस्स्वा धनिनोऽर्धेन्दुसन्निभैः ॥
आवार्यैश्शुक्तिसङ्काशैः सिराजालैस्तपस्विनः ।
सिराभिराढ्यस्तुङ्गाभिः स्वस्तिकाकृतिभिश्च तैः ॥
बन्धुबन्धुयुजो निम्नैस्सिरालैरुन्नतैर्नृपः ।
अभ्युन्नतैर्महीपालास्संवृत्तैः कृपणा मताः ॥
आयुष्मन्तो वलियुतैस्त्रिकोणैः कुटिलाशयाः ।
ललाटे वलयस्तिस्रो नराणां शतजीविनाम् ॥
चतस्रो भूभुजां . . . . पश्चादमितजीविनाम् ।
केशान्तोपगता रेखा पञ्चैकाशीतिजीविनाम् ॥
चत्वारिंशच्च वक्राभिः . . . . . . . . ।
त्रिंशद्भ्रूयुगलं नाभि?र्वक्राभिर्वामता भवेत् ॥१४२५

विंशतिः क्षुद्ररूपाभिरल्पाभिश्चायुषोऽल्पता ।
गवाख्यवर्तुलैश्शीर्षैश्छत्राकारैर्महीभुजाम् ॥
चिपिटैः पितृमातृघ्नाः पाथिकाः कुम्भसन्निभैः ।
त्रिभागैः पापभूयिष्ठाः वित्तैश्च परिवर्जिताः ॥
निम्नैर्महत्त्वमत्यन्तानीतैर्द्रविणताल्पता ।
केशैरेकैकशो जातैस्स्निग्धैः कृष्णैश्च कुञ्चितैः ॥
अभिन्नाग्रैश्च मृदुभिश्चतुर्भिस्तैर्महीपतिः ।
एकमूलैश्च बहुभिर्विषमैरतिपिङ्गलैः ॥ १४२९ ॥
स्थूलैर्विशीर्णपर्यन्तैर्ह्रस्वै रूक्षैर्दरिद्रता ।
एकैकेन भवेद्रोम्णा राजा द्वाभ्यां तु पण्डितः ॥
त्रिभिर्निस्वश्चतुर्भिश्च सर्वदा दुःखभाजनम् ।
यत्किञ्चिदङ्गान्निर्मांसं रूक्षं बहुसिरान्वितम् ॥
अशुभं तत्परिज्ञेयं सामुद्रमतवेदिभिः ।
द्विस्त्रिः कृते वेधनदो सानुनादं चिरायुषम् ॥
एक एव समृद्धानां शुद्धान्ताद्रक्ष्यमिष्यते ।
सशब्दमूत्रास्सुखिनः निस्स्वो निश्शब्दमूत्रिकः ॥
दक्षिणावर्तधाराभिर्द्वित्राभिः पृथिवीपतिः ।
भुज्यते भुवि साम्राज्यं रेतसा पद्मगन्धिना ॥
धनेन भूयसा युक्तः हविर्मधुसुगन्धिना ।

मांसगन्धवता चोरः यावको ? मद्यगन्धिना ॥
तेनैव चिरपादेन ? स्वल्पायुर्मनुजो भवेत् ।
मुक्तारक्तोत्पलनिभं पीतं वा किंशुकप्रभम् ॥
सिरादिवेधे यस्याङ्गं दृश्यते स भवेन्नृपः ।
यत्कृष्णमांसलं रक्तं दुर्गन्धं हरितच्छवि ॥
पिच्छिलं तु भवेद्येषां ते नरा दुःखभागिनः ।
सिंहेभवृषकासानां गमनं शुकभासयोः ॥१४३८॥
गमनेनानुकुरुते यो नरस्स महीपतिः ।
मेषोष्ट्रमहिषोलूकवराहवलिभुक्छवाभिः ॥१४३९॥
समाना स्याद्गतिर्यस्य स पुमान् भाग्यवर्जितः ।
अङ्गुष्ठमध्यसन्धिस्थयवेन स्याद्धनी नरः ॥१४४०॥
अङ्गुष्ठमूलगेनापि बहुपुत्रो निरूप्यते ।
स्निग्धाभिः कररेखाभिः निम्नाभिर्धनवान् भवेत् ॥
अस्निग्धाभिरनिम्नाभिर्भवेद्दारिद्र्यभञ्जनम् ।
मणिबन्धे स्थिता रेखास्तिस्रः करतलं गताः ॥
राज्यकारणमित्याहुः सामुद्रमतवेदिनः ।
मीनयुग्मकरस्सत्री मीनयुग्मकरस्सुधीः ॥१४४३
धनवान् जायते पापो रेखया च कुरूपया ।
शङ्खातपत्राशिबिकागजपद्माश्वसन्निभाः ॥ १४४४

रेखाः करगता यस्य चक्रवर्ती स निश्चितम् ।
कलमाङ्कुरसङ्काशा मृणालाङ्कुरसान्निभा ॥
रेखाः करतले यस्य निधिपालस्स जायते ।
गवाढ्यो दामरूपाभिस्स्वास्तिकाकृतिभिर्धनी ॥
चक्रखड्गधनुःप्रासतोमराकृतिभिर्नृपः ।
उल्कारेखाभया यज्वा वेदिसन्निभया तथा ॥
वातकीकोष्टमकरसमया चार्थवान् भवेत् ।
देवमन्दिरवाप्याभरेखाश्शंसन्ति धार्मिकम् ॥
अङ्गुष्ठमूलरेखाभिस्स्थूलाभिः पुत्रवान् भवेत् ।
तत्रत्यसूक्ष्मरेखाभिः कन्यां जनयति ध्रुवम् ॥
प्रदेशिनीतलं प्राप्ता रेखा स्याच्छतजीविनः ।
न्यूनाभिच्छिन्नरूपाभिः द्रुमपाताद्भवेन्मृतिः ॥
अरेखा बहुरेखाश्च मानवा धनवर्जिताः ।
सिंहव्याघ्रवृषस्येव स्वरो यस्य निरूप्यते ॥
आयुर्लक्ष्म्या भवेद्युक्तः स नरो नात्र संशयः ।
नखदन्ता रोमरेखास्स्निग्धाश्चेत्पृथिवीपतिः ॥
एतेषां हरति छाया वारुणी साऽपि शोभना ।
हेमकान्तिनिभच्छाया पावकीया जयावहा॥१४५२
रूक्षावनालिनच्छाया ? वायवीया च स मता ।

शुभ्रा स्फटिकसङ्काशा व्योमच्छाया सुखप्रदा ॥
छायालक्षणमेवं तु कथितं तु शुभाशुभम् ।
समन्ताद्भूमिसंलग्नं यस्याश्चरणयोस्तलम् ॥
अष्टौ पुत्रान् प्रसूते सा पत्युस्सन्तानवर्धिनी ।
अङ्गुष्ठं समतिक्रम्य दीर्घा यस्याः प्रदेशिनी ॥
संरक्षिताऽपि यत्नेन सा भवेद्व्यभिचारिणी ।
दीर्घा स्यान्मध्यमा यस्यास्सर्वा वा चरणाङ्गुलिः ॥
दुश्शीला दुर्भगा नित्यं कन्या सा निन्दिता बुधैः ।
प्रोन्नताऽनामिका यस्याः दीर्घा वा यदि दृश्यते ॥
पुंश्चली सा समुद्दिष्टा कन्या सामुद्रवेदिभिः ।
कनिष्ठिका भुवः पृष्ठं यस्यास्स्पृशति न स्फुटम् ॥
दुर्भगा सा परिज्ञेया भर्त्रा च परिवर्जिता ।
कम्पनौ चरणौ यस्याः खर्वौ वा भवतो यदि ॥
धनधान्यविहीना सा पत्युर्दारिद्र्यनाशिनी? ।
काकजङ्घा च या नारी या च रोमशजङ्घिका ॥
अचिरेण परिज्ञेयं वैधव्यमुभयोस्तयोः ।
उद्बीजजङ्घिके जङ्घे पादौ च विरलाङ्गुली॥ १४६२
अंसौ च पृथुलौ यस्याः सा दासी समुदाहृता ।
ऊरू कृशौ रोमशौ वा यस्याः स्यातां भुजावपि ॥

भर्तारं त्वरितं हन्ति विवाहे सा विवर्जिता ।
अश्वत्थदलसङ्काशं गुह्यं गूढमणि स्थितम्॥ १४६४
यस्यास्सा सुभगा धन्या कन्या पुण्यैरवाप्यते ।
भर्तारं लम्बिते गुह्ये लम्बे भागे तु देवरम् ॥
उदरे श्वश्रुलम्बे वा वक्षोजे सन्ततिं द्रुतम्? ।
नितम्बबिम्बमुत्तुङ्गं विस्तीर्णं शस्यते स्त्रियाः ॥
मध्यं वलित्रयोपेतं कृत्स्नं शुभमरोमशम् ।
कट्यावर्तैस्त्वरी नारी नाभ्यावर्ता मृतात्मजा ॥
पृष्ठावर्ता पतिघ्नी स्यात्तस्मादेतां विवर्जयेत् ।
स्तनौ वृत्तौ समौ शस्तावुरो रोमविवर्जितम् ॥
ग्रीवा रेखात्रयोपेता बिम्बाकारधरोऽधरः ।
ग्रीवया स्थूलया चण्डी दरिद्रा ह्रस्वया तया ॥
कुलस्य नाशिनी नारी दीर्घया जायते पुनः ।
दृश्यते हाससमये यस्या गण्डौ सकूपकौ ॥
हसन्ती या भवेद्भूमौ सा भवेत्कुलटा ध्रुवम् ।
नयने केकरे यस्या दृश्येते साऽतिचञ्चला ॥
कुलटा सा परिख्याता नारी लक्षणवेदिभिः ।
सरोमककुदौ यस्या उत्तरोष्ठे नता च या ॥
शिशुभिः सहिता कन्या विषमश्रवणा च या ।

सा विरुद्धा भवेद्भर्तुः उत्तरोष्ठे तथोन्नता ॥१४७३॥
विषमा दशना यस्या विरलास्स्थौल्यभागिनः ।
सा . . . . . . . . . . . . भ्रूयुगा समनासिका ॥
ऋज्वङ्गुली तु रमणी पत्युस्सम्पत्करी सदा ।
पार्श्वे गळे ललाटे वा वामतो लाञ्छनान्विता ॥
तस्मिंस्तिलाङ्किता . . . . . घनाकुला ।
तनयं जनयत्येकं स पित्रा परिवर्जितः[1] ॥ १४७६
प्रसन्नवदना राज्ञी लम्बकेशी तपस्विनी ।
दुःखिता बहुकेशा स्यात्सामुद्रमतवेदिभिः ॥
भवन्ती . . सा नारी राज्ञी पृथ्वीभुजो भवेत् ।
तोरणं स्वस्तिकं चक्रं करे बाहौ गलेऽपि वा ॥
यस्या विभाव्यते स्त्रीणामाधिपत्यं लभेत सा ।
वायव्ये नैर्ऋते चैन्द्रे पौषे मासेऽर्कदैवते ॥
चित्रे भाग्ये तथैश्ये चाहिर्बुध्न्ये च चत्मके ? ।
लग्ने तुलायां कन्यायां . . . . . . ॥ १४८० ॥
. . . . . . षु यत्नेन कर्तव्यास्ते त्रयोऽशकाः ।
तेषामलाभे कन्यानां तुलादिषु विचक्षणः ॥
लग्नाच्छुभा ग्रहाश्शस्ताः सप्ताष्टव्ययवर्जिताः ।

[1] सोऽपि पृथ्वीश्वरो भवेत्.

शुक्रं ष . . . . . तृतीये शुभदश्शशी ॥ १४८२
पापास्त्रिषष्ठलाभस्थास्त्यक्त्वा मङ्गलमष्टमम् ।
शुक्लपक्षे तिथौ शस्ते शोभनग्रहवासरे ॥ १४८३
कुर्याद्विवाहं भूपालः पुत्रस्यामिततेजसः[1] ।
शोभने सुविशाले च मध्ये वेदिविराजिते ॥
चित्रपट्टवितानेन स्तम्भैः पट्टावगुण्ठितैः ।
तोरणालङ्कृतद्वारे गोमयालिप्तभूमिके ॥ १४८५ ॥
पुष्पप्रकरशोभाढ्ये मण्टपे सुमनोहरे ।
कृत्वा नान्दीमुखं श्राद्धं सम्पूज्य कुलदेवताः ॥
पुण्याहवाचनं कृत्वा सुमुहूर्ते गुणान्विते[2] ।
मधुपर्केण सम्मान्य सितवस्त्रैर्विभूषितम् ॥१४८७
मुद्रिकालङ्कृतं पुत्रं वेदिमारोपयेच्छनैः ।
तण्डुलैः कारयेत्पुञ्जौ पूर्वापरसमन्वितौ ॥ १४८८
पट्टं दुकूलं तन्मध्ये कल्पयेद्व्यवधायकम् ।
पुत्रं प्राचीमुखं कृत्वा तण्डुलोपरिवर्तिनम् ॥
पश्चिमाशामुखीं कन्यां पुञ्जस्योपरिवर्तिनीम् ।
उभाभ्यां करयोर्दत्वा तण्डुलान् जीरकान्वितान् ॥
जाते लग्ने तु मध्यस्थं पट्टमुत्सारयेत्ततः ।

[1] मित्रकार्शिनः.   [2] मुहूर्ते गणकोदिते.

हस्तस्थान् तण्डुलान् कन्याकुमारौ क्षिपतो मिथः॥
परस्परमुखाम्भोजविनिवेशितलोचनौ ।
कन्याया दक्षिणं पाणिं कुमारकरमध्यगम् ॥
कृत्वा कन्यापिता कन्यां धारापूर्वं समर्पयेत् ।
कुमारं च तथा कन्यां वेष्टयेत्पञ्चतन्तुभिः ॥
प्रादक्षिण्यात्पञ्चवारान् कृतसूत्रं समाचरेत् ।
निष्कासितं प्रयत्नात्तदुभाभ्यां पदयोरधः ॥१४१४
कुङ्कुमेन समालिप्य कङ्कणं तद्विधीयते ।
अनेनैव प्रकारेण कन्यायाः कङ्कणं न्यसेत् ॥
ततो होमं प्रकुर्वीत यथोक्तविधिवद्द्विजः ।
कनिष्ठामङ्गुलिं धृत्वा पत्युः पत्नी व्रजेदनु ॥१४१६
प्रदक्षिणक्रमेणैव कृते होमे यथाविधि ।
वारत्रयं भ्रमित्वा तु सप्ततण्डुलपुञ्जकान् ॥
आक्रामेत्पदविन्यासैः ततः पट्टासने विशेत् ।
वामपार्श्वे विधातव्या पत्युः पत्नी शुभानना ॥
ततो वस्त्राणि रत्नानि काञ्चनं भूषणानि च ।
गजाश्वमहिषीगाश्च दासीदासान् भुवं[1] बहु ॥
दद्यात्पुत्राय तत्पत्न्यै विवाहोत्सवमङ्गले ।

1 धनं.

विप्रांश्च तोषयेत्तत्र वस्त्रकाञ्चनभूषणैः ॥ १५०० ॥
यथार्हं तोषयेदन्यान् वस्त्रैः स्वर्णैश्च भूषणैः ।
वादित्राणां महानादैः शोभनैः शङ्खनिस्वनैः ॥
गीतैर्मङ्गलवाद्यैश्च वेदमन्त्रैः शुभार्थकैः ।
वन्दिभिः पठ्यमानैश्च जयमालाशुभाक्षरैः ॥
पूरयेद्व्योम सर्वत्र दिशश्च विदिशस्तथा ।
तोषयेदन्नपानैश्च ताम्बूलैरितरान् जनान् ॥ १५०३
हर्षयेदासवैर्मद्यैः कान्तावृन्दं मनोहरम् ।
गोकुलं घासदानैश्च परितोषं नयेन्नृपः ॥ १५०४ ॥
एवं निरन्तरं कार्यं विवाहेऽहश्चतुष्टयम् ।
चतुर्थे वासरे रात्रौ कुर्युश्शृङ्गारमूर्जितम् ॥ १५०५
वरवध्वोर्यथाशोभं लोकलोचनहारकम् ।
आनाय्य करिणीवृन्दं हेमघण्टानिनादितम् ॥
कर्णचामरशोभाढ्यं सिन्दूरारुणमस्तकम् ।
पुष्पकैः शोभितं दान्तं महामात्राभियोजितम् ॥
आरोहार्थं कुमारस्य तत्सेवकजनस्य च ।
उद्दीप्य हस्तदीपांश्च शतशोऽथ सहस्रशः ॥
तारालोकमिवातन्वन् मेदिन्यां मेदिनीपतिः ।
कुमारं कृतशृङ्गारं तद्वधूं कृतमण्डनाम् ॥ १५०९ ॥

आरोप्य करिणीं यत्नान्मुक्तापुष्पकधारिणीम् ।
आरोपयेद्दशां वेश्याः कान्तावृन्दमनिन्दितः ॥
इन्दुवक्त्रं सलावण्यमिन्दीवरदलेक्षणम् ।
ततः पञ्चमहाशब्दैर्वाद्यमानैर्व्रजेद्वरः ॥ १५११ ॥
पुरवीथ्यां पुरन्ध्रीभिः पूजितः पुरवासिनाम् ।
वरयात्रां विनिर्वर्त्य समागम्य स्वमालयम् ।
अवतीर्य वशापृष्ठात् प्रणमेज्जनकं निजम् ।
अलङ्कृत्य निजा कन्या पित्रा यत्र निवेद्यते ॥
विवाहो ब्राह्मनामाऽयं मया पूर्वं निवेदितः ।
परस्परानुरागेण गान्धर्वस्समयान्मिथः ॥ १५१४
सोऽपि शस्तो नरेन्द्राणां दाता यत्र न विद्यते ।
बहूनां क्षत्रपुत्राणां रूपशौर्यगुणाधिकम् ॥ १५१५
वृणुते यत्स्वयं कन्या स स्वयंवर इष्यते ।
विजित्य समरे शूरान् कन्यां यत्र हरेन्नृपः ॥
विवाहो राक्षसः प्रोक्तोऽनिन्दितो हि महीभुजाम् ।
पितृभ्यां द्रविणं दत्वा कन्यां यत्र समुद्वहेत् ॥
आसुरोऽयं विवाहस्स्यात् क्षत्रियाणामनिन्दितः ।
पैशाचादिविवाहा ये धर्मशास्त्रेषु निन्दिताः ॥
वर्जनीया महीपालैर्विवाहोत्सवकर्मणि ।

एवं विवाहिताः पुत्रा रमन्ते रमणीयुताः ॥
लभन्ते च प्रजाश्श्रेष्ठाः रूपशीलगुणान्विताः।
तेषां पुत्रांश्च कन्याश्च स्वाङ्कमारोप्य लालयन् ॥
निर्भरानन्दसन्दोहः पुत्रभोगमवाप्नुयात् ।
एवं शिशून् लालयित्वा शिक्षयित्वा विवाह्य च ॥
तत्प्रजा लालयेद्यस्तु पुत्रभोगः प्रकीर्तितः ।
कथितः पुत्रभोगोऽयं श्रीमत्सोममहीभुजा ॥

अन्नभोगः.

अन्नभोगोऽयमधुना हृद्यो रुच्यो निगद्यते ।
बान्धवान् मण्डलाधीशान् सामन्तान् मान्यकान् भटान् ॥ १५२३ ॥
आश्रितान् सुहृदो भृत्यान् नृत्तवाद्यविशारदान् ।
आहूय स्वोचिते स्थाने निवेश्याग्रे तु भोजयेत् ॥
पुत्रैः पौत्रैः प्रपौत्रैश्च सह भुञ्जीत पार्थिवः ।
भोज्यं भक्ष्यं तथा पेयं लेह्यं चोष्यं तथैव च ॥
इति पञ्चविधं हृद्यं पथ्यं भुञ्जीत भूपतिः ।
रक्तशालिर्महाशालिर्गन्धशालिः कलिङ्गकः ॥
मुण्डशालिः स्थूलशालिः सूक्ष्मशालिः सषाष्टिकः।
रक्तत्वग्रक्तशालिस्स्यान्महाशालिर्महाकृतिः ॥
सुगन्धिर्गन्धशालिस्स्यात्कालिङ्गोत्थः कलिङ्गकः ।

शूकशून्यो मुण्डशालिस्स्थूलशालिस्तदाकृतिः ॥
सौक्ष्म्यात्तु सूक्ष्मशालिस्स्यात् द्विमासः षाष्टिकस्स्मृतः
एतान् शालीन् पृथक् सर्वान् मुसलैर्वितुषीकृतान् ॥
निक्षिप्य तण्डुलान् पट्टे विसृजेत्कणकांस्ततः ।
पाषाणमृत्तिकाऽशालेस्तृणपर्णौ तुषं तथा॥ १५३०
यत्नाद्विकृष्यापनयेद्दासीभिस्तण्डुलस्थितान् ।
अखण्डान् शोधितानेव क्षाळितान् बहुशो जलैः॥
तण्डुलान् कुन्दसङ्काशान् तोयान्तर्धारितांश्चिरम् ।
स्थाल्यां ताम्रकृतायां वा मृज्जातायामथापि वा ॥
तण्डुलत्रिगुणं तोयं निक्षिप्य च पिधाय च ।
वाससा शशिशुभ्रेण धौतेन च घनेन च ॥
चुल्ल्यां निधाय निर्धूमे वह्नौ तत्क्वाथयेज्जलम् ।
सुतप्ते बुद्बुदोपेते स्वबाष्पसमन्विते ॥ १५३४ ॥
तण्डुलानावपेत् स्थाल्यां दर्व्या च परिघट्टयेत् ।
सिक्थं विमृज्य वीक्षेत वारं वारं विचक्षणः ॥
मृदुभूते च तत्सिक्थे किञ्चिद्वा कणगर्भिते ।
तक्रं[1] दुग्धं घृतं वाऽपि विक्षिप्योत्थापयेत्ततः ॥
स्थाल्यास्येऽपि पटं[2] दत्वा मण्डमास्रावयेद्गुणः ।

---

[1] तत्र

[2] पिटकं·

ईषदुद्धरितं मण्डमूष्मणा परिशोषयेत् ॥ १५३७॥
एवं भक्तं सुपक्वं यत् राजयोग्यं तदुत्तमम् ।
राजमुद्गास्तथा पीता निष्पावाश्चणका अपि ॥
कृष्णाढक्यस्तथा माषा मसूरा राजमाषकाः ।
सूपकर्मणि सप्तैते नियोज्याः सूपकारकैः ॥
दलितादलिताश्चैते पचनीया यथारुचि ।
चणका राजमाषाश्च मसूरा राजमुद्गकाः ॥१५४०
घरट्टे दलिताः कार्याः पाकार्थं हि विचक्षणैः ।
किञ्चिद्भृष्टास्तथाढक्यो यन्त्रावर्तैर्द्विधा कृताः ॥
मुसलैर्घट्टिताः सम्यक् शूर्पकैर्वितुषीकृताः ।
स्थाल्यां शीतोदकं क्षिप्त्वा द्विदळैस्सममानतः ॥
आवपेद्द्विदळान् पश्चात् चुल्ल्यामारोपयेत्ततः ।
मृद्वग्निपच्यमानेऽन्तः हिङ्गुतोयं विनिक्षिपेत् ॥
वर्णार्थं रजनीचूर्णं किञ्चित्तत्र नियोजयेत् ।
मुहुर्मुहुः क्षिपेत्तोयं यावत्पाकस्य पूर्णता ॥
सुश्लक्ष्ण सैन्धवं कृत्वा विंशत्यंशेन निक्षिपेत् ।
वर्णतः स्वादुतो गन्धात् मार्दवाल्लाघवादपि ॥
एवं विदलपाकस्य सम्यक् सिद्धिरुदाहृता ।
निष्पावा मेचकाढक्यो हिङ्गुना परिवर्जिताः ॥

अभिन्नाः पूर्ववत्पाच्या हरिद्राचूर्णितं विना ।
मसूरमाषपाकेषु हिङ्गुतोयं विनिक्षिपेत् ॥१५४७॥
इतरः पूर्ववत्कार्यः पाकः पाकविचक्षणैः ।
प्रक्षाळितान् चणान् मुद्गान् समे तोये विनिक्षिपेत् ॥
स्थाल्यां[1] मृद्वग्निना पाकः कर्तव्यः सूपकारकैः ।
पच्यमानेषु मुद्गेषु हिङ्गुना सैन्धवं क्षिपेत् ॥१५४९
आर्द्रकस्य च खण्डानि सूक्ष्माणि च विनिक्षिपेत्।
वार्ताकं पाटितं तैलभृष्टं तत्र विनिक्षिपेत् ॥
तैलभृष्टा मृदूभूता क्षिपेद्वा बिसचक्रिकाः ।
बीजानि वा प्रियालस्य क्षिप्त्वा दर्व्या विवर्तयेत् ॥
पुनः पुनः क्षिपेत्तोयं पाकार्थं स्वल्पमल्पकम् ।
केचिदिच्छन्ति रुच्यर्थं मेषमांसस्य खण्डकान् ॥
प्रकारान् विविधान् भिन्नान् मेदश्शकलानि वा।
मुद्गसूपे समुत्पन्ने चूर्णितं मरिचं क्षिपेत् ॥१५५३
काश्मर्यां[2] नागरं चूर्णं क्षिप्त्वा दर्व्या विघट्टयेत् ।
श्यामाककङ्गुनीवारगन्धशालिसुतण्डुलैः ॥ १५५४
सरवेष्टितसेवाकै[3]र्दिवसैर्लघु[4]विस्तृतैः ।
चिरप्रसूतमाहिषीपयसा पायसं पचेत् ॥ १५५५ ॥

---

[1] चुल्या. [2] उत्तार्य. [3] सेकाकैः. [4] लेह्य.

पायसं लेहने योग्यं स्वादुगन्धि मनोहरम् ।
गोधूमाः क्षालिताश्शुभ्राः शोषिता रविरश्मिभिः॥
घरट्टैश्चूर्णिताश्श्लक्ष्णाः चालिन्या वितुषीकृताः ।
गोधूमचूर्णकं श्लक्ष्णं किञ्चिद्धृतविमिश्रितम् ॥
लवणेन च सम्मिश्रं क्षीरनीरेण पिण्डितम् ।
सुमहत्यां काष्ठपात्र्यां करास्फालैर्विमर्दयेत् ॥
मर्दितं चिक्कणीभूतं गोलकन् परिकल्पयेत् ।
स्नेहाभ्यक्तैः करतलैः शालिचूर्णैर्विमिश्रितान् ॥
विरूषितान् संप्रसारैः करसञ्चारवर्तनैः ।
विस्तृताः मण्डकाश्श्लक्ष्णाः सितपट्टसमप्रभाः ॥
प्रयत्नात् निक्षिपेत् तज्ज्ञः तप्तखर्परमस्तके ।
पक्कांश्चोपनयेच्छीघ्रं यावत्कार्ष्ण्यं न जायते ॥
चतस्रश्च चतस्रश्च घटिता मण्डका वराः ।
गोलान् प्रसारितान् पाणावङ्गारेषु विनिक्षिपेत् ॥
अङ्गारपोलिकाश्शस्ताः किञ्चित्कृष्णत्वमागताः ।
गोलकान् पिष्टकालिप्तान् पेषिण्या तान् प्रसारयेत्॥
सुतप्ततापनिक्षिप्तानीषत्पक्कान्विवर्तयेत् ।
खर्परेऽपि पचेदेवं पोलिकानामयं क्रमः ॥ १५६४
तैलपूर्णकटाहे तु सुतप्ते सोहलाः पचेत् ।

उत्तानपाकसंसिद्धाः कथिताः[1] सोहलाः स्मृताः[2] ॥
तैलमग्नाः पीतवर्णाः मृद्व्यो वाहलिकास्स्मृताः ।
तनुप्रसारितान् गोळान् ताप्यां स्नेहेन सेवितान् ॥
उपर्युपरि विक्षिप्ताः पत्रका विपचेत्सुधीः ।
गोधूमचूर्णानुद्धृत्य शूर्पेणाभ्याहृतान् कणान् ॥
दुग्धाक्तान् घृतपक्कांश्च सितया च विमिश्रितान् ।
एलामरिचचूर्णेन युक्ताक्तान् रसरञ्जितान् ॥
गोलकेन समावेष्ट्य तैलेनोदुम्बरान् पचेत् ।
उक्त्वाथ्य विदलान् पिष्टान् चणकप्रकृतीन् शुभान् ॥
हिङ्गुसैन्धवसंयुक्तान् शर्करापरिमिश्रितान् ।
एलामरिचचूर्णेन युक्तान् गोलकवेष्टितान् ॥
किञ्चित्प्रसारितास्तैले पूरिका विपचेच्छुभाः ।
एवं ताप्यां पचेदन्याः पूरिकाश्च विचक्षणः ॥
हरिमन्थस्य विदलं हिङ्गुजीरकमिश्रितम् ।
लवणेन च संयुक्तमार्द्रकेण समन्वितम् ॥
वेष्टयित्वा गोलकेन वेष्टिताः खर्परे पचेत् ।
विदलं चणकस्यैवं पूर्वसम्भारसंस्कृतम् ॥ १५७३
द्रोण्यां तैलविलिप्तायां दोसकान् विपचेद्बुधः ।

[1] कठिनाः.　　[2] सिताः.

माषस्य राजमाषस्य वोहणस्य च दोसकान् ॥
अनेनैव प्रकारेण विपचेत्पाकतत्त्ववित् ।
पक्षाणकस्य विदळं चणकस्य च चूर्णितम् ॥
चूर्णितं वारिणा सार्धं सर्पिषा परिभावितम् ।
सैन्धवेन च संयुक्तं कण्डुना परिघट्टितम् ॥
निष्पावचूर्णसंयुक्तं पेषिण्यां च प्रसारितम् ।
कटाहे तैलसम्पूर्णे कटकर्णान् प्रपाचयेत् ॥
यावद्बुद्बुदसङ्काशा भवन्ति कनकप्रभाः ।
माषस्य विदळान् क्लिन्नान् निस्तुषान् हस्तलोडनैः ॥
ततस्सम्पेष्य पेषिण्या सम्भारेण विमिश्रितान् ।
स्थाल्यां विमर्द्य बहुशः स्थापयेत्तदहस्ततः ॥
अम्लीभूतं माषपिष्टं पिटिकासु विनिक्षिपेत् ।
वस्त्रगर्भाभिरन्याभिः पिधाय परिपाचयेत् ॥
अवतार्यात्र मरिचं चूर्णितं विकिरेदनु ।
घृताक्ता हिङ्गुसर्पिर्भ्यां जीरकेण च धूपयेत् ॥
सुशीतधवळाः श्लक्ष्णा एता इड्डरिका वराः ।
तस्यैव माषपिष्टस्य गोळकान् विस्तृतान् घनान् ॥
पञ्चभिस्सप्तभिर्वाऽपि छिद्रैश्च परिशोभितान् ।
तप्ततैले पचेद्यावल्लौहित्यं तेषु जायते ॥ १५८३

घारिकासंज्ञया ख्याता भक्ष्येषु सुमनोहराः ।
निश्छिद्रा घारिकाः पक्वा मथिते शर्करायुते ॥
एलामरिचसंयुक्ते निक्षिप्ता वटिकाभिधाः ।
त एव वटकाः क्षिप्ताः काञ्जिके काञ्जिकाभिधाः ॥
यत्र यत्र द्रवद्रव्यास्तन्नाम्ना वटकास्तु ते ।
आरनाळेन सान्द्रेण दध्ना सुमथितेन च ॥१५८६
सैन्धवार्द्रकधान्याकान् जीरकं च विमिश्रयेत् ।
मरिचानि द्विधा कृत्वा निक्षिपेत्तत्र पाकवित् ॥
दर्व्या विघट्टयन् सर्वं पचेद्यावद्धनीभवेत् ।
उत्तार्य वटकान् क्षिप्त्वा विकिरेन्मारिचं रजः ॥
हिङ्गुना धूपयेत्सम्यक् वटकास्तेमनाभिधाः ।
दुग्धमुत्क्वाथ्य तन्मध्ये तक्रमम्लं विनिक्षिपेत् ॥
हित्वा तोयं घनीभूतं वस्त्रबद्धं पृथक्कृतम् ।
शालितण्डुलपिष्टेन मिश्रितं परिवेष्टितम् ॥
नानाकारैस्सुघटितं सर्पिषा परिपाचितम् ।
पक्वं शर्करया सिक्तमेलाचूर्णेन वासितम् ॥
क्षीरप्रकारनामेदं भक्ष्यं मृष्टं मनोहरम् ।
शर्करां वारिसंयुक्तां ताम्रपात्रे विपाचयेत् ॥१५९२
अर्धपाके क्षिपेद्दुग्धं तक्रं वाऽपि यथारुचि ।

तेन मुञ्चेन्मलं सा तु शर्करा कथिता सती ॥
निर्मलेन च वस्त्रेण गालयेत्तां मुहुर्मुहुः ।
मृदौ पाके हुता पेया मध्यमे दुग्धसन्निभा ॥
खरे तु कठिना भक्ष्या साधिके शर्करा भवेत् ।
खरपाकसुसिद्धायां सितायां वज्रसम्पुटैः ॥१५९५
नानारूपाणि कुर्वीत खण्डपाकविशारदः ।
शोधितायां सितायां तु क्षीरं सम्मिश्रयेत्समम् ॥
खरपाकावधिर्यावत् तावत्तत्क्राथयेत्पुनः ।
उत्तार्य नागरं तीक्ष्णमेलाकर्पूरकेसरैः ॥ १५९७॥
निक्षिप्य गोलकाः कुर्यान्नाम्ना वर्षेलकास्तु ते ।
वराहपललं स्निग्धं मृष्टं सारङ्गजं पलम् ॥
हारिणस्यामिषं पथ्यं रूक्षं मांसं शशोद्भवम् ।
आजिकं तरसं रुच्यं लघु कण्ठ्यमजोद्भवम् ॥
मत्स्यमांसं भवेद्वृष्यं शाकुलं लघु कीर्तितम् ।
रुरुप्रवरसम्भूतं पुष्टं चेद्रुच्यमीरितम् ॥ १६०० ॥
मांसान्यन्यानि बल्यानि रसनाप्रीतिदानि च ।
कृशस्य व्याधियुक्तस्य जराजर्जरितस्य च ॥
शावकस्य च शुष्कस्य विषसन्दूषितस्य च ।
वारिणाऽपहृतस्यापि श्रमशोषमृतस्य च ॥

क्लिन्नस्य पूतिगन्धेश्च मांसानि परिवर्जयेत् ।
पृष्ठवंशस्य पार्श्वस्थं वहिरन्तश्च संस्थितम् ॥
जघनस्य घनं पिण्डं पुच्छमूलसमुद्भवम् ।
क्रोडदेशोद्भवं चैव कक्षभागस्थ पूरकम् ॥१६०४॥
पार्श्वयोस्संस्थितं चैव कुक्षिसन्धिविलेपकम् ।
अंशपूर्वांशसम्भूतं मुकुलं हृदयोद्भवम् ॥१६०५॥
कालखण्डं तथा वृक्णौ गुदान्त्रं च तथाऽऽम्रकम् ।
अक्षिणी रसना कर्णावूधोवृषणकर्णकम् ॥१६०६॥
पशुकायसमालग्नं वपामास्तिष्कमर्जकम् ।
पादशृङ्गखुरास्त्वक्क श्रेष्ठमेतत्पलं मतम् ॥१६०७॥
एतेषु मांसवर्गेषु केषांचित्किञ्चिदुत्तमम् ।
वराहं सितवस्त्रेण प्रक्षाळयात्युष्णवारिणा ॥
गोधुकेन सदण्डेन तावत्सिञ्चेन्मुहुर्मुहुः ।
यावत्तद्गतरोमाणि प्रोन्मूल्यन्ते सुखं करैः ॥
पश्चात्कर्तिकया रोमाण्युत्सृष्टान्यपसारयेत् ।
अथवा कर्दमालिप्तं निर्दहेत्तृणवह्निना ॥ १६१० ॥
सुखोत्पाद्यानि रोमाणि पूर्ववच्चापसारयेत् ।
आ जानुसन्धिमूलाङ्घ्रिं तृणैः प्रच्छाद्य तं दहेत् ॥
कठिनत्वमुपायातं क्षालयेन्निर्मलैर्जलैः ।

पाण्डुरं बिससङ्काशं समं संस्थापितं कटे ॥१६१२
आ मूर्ध्नः पुच्छपर्यन्तं कर्तिकापरिपाटितम् ।
सारीफलकरेखावत्पार्श्वयोरपि खण्डयेत् ॥१६१३
आच्छिद्य फलकाकारान् वितस्तिपरिसम्मितम् ।
अस्थिस्पर्शनपर्यन्तमादहेत्क्वाथयेत्तु तान्॥१६१४
पश्चाभ्यङ्गुलविस्तारवितस्त्यायामडुण्डुकान् ।
चतुरश्रीकृतान् खण्डान् शूलप्रोतान् प्रतापयेत् ॥
अङ्गारेषु प्रभूतेषु घृतबिन्दुस्रवावधि ।
पश्चान्मारिचचूर्णेन विकिरेत्सैन्धवेन च ॥१६१६॥
अथ चाम्लपरिस्विन्नान् पूर्ववत्परिकल्पयेत् ।
अथवा दारितान् कृत्वा त्वक्शेषान् लवणान्वितान्॥
भृजेदङ्गारपुञ्जेषु शुण्ठकानमृतोपमान् ।
स्विन्नानां शुण्ठकानां च मेदोभागं प्रगृह्य च ॥
तालपत्रसमाकाराः कृत्वा च कलिकाश्शुभाः ।
मथिते शर्करायुक्ते दधन्येलाविमिश्रिते ॥ १६१९
कर्पूरवासिते तत्र रुच्याश्च कलिकाः क्षिपेत् ।
मांसमेदोमयान् शुण्ठान् पूर्ववच्छकलीकृतान् ॥
मथिते राजिकायुक्ते मातुलुङ्गककेसरे ।
धूपिते हिङ्गुना सम्यक् दध्ना च कलिताः क्षिपेत् ॥

कृते वा चक्कलीर्दृष्ट्वा ? किरेदेतास्सुशर्कराः ।
सूक्ष्मैरार्द्रकखण्डैश्च . . . कलिका वराः ॥१६२२
दध्ना विमिश्रयेच्चिञ्चां किंवा दाडिमनारकम् ।
अथवाऽऽमलकं पिष्टं मेलयेदाम्लवेतसम् ॥१६२३
रसं वा मातुलुङ्गस्य रसं दन्तशठस्य वा ।
मिश्रयेद्वा रसानेतान् द्वित्रान्वापि यथारुचि ॥
गन्धार्थं धान्यकं हिङ्गु जीरकं तत्र निक्षिपेत् ।
हरिद्रां चैव वर्णार्थं पाकार्थं[1] च तथाऽऽर्द्रकम् ॥
रुच्यर्थं विश्वमरिचं सैन्धवं च विनिक्षिपेत् ।
गालयेत्सितवस्त्रेण किञ्चित्तैलं च मिश्रयेत् ॥
मृदः स्थाल्यां विनिक्षिप्य दर्वीघट्टनपूर्वकम् ।
प्रालेहकं मृदावग्नौ पचेत्पाकविशारदः ॥ १६२७
प्राक्षिप्य शुण्ठकास्तत्र मृदु कुर्याच्च पाकतः ।
भावितांशुकैरसैर्वैस्स्निग्धानुत्तारयेद्बुधः ॥ १६२८
धूपयेद्धिङ्गुना वाऽपि नवधूपेन वा पुनः ।
धूपेन जीरकस्यापि शशिधूपेन कोविदः ॥१६२९
चणकस्य समान् खडान् कल्पयित्वा विचक्षणः ।
निशाजीरकतीक्ष्णाद्यैः शुण्ठीधान्यकहिङ्गुभिः ॥

---

[1] सुसूक्ष्मं.

चूर्णितैर्मेलयित्वा तान् तप्ततैले विनिक्षिपेत् ।
समानार्द्रकखण्डांश्च चणकान् हरितानपि ॥
श्लक्ष्णमांसैः क्षिपेत्कोलनिष्पावान् केवलानपि ।
पलाण्डुशकलान् वापि लशुनान् वाऽपि निक्षिपेत्॥
अम्लं पूर्वोदितं सूदः प्रयुञ्जीत यथारुचि ।
शोषितेऽम्ले रसे पश्चात् सिद्धमुत्तार्य धूपयेत् ॥
बदराकारकान् खण्डान् पूर्ववच्चूर्णमिश्रितान् ।
आर्द्रकान् तत्प्रमाणांश्च पक्वतैले विपाचयेत् ॥
वार्ताकिशकलांश्चैव मूलकस्य च खण्डकान् ।
पलाण्ड्वार्द्रकसम्भूतान् मुद्गाङ्कुरविनिर्मितान् ॥
वटकान्निक्षिपेत्तत्र मेषकस्य? च चूर्णकम् ।
कासमर्दैन संयुक्तं पलान्यन्यानि कानिचित् ॥
सुसिद्धं वासयेत् धूपैर्नानारसविमिश्रितम् ।
नानाद्रव्यसमेता च कच्चवन्दी भवेच्छुभा ॥१६३७
स्थूलामलकसङ्काशान् शुद्धमांसस्य खण्डकान् ।
क्वाथयेद्द्राक्षिकातोयैर्नागरार्द्रकसंयुतैः ॥ १६३८ ॥
स्रावयेत्तज्जलं पट्टे रक्तैराम्लैर्विपाचयेत् ।
तत्समान् शुण्ठकान् क्षिप्त्वा सैन्धवं तत्र योजयेत्॥
एलायाश्चूर्णकं तत्र धान्यकस्य च पूलिकाम् ।

निक्षिप्योत्तारयेत्सूदो घृतं चान्यत्र तापयेत् ॥
सुतप्ते च घृते पश्चात् लशुनं हिङ्गुना सह ।
प्रक्षिप्य संस्कृतं मांसं तस्यां स्थाल्यां प्रवेशयेत् ॥
पिहितं च ततः कुर्यात् किञ्चित्कालं प्रतीक्ष्य च ।
उत्तारयेत्ततास्सिद्धं पूलिकाख्यमिदं वरम् ॥१६४२
पृष्ठवंशसमुद्भूतं शुद्धमांसं प्रगृह्य तत् ।
करपूरप्रमाणानि कृत्वा खण्डानि मूलकैः॥१६४३
विध्वा तु बहुशस्तानि बहुरन्ध्राणि कारयेत् ।
हिङ्ग्वार्द्रकरसै रम्यैस्सैन्धवेन च भावयेत् ॥ १६४४
शूलप्रोतानि कृत्वा तान्यङ्गारेषु प्रतापयेत् ।
घृतेन सिञ्चेत्पाकज्ञो वारंवारं विवर्तयेत् ॥ १६४५
सिद्धेषु मारिचं चूर्णं विकिरेत्सैन्धवानिह ।
नाम्ना कटित्रकं रुच्यं लघु पथ्यं मनोहरम् ॥
अनेनैव प्रकारेण जर्झरीकृत्य खण्डकान् ।
स्थाल्यामम्लेन संयोज्य पाचयेद्धिङ्गुना सह ॥
आर्द्रकस्य रसेनापि धान्यकस्य रसेन च ।
जीरकस्य च चूर्णेन मेथिकेन च मिश्रयेत् ॥
शोषयित्वाऽऽर्द्रकं सर्वं घृतेन परिभर्जयेत् ।
क्षिपेच्च मरिचं भृष्टे सूदो दण्डिपुटत्रके ॥१६४६॥

मेषस्य कन्धरां छित्वा स्थाल्यां रक्तं विधारितम् ।
मर्दयेत्करशाखाभिः निक्षिप्य लवणं मनाक् ॥
मृद्यमाने तु रुधिरे सिराजालं विनिस्सृतम् ।
अपनीय तथा शुद्धं कीलालं पिहितं न्यसेत् ॥
क्रोडदेशात्समारभ्य कर्तिकाग्रेण पाटिताम् ।
त्वचं विभज्य गात्रेभ्यो हरेद्बाह्यान्तरस्थिताम् ॥
पूर्वोद्दिष्टप्रदेशेषु स्थितं मांसमथाहरेत् ।
स्नायुग्रन्थिविनिर्मुक्तं खण्डशः परिकल्पयेत् ॥
पूगीफलप्रमाणानि कृत्वा खण्डानि पूर्ववत् ।
संस्कुर्यात्पूर्ववच्चूर्णैरम्लैश्च परिपाचयेत् ॥१६५४॥
स्तोकावशेषपाकेऽस्मिन् न्यस्तं रक्तं विनिक्षिपेत् ।
पूर्णे पाके समुत्तार्य धूपयेद्धिङ्गुजीरकैः ॥ १६५५॥
कर्पूरचूर्णकं तस्मिन् एलाचूर्णेन संयुतम् ।
विकिरेन्मारिचैर्युक्तं कृष्णपाकमिदं भवेत् ॥
अङ्गारभृष्टकं मांस शुद्धे पट्टे निधाय तत् ।
कर्तर्या तिलशः कृत्वा मतुलुङ्गस्य केसरैः ॥
आर्द्रकैः केसराभैश्च गृञ्जनैस्तत्प्रमाणकैः ।
जीरकैर्मरिचैः पिष्टैः हिङ्गुसैन्धवचूर्णकैः ॥ १६५८
मिश्रयित्वा कृतं मांसं हिङ्गुधूपेन वासयेत् ।

आमं मांसं च पेषिण्यां हिङ्गुतोयेन सेचितम् ॥
लवणेन च चूर्णेन सहितं पेषयेद्बुधः ।
पिष्टवच्चिक्कणं कृत्वा गोलकानि प्रकल्पयेत् ॥
चूर्णीकृतं तु यन्मांसं गोलकैस्तद्धि वेष्टयेत् ।
चूर्णगर्भांश्च वटकान् प्रक्षिपेद्दाणके शुभे ॥१६६१
ख्यातास्ते मांसवटका रुच्या दृश्या मनोहराः ।
त एव वटकास्तैले पक्वास्स्युर्भूषिकाभिधाः ॥
तदेव चूर्णितं मांसं कणिकापरिवेष्टितम् ।
अङ्गारेषु तथा भृष्टं कोशालीति निगद्यते ॥
वार्ताकवृन्तदेशस्य समीपकृतरन्ध्रकम् ।
निष्कासितेषु बीजेषु तेन मांसेन पूरितम्॥१६६४
तैलेन पाचितं किञ्चिद्दाणके परिपाचयेत् ।
पूरभण्टाकसंज्ञं तत्स्वादुतां परिकल्पयेत् ॥ १६६५
कोशातकीफलेऽप्येवं मूलकस्य च कन्दके ।
पूरिते चूर्णमांसेन तत्तन्नाम्ना तु कथ्यते ॥ १६६६
आमं मांसं सुपिष्टं तु केसरादिविमिश्रितम् ।
वटकीकृत्य तैलेन तप्तेन परिपाचयेत् ॥ १६६७
आणके च क्षिपेत्तज्ज्ञः तापयेद्वा विभावसौ ।
नाम्ना वद्रिमकं तत्तु त्रिःप्रकारमुदीरितम् ॥

आन्त्राणि खण्डशः कृत्वा कालखण्डं तथा कृतम् ।
वारिप्रक्षाळितं कृत्वा खण्डितं समरूपतः ॥
मेदसश्शकलांस्तद्वन्मांसखण्डांस्तथैव च ।
राजिकाकल्कदिग्धांस्तांस्तोयमिश्रान् विपाचयेत् ॥
आर्द्रकस्य रसं स्तोकमाम्लमल्पं विमिश्रयेत् ।
प्रमाणाल्लवणं क्षिप्त्वा हिङ्गुतोयं च मेलयेत् ॥
किञ्चिच्छेषं द्रवं तत्तु समुत्तार्य विधूपयेत् ।
पञ्चवर्णीति विख्याता नाम्ना रूपरसावहा ॥ १६७२
आन्त्राणि जलधौतानि शूलयष्ट्या विवेष्टयेत् ।
तापयेच्च तथाङ्गारैर्यावत्कठिनतां व्रजेत् ॥ १६७३
पश्चाद्धि चूर्णितं श्लक्ष्णं सैन्धवं तेषु योजयेत् ।
आन्त्रशुण्ठकमाख्यातं चर्वणे मर्मरारवम् ॥
पूर्ववच्छोषिते रक्ते बीजपूरस्य केसरम् ।
रसमार्द्रकसम्भूतं रसं दन्तशठस्य च ॥ १६७५ ॥
जीरकं हिङ्गुमारिचं धान्यकं सैन्धवं क्षिपेत् ।
मेदसः श्लक्ष्णखण्डानि क्षिप्त्वा सर्वं विलोडयेत् ॥
आन्त्रं प्रक्षाळितं यत्नात्तेन रक्तेन पूरितम् ।
पिटकाकृतियुक्तासु कम्रासु परिवेष्टयेत् ॥ १६७७
कम्रामुखानि बध्नीयात्केवलैरान्त्रकैस्ततः ।

तैरेव रज्जुसङ्काशैर्गृहीत्वा परितापयेत् ॥ १६७८ ॥
अङ्गारैः किंशुकाकारैर्यावत्काठिन्यमाप्नुयुः ।
मण्डलीयं समाख्याता राजवृक्षफलोपमा ॥
पार्श्वाङ्गपट्टवद्वेष्टा वर्तिगन्धोज्ज्वला वपा ।
अङ्गुलद्वयमानेन खण्डांस्तस्याः प्रकल्पयेत् ॥
खण्डानि कालखण्डस्य तत्प्रमाणानि चान्तरा ।
शूलप्रोतानि कृत्वा तान्यङ्गारेषु प्रतापयेत् ॥
सैन्धवं विकिरेत्तत्र सुश्लक्ष्णं मरिचान्वितम् ।
वर्णाशुण्ठकनामेदं वर्णितं सोमभूभुजा ॥ १६८२
अङ्गारेषु तथा भृष्टकालखण्डं विकृत्य च ।
पूगीफलप्रमाणेन खण्डं कृत्वा विचक्षणः ॥
तैलेनाभ्यज्य तान् सर्वान् मरिचाराजसैन्धवैः ।
चूर्णितैर्विकिरेत्पश्चाद्धिङ्गुधूपेन धूपितैः ॥ १६८४ ॥
अनेन विधिना भृष्टान् राजिकाकल्कलेपितान् ।
कालखण्डान् प्रकुर्वीत दध्ना राजिकयाऽथवा ॥
भृष्टस्य कालखण्डस्य कृत्वा च कलिकाश्शुभाः ।
केसरैर्मातुलुङ्गस्य सैन्धवाद्यैश्च मिश्रयेत् ॥ १६८६
समेदस्कौ द्विधा भक्तौ कृत्वा लवणमिश्रितौ ।
अम्लकैर्भावयित्वा तु तैलेन परिपाचयेत्॥१६८७

क्रोडदेशोद्भवं मांसं मधुना सह घट्टितम् ।
अंसकीकससंयुक्तं पार्श्वगुल्फसमन्वितम् ॥१६८८
मृद्भाण्डे स्वल्पवक्त्रे तं निक्षिप्य बहुलोदके ।
हिङ्गुना चार्द्रकेणापि सैन्धवेन च संयुतम्॥ १६८९
क्वाथयेत्सुचिरं कालं यावत्तन्मार्दवं भजेत् ।
उत्क्वाथितमिदं ख्यातं सूपशास्त्रविशारदैः॥१६९०
विसत्त्वस्य च मेषस्य जठरं पाटयेदनु ।
आन्तरं सर्वमुत्सार्य बध्नीयादपराङ्घ्रिकौ ॥ १६९१
शिरश्च रज्ज्वा दृढया ज्वालया परितापयेत् ।
यावद्रोमाणि गच्छन्ति यावत्कृष्णत्वमेति च ॥
ततः प्रक्षाल्य तोयेन शेषं क्रोडवदाचरेत् ।
अन्येषां श्वापदानां च शेषं मेषवदाचरेत् ॥
समेदस्कानि मांसानि कृत्वा दीर्णानि कर्तनैः ।
हिङ्गुतोयेन संसिच्य लवणेन विलोडयेत् ॥ १६९४
छायायां तानि खण्डानि वायुना परिशोषयेत् ।
एकद्वित्रिदिनान्तेषु भृष्टान्यङ्गारपुञ्जके ॥ १६९५ ॥
स्थूलीकृतानि यावच्च रुच्यानि च सदा नृणाम् ।
उपखण्डकनामानि सर्वशाकोत्तमानि च ॥१६९६
हरिणस्य तथा खण्डान् शकलीपरिकल्पितान् ।

सम्भारसहितान् प्राज्यलवणेन विमिश्रितान् ॥
शोषितानपि चात्यर्थमग्निना परिभर्जितान् ।
हृद्यान् पथ्यसुगन्धींश्च कल्पयेदुपखण्डकान् ॥
रुरुशम्बरसारङ्गच्छागस्य नलकं पृथु ।
अग्नौ भृष्ट्वा शिलाघातैः स्फोटयित्वा प्रयत्नतः ॥
तन्मज्जां च ततो हृत्वा लवणाम्लेन हिङ्गुना ।
मरिचाराजिचूर्णेन पचेत्स्थाल्यां विचक्षणः ॥
यस्यकस्यापि मेषादेः शिरो भृष्टं विभिद्य च ।
आददीत च मस्तिष्कं काञ्जिकेन विपाचयेत् ॥
आणके तैलमध्ये वा यथापूर्वं पुनः पचेत् ।
चूर्णैस्संयोज्य तत्पश्चाद्धिङ्गुधूपेन धूपयेत्॥१७०२॥
पक्षिणामपि सर्वेषां पिञ्छानुत्सार्य सर्वतः ।
चञ्चुपादं पृथक्कृत्वा पाटयित्वा तथोदरम् ॥१७०३॥
निष्कृष्यान्त्रादिकं सर्वं पूर्ववत्परिपाचयेत् ।
यथा सूकरमेषाणां क्रिया प्रोक्ता सुपाचने ॥
सशल्कानां तु मत्स्यानां शल्कस्फोटं प्रयत्नतः ।
स्थूलाश्चेत् खण्डशः कार्या लघवश्चेत्स्वरूपतः ॥
मत्स्यानां छेदयेच्छीर्षं पुच्छं तेषां च पक्षकान् ।
विपाट्य जठरं तस्मादान्त्रकाण्यपसारयेत् ॥

कण्ठहारोहबडिशादग्धाः कम्बलवालुकौ ।
पाठीनश्च तथैतेषां पृथक्कृत्वा शिरः पचेत् ॥
मत्स्यानां घर्षणं कार्यं तैलेन लवणेन च ।
यावच्च पिङ्गतां याति मत्स्यगन्धश्च नश्यति ॥
क्षालयेदुदकैः पश्चाद्धरिद्राकल्कमिश्रितैः ।
वस्त्रैर्बध्वा निपीड्यैतान् स्रावयेत्सङ्गतं जलम् ॥
क्षिपेत्सर्वत्र सिद्धेषु प्रपक्वेष्वाणकेषु तान् ।
स्वल्पे काले गते सूदस्स्थालीमुत्तार्य धूपयेत् ॥
मत्स्यखण्डानि संक्षिप्य किञ्चिदाम्लेन लेपयेत् ।
ततो गोधूमचूर्णं तु विकिरेत्तेषु सर्वतः ॥१७११॥
तप्ततैले क्षिपेत्तानि पिङ्गानुत्तारयेत्ततः ।
एलामरिचचूर्णेन सैन्धवेन च भावयेत् ॥ १७१२
आणके वा तथा तैले वह्नौ धूमविवर्जिते ।
पूर्वोक्तविधिना मत्स्यान् यथारुचि विपाचयेत् ॥
मत्स्यांश्च खण्डशः कृत्वा चतुरङ्गुलसम्मितान् ।
लवणेन समायुक्तान् कुम्भेषु परिपूरयेत् ॥
खीरखण्डा इति ख्याताश्चिरकालं वसन्ति ते ।
भोजनावसरे सूदो वह्निना परिभर्जयेत् ॥१७१५॥
मत्स्याण्डकोशावादाय वह्निना परिभर्जयेत् ।

दृढीभूते ततः पश्चात् खण्डशः परिकल्पयेत् ॥
विभज्य तप्ततैले तानेलामरिचकादिभिः ।
विकीर्य सैन्धवेनापि हिङ्गुना परिधूपयेत् ॥
कच्छपान् वह्निना भृष्टान् पादान् शल्कांश्च मोचयेत्।
शिरश्चैव पृथक्कृत्वा पक्वरम्भाफलोपमम् ॥ १७१८
अम्लकैश्च विपच्याथ तैलेनाज्येन वा पुनः ।
पाचयेच्च सुसिद्धांस्तान् चूर्णकैरेव चूर्णयेत् ॥
आणके वा पचेत्तज्ज्ञो निर्धूमे वा हुताशने ।
नन्द्यावर्ता इति ख्याता मृदुरुच्या मनोहराः ॥
कर्कटांस्तु लघून् स्थूलान् हस्तपादैर्वियोजयेत् ।
रूक्षे ताम्रमये पात्रे सुतप्ते तान् विभर्जयेत् ॥
स्फोटिते खर्परे तांस्तु मृदौ भाण्डे विनिक्षिपेत् ।
विपचेल्लवणाम्लैश्च पुनस्सर्पिषि पाचयेत् ॥
जीरकं लवणं तीक्ष्णं चूर्णितं तेषु निक्षिपेत् ।
वृष्या बलकरा हृद्या भृष्टास्ते घृतकर्कटाः ॥
मूषिका क्षेत्रसम्भूता नदीतीरेषु संस्थिताः ।
स्थूलाश्श्यामास्तथा पुष्टा जात्या ते मधि(यि)गा-
स्स्मृताः ॥ १७२४ ॥
प्रतप्ते सलिले तांस्तु निक्षिपेत्पुच्छधारणात् ।

उद्धृत्य तस्मात्सलिलाद्रोमाण्युत्पाटयेत्ततः ॥
विभज्य जठरं तेषां स्फोटयेदान्त्रकाणि तु ।
संभारसंभृतैरम्लैः पचेच्च लवणान्वितैः ॥ १७२६
शूलप्रोतांस्ततः कृत्वा तानङ्गारैः प्रतापयेत् ।
यावद्बहिस्त्वचस्तेषां शोषमायान्ति तापनात् ॥
सन्तप्तेषु तथा तेषु मूषिकेषु किरेदनु ।
लवणं मरिचं शौण्ठीं जीरकं च विचूर्णितम् ॥
फलशाकं पत्रशाकं कण्टशाकं च मूलकम् ।
पुष्पशाकं शिम्बिशाकं पक्वापक्वविभागतः ॥
कल्पयेद्विविधैः पक्वैः मांसवत्पाककोविदः ।
वटकान् पर्पटान् हृद्यानङ्गारैः परिभर्जयेत् ॥
आर्द्राणि भर्जयेत्पश्चाद्बीजपूराग्निमन्थकैः ।
भल्लातागस्त्यकार्पासा द्राक्षाभृङ्गकसल्लकी॥१७३१
पुनर्नवामरी तीक्ष्णा सारसी सुरसाद्वयम् ।
मरुकं सारपर्णी च तिन्दुकं मुद्गिका तथा॥१७३२
ब्राह्मी चालवती चैव कोकिलाक्षीरसुम्भकम् ।
अञ्जनं पद्मकोशं च शेटकं च तथापरम् ॥१७३३
सङ्गृह्य पल्लवानेषामम्लिकाम्लेन मिश्रयेत् ।
जम्बीराम्लेन दध्ना वा लवणेन च संयुतान् ॥

श्रीफलं केतकं चिश्चा मेषशृङ्गी सुगन्धिजम् ।
कुटजं मरिचं पथ्या विषमुष्टिकशिम्बिकम् ॥
एलारामठनीवारमेचकाः पर्पटं तथा ।
अगस्त्यं वदनं राजमातुलुङ्गकपाटली ॥ १७३६ ॥
कटं नटं कर्कटं च करीरैरण्डकं तथा ।
वेत्रकारीफलं चैव लवणाम्भसि निक्षिपेत् ॥
चूतमाम्लातकं धात्री कुहिरी कर्कटी तथा ।
कूश्माण्डं त्रपुसं द्राक्षा कर्कटी बृहतीद्वयम् ॥
कोशातकीबीजपूरनिष्पावकरमर्दनम् ।
जम्बीरं चिश्चिवार्ताकं कमरं लवणाम्भसि ॥
अथवा राजिकाचूर्णे सतैले लवणान्विते ।
प्रक्षाळ्य वृन्तसहितं फलं चूनादिकं न्यसेत् ॥
कारवेल्लं सपनसं कदळीफलमेव च ।
सतैलराजिकाचूर्णे निक्षिपेल्लवणान्विते ॥ १७४१
वंशाङ्कुरं लघुं चक्रं शतावर्यास्तथैव च ।
पातालभेण्डुकानां च प्ररोहान् क्षालितान् मृदून् ॥
सलिले लवणोपेते तैले वाऽपि सराजिके ।
लवणेन समायुक्ते प्रक्षिपेदङ्कुरानिमान् ॥ १७४३
मागणीमार्द्रकं पेयं कचोरं वनमागणीम् ।

कर्पूरमागर्णी मूलं तथैवाम्लहरिद्रकाम् ॥ १७४४
सूरणं मधु शिग्रू च तथा शबलकन्दकम् ।
एतान् वै पूर्ववत्तैले सलिले वाऽपि निक्षिपेत् ॥
गव्यं वा माहिषं वाऽपि क्षीरं नीरविवर्जितम् ।
पचेत्स्थाल्यां मृदावग्नौ दर्वीघट्टनसंयुतम् ॥ १७४६
अर्धावशेषं कुर्वीत त्रिभागेनावशेषितम् ।
षड्भागशेषितं चापि कुर्यादष्टावशेषितम् ॥
अर्धावशिष्टं पाने स्यात्त्रिभागं लेह्यकं भवेत् ।
षड्भागं पिण्डतामेति शर्करा स्यादथाष्टमी ॥
अर्धावशेषिते दुग्धे तक्रमीषद्विनिक्षिपेत् ।
नवस्थाल्यां न्यसेत्तत्तु निवाते स्थापयेच्च ताम् ॥
शर्करामिश्रितं वाऽपि फलैर्वाऽपि विमिश्रयेत् ।
यामषट्कोषितं क्षीरमम्लतां घनतां व्रजेत्॥१७५०
दधीति नाम प्राप्नोति पथ्यं मृष्टं मनोहरम् ।
हीनकाले तथा पथ्यं चिरकालेऽम्लता बहु ॥
मन्थानेन मथित्वा तन्नवनीतमथोद्धरेत् ।
निर्जलं मथितं प्रोक्तमुदश्वित्तु र्धनीरकम् ॥१७५२॥
पादाम्बु तक्रमुद्दिष्टं योजितं हिङ्गुजीरकैः ।
आर्द्रकेण समायुक्तमेलासैन्धवचूर्णितम् ॥१७५३

मथितं शर्करायुक्तमेलाचूर्णविमिश्रितम् ।
कर्पूरधूपितं नाम्ना मज्जिकेत्यभिधीयते ॥ १७५४
निष्पीड्य दधि वस्त्रेण स्रावयेत्तद्गतं जलम् ।
शर्करैलासमायुक्तं सूदैश्शिखरिणी मता ॥१७५५
स्रावितं यद्गतं तोयं जीरकार्द्रकसैन्धवैः ।
संयुक्तं हिङ्गुधूपेन धूपितं मस्तु कीर्तितम् ॥१७५६
नवनीतं नवं धौतं नीरलेशाविवर्जितम् ।
तापयेदग्निना सम्यक् मृदुना घृतभाण्डके ॥१७५७
पाके सम्पूर्णतां याते क्षिपेद्द्रोधूमसञ्जकम् ।
क्षिपेत्ताम्बूलपत्रं च पश्चादुत्तारयेद्धृतम् ॥ १७५८
तण्डुलक्षालनं तोयं चिञ्चाम्लेन विमिश्रितम् ।
ईषत्तक्रेण संयुक्तं सितया सह योजितम् ॥
एलाचूर्णसमायुक्तमार्द्रकस्य रसेन च ।
धूपितं हिङ्गुना सम्यक् व्यञ्जनं परिकीर्तितम् ॥
सौवीरं निर्मलं साम्लं लवणेन च संयुतम् ।
हिङ्गुना जीरकेणापि धूपितं धूपकाञ्जिकम् ॥
शङ्कुद्वयं समास्थाप्य बध्नीयादुज्ज्वलाम्बरम् ।
प्रसार्य षष्टिभिः किञ्चित् क्षीरमम्लेन शोधितम् ॥
सितया च समायुक्तमेलाचूर्णविमिश्रितम् ।

क्षिपेत्प्रसारिते वस्त्रे स्रावयेत्पात्रके ततः ॥१७६३
पुनःपुनः क्षिपेत्तत्र यावन्निर्मलतां व्रजेत् ।
पक्वचिञ्चाफलं भृष्टं वर्णार्थं तत्र निक्षिपेत् ॥
यस्यकस्य फलस्यापि रसेन परिमिश्रितम् ।
तत्तन्नाम्ना समाख्यातं पानकं पेयमुत्तमम् ॥
सौवर्णे राजते पात्रे रीतियन्त्रविधारिते ।
भोजयेन्मण्डलेशादीन् यथायोग्यप्रदेशतः ॥
विशाले काञ्चने पात्रे स्वर्णकच्चोरसंवृते ।
लोहगङ्गालकैर्युक्ते रुक्मपिङ्गलकैर्युते ॥ १७६७ ॥
हेमशुक्तिसमोपेते कनकस्थालिसंयुते ।
जले प्रक्षालिते सम्यक् सितवस्त्रप्रमार्जिते ॥
वर्धयेत्पूर्वकथितमन्नपक्वाम्लपानकम् ।
ऊरुनाभिप्रदेशान्तं संछाद्य सितवाससा ॥
गर्दिकायां समासीनः पूर्वाशासम्मुखो नृपः ।
अन्नं मुद्गसमोपेतं भुञ्जीतोष्णं घृतप्लुतम् ॥
प्राचीमुखस्तु भुञ्जान आयुस्तु लभते बहु ।
इष्टं तु[1] लभतेऽत्यर्थमश्नन् दक्षिणदिङ्मुखः ॥
श्रियं तु लभते पुष्टां भुञ्जानः पश्चिमाननः ।

[1] यशश्च.

सत्यवाक्यफलं प्राप्नोत्यश्नन्नन्नमुदङ्मुखः[1] ॥
श्लक्ष्णं मांससमायुक्तं विदलैर्वापि मिश्रितम् ।
प्रलेपैर्विविधैर्हृद्यैः लेपितं वा तथोदनम् ॥१७७३
मांसप्रकारकैर्मृष्टैरम्लमिश्रैश्च पल्लवैः ।
नानाविधैस्तथा शाकैः फलपत्रसमुद्भवैः ॥१७७४
वटकैः पर्पटैर्हृद्यैः कारखण्डोपखण्डकैः ।
यथारुचि यथासात्म्यं सुखं भुञ्जीत भूपतिः ॥
पक्वान्नं पायसं मध्ये शर्कराघृतमिश्रितम् ।
ततः फलानि भुञ्जीत मधुराम्लरसानि च ॥
पिबेच्च पानकं हृद्यं लेह्यं शिखरिणीमपि ।
चूषेण मज्जिकां पश्चाद्दधि चाद्यात्तथोदनम्॥१७७७
ततस्तक्रान्नमश्नीयात्सैन्धवेन च संयुतम् ।
क्षीरं वाऽपि पिबेत्पश्चात् पिबेद्वा काञ्जिकं वरम् ॥
मांसमम्लेन भुञ्जीत दुग्धं शर्करया सह ।
लवणेन तथा चाम्लं क्षारं कटुकषायकैः॥१७७९
वसन्ते कटु चाश्नीयात् ग्रीष्मे मधुरशीतलम् ।
वर्षासु च तथा क्षारं मधुरं शरदि स्मृतम् ॥
हेमन्ते स्निग्धमुष्णं च शिशिरेऽप्युष्णमम्लकम् ।

---

[1] न्वनदादिङ्मुखः.

एवं भुञ्जीत यद्रूपो भोज्यभोगः स कथ्यते ॥
अन्नभोगस्समाख्यातः सोमेश्वरमहीभुजा ।

पानीयभोगः.

हृद्यः पानीयभोगो यमिदानीं परिकीर्त्यते॥ १७८२
मध्येमध्ये पिबेद्वारि स्तोकंस्तोकं सुशीतलम् ।
भोजनस्य च रुच्यर्थं पाकार्थमशितस्य च ॥
पिपासायां च जातायां स्वेच्छया पीयते जलम् ।
नियमो नात्र कालस्य तृषावेगो न धार्यते ॥
असवः प्राणिनामापो जीवितं यत्तदाश्रितम् ।
मूर्छिता अपि जीवन्ति शीततोयेन सेचिताः ॥
दिव्यान्तरिक्षं नादेयं नैष्यन्दं सारसं जलम् ।
भौमं चौटं च ताटाकमौद्भिदं नवमं स्मृतम् ॥
स्वात्यां पयोदनिर्मुक्तं सूर्यरश्मिविमिश्रितम् ।
सर्वदोषापहं स्वादु दिव्यमित्युच्यते जलम् ॥
प्रावृट्जलदनिर्मुक्तमव्यक्तं स्वादु लक्षणम् ।
वारि स्फटिकसङ्काशमान्तरिक्षमिति स्मृतम् ॥
नद्यां शैलप्रसूतायामिन्द्रनीलसमप्रभम् ।
प्रशस्तभूमिभागस्थं नीरं नादेयमुच्यते ॥ १७८९
वालुकासु करैर्गर्तं भित्वा यत्प्राप्यते जलम् ।

उत्क्षेपणेन नैर्मल्यं याति निष्यन्दजं हि तत् ॥
नद्याः शैलवराद्वापि स्रुतमेकत्र संस्थितम् ।
कुमुदाम्भोजसञ्छन्नं तोयं सारसमुच्यते ॥ १७११
वापीकूपसमुत्पन्नं नीलोत्पलदलप्रभम् ।
विमलं मधुरास्वादं भौममम्भोऽभिधीयते ॥
स्वयं दीर्घशिलाश्वभ्रेष्वतसीपुष्पसन्निभम् ।
निर्मलं मधुरं पथ्यं सलिलं चौटमिष्यते ॥ १७१३
पालिबन्धेन संवृद्धं कुल्यापूरागतं जलम् ।
प्रतिवर्षं नवाम्भोभिः मिश्रं ताटाकमुच्यते ॥
निर्मलं लघु पानीयमुत्तमं स्वादु शीतलम् ।
शैलसानुसमुद्भेदान्नवमं परिकीर्तितम् ॥ १७१५ ॥
दशमं केचिदिच्छन्ति वार्क्षं जीवनमुत्तमम् ।
नालिकेरसमुद्भूतं स्वादु वृष्यं मनोहरम् ॥ १७१६
हंसोदकं तथा चान्यत्क्रियासंस्कारसम्भवम् ।
दिवा सूर्यांशुसन्तप्तं रात्रौ चन्द्रांशुशीतलम् ॥
सकर्दमं सशैवालं पल्वलोत्थं सपल्लवम् ।
वर्जयेदूषरोद्भूतं गन्धवर्णैश्च दूषितम् ॥ १७१८ ॥
अशोकपल्लवप्रख्यं शुद्धस्फटिकसन्निभम् ।
नीलोत्पलदलश्यामं कषायं मधुरं वरम् ॥

कणामुस्तकसंयुक्तमेलोशीरकचन्दनैः ।
मर्दितं मृत्तिकापिण्डं खदिराङ्गारपाचितम् ॥
निक्षिपेन्निर्मले तोये सर्वदोषहरे शुभे ।
कथितः पिण्डवासोऽयं सलिलेषु विचक्षणैः ॥
सहकाररसेनापि पाटलोत्पलचम्पकैः ।
वासयेच्च यथाकालं पुष्पवासोऽयमीरितः ॥१८०२
लवङ्गोशीरकर्पूरकान्तानलदचन्दनैः ।
सलिलामयतक्कोलपथ्याकर्पूरसंयुतैः ॥ १८०३ ॥
विचूर्णितैस्समैरेभिस्सुशीतामलवारिणा ।
चूर्णाधिवासनं प्राह श्रीमान् सोमेश्वरो नृपः ॥
करकैर्मृन्मयैश्श्लक्ष्णैः प्रवालारुणकान्तिभिः ।
चर्मपात्रैस्सुरम्यैर्वा त्रिफलापरिशोधितैः ॥ १८०५
नालैश्च सुबहुच्छिद्रैः[1] रौप्यस्फाटिककान्तिभिः ।
सहितैस्तैश्शुभाकारैः शीतवस्त्रावगुण्ठितैः ॥
हृतं सुशीतलं तोयं निर्मलं मृदुजीवितम् ।
पिबेच्च स्वर्णपात्रस्थं शुक्तिभिर्वासितैरपि[2] ॥
दिव्यं शरदि पानीयं हेमन्ते सरिदुद्भवम् ।
शिशिरे वरि ताटाकं वसन्ते सारसं पयः ॥

---

[1] नालैश्च बहुचित्रैश्च.
[2] पिबेत्सुवर्णचषकैः शुक्तिभिर्वा बिसैरपि.

निदाघे नैर्झरं तोयं भौमं प्रावृषि पीयते ।
हंसोदकं सदा पथ्यं वार्क्षतोयं यथारुचि ॥ १८०९
सहजं निर्मलं वाऽपि संस्कृतं गन्धवासनैः ।
पीयते सलिलं यत्तु पानभोगस्स कीर्तितः ॥
प्रोक्तः पानीयभोगोऽयं सोमेश्वरमहीभुजा ।

पादाभ्यङ्गभोगः.

पादाभ्यङ्गस्य भोगोऽयमधुना परिकीर्त्यते ॥
वामे पार्श्वे शयानस्सन् पादावभ्यञ्जयेत्सुखी ।
सर्पिषा शतधौतेन नवनीतेन वा नृपः ॥१८१२॥
दध्ना तैलेन पयसा तक्रेणाभिषुतेन वा ।
श्रीखण्डक्षोदनीरेण बदर्याः फेनकेन वा ॥ १८१३
पादसंवाहदक्षाणां कामिनीनां मनोहरैः ।
अशोकपल्लवप्रख्यैः करैरभ्यञ्जयेच्छनैः ॥ १८१४ ॥
वसन्ते सर्पिषा दध्ना शीतेन पयसाऽपि वा ।
निदाघे नवनीतेन काञ्जिकैः कोलफेनकैः ॥१८१५
वर्षासु पयसाऽभ्यञ्जेत्पादौ तक्रेण वा पुनः ।
शतधौतेन शरदि सर्पिषा चन्दनोदकैः ॥ १८१६
हेमन्ते शिशिरे चैव तैलेनाभ्यञ्जयेत्पदे ।
पश्चात्प्रक्षाळयेत्पादौ सुखस्पर्शेन पाथसा ॥१८१७

मसूरयवपिष्टैश्च हरिद्राचूर्णमिश्रितैः ।
उद्वर्त्य च पुनः पादौ क्षाळयेत्सुखवारिणा ॥ १८१८
एवं यः कारयेद्राजा भोजनादूर्ध्वमन्वहम् ।
पादाभ्यङ्गस्य भोगोऽयं वर्णितस्सोमभूभुजा ॥

यानभोगः.

इदानीं सुखदोऽत्यर्थं यानभोगो निरूप्यते ।
दोला सुखासनं हस्ती करिण्यश्वतरी हयः ॥
रथनौप्लवकाश्चेति नवधा यानमुच्यते ।
सुवक्रया वेणुजया हेमरत्ननिबद्धया ॥ १८२१ ॥
स्वर्णशृङ्खलवत्पट्टन्यस्तशय्योपधानया ।
दिव्यपट्टप्रच्छदया वीवधद्वयवाह्यया ॥ १८२२ ॥
एकदण्डिकया यान दोलायानं तदुच्यते ।
दन्तिदन्तविनिर्माणं हेमरत्नविभूषितम् ॥ १८२३ ॥
शार्दूलचर्मसन्नद्धं दण्डिकाद्वयधारितम् ।
चतुर्भिर्विविधैर्वाह्यं हंसशय्यासमन्वितम् ॥ १८२४
पृष्ठाधारेण संयुक्तं सुखासनमिति स्मृतम् ।
समग्रं विपुलस्कन्धं मृदुसंश्चारशोभितम् ॥ १८२५
जवेन त्वरितं नागं याने शंसन्ति कोविदाः ।
सौवर्णस्तम्भयुक्तेन मुक्तादामविराजिना ॥ १८२६

काञ्चनै रुचिरैश्श्लक्ष्णैरुपरिष्टाद्विराजिता ।
मयूरपुच्छपिञ्छैर्वा प्रच्छन्नेन सुशोभिना ॥१८२७
करिणी लघुसञ्चारा वेशदेशे त्वकम्पना ।
उपवेशे स्थिरा धीरा गमने च जवाधिका ॥
गतौ तु ललिता रम्या सर्वतस्त्रासवर्जिता ।
चारुचामीकरच्छन्नपुष्पकेणोपशोभिता ॥ १८२९
अस्खलन्ती पदन्यासे याने चाश्वतरी वरा ।
मयूरगतिको वाहः तित्तिरीगतिसन्निभः ॥ १८३०
मरालगमनो वाऽपि चतुष्कगतिशोभितः ।
गच्छतः कम्पतेऽश्वस्य पुच्छग्रीवं विशेषतः ॥
त्वरिता गतिरत्यर्थं मायूरीति निगद्यते ।
शीघ्रं पदानि तनुते यत्र पुच्छं न कम्पते॥१८३२
सा गतिस्तैत्तिरी ज्ञेया हयवाहनकोविदैः ।
पार्श्वाभ्यां दोलनं यत्र हंसवद्गच्छतो हरेः ॥
शिरो विधुनुते तद्वत् मारालगतिरीदृशी ।
पादैश्चतुर्भिस्सञ्चारे ललितं यत्र गच्छति ॥ १८३४
चतुष्कगतिराख्याताऽनुत्तमा सुखदायिनी ।
अश्वैश्चतुर्भिर्द्वाभ्यां वा युक्तश्चक्रयुगान्वितः ॥
मत्तवारणकैर्भव्यैश्चित्रितैरुपशोभितः ।

नानावर्णपताकाभिः योजितस्सुदृढाक्षकः ॥
उत्तमस्स्यन्दनो याने नृपाणामथ निर्मितः ।
शाकजैः फलकैः क्लृप्ता शणवल्कलवेष्टिता ॥
आयता सुदृढा नीरे सा नौर्याने प्रशस्यते ।
वेणुकम्राभिरन्योन्यं गुम्भितो वर्तुळाकृतिः ॥
पिनद्धश्चर्मणा बाह्ये प्लवकोऽयं जलेचरः ।
एतैर्यानैर्यथायोग्यं याति यः पृथिवीपतिः ॥
यानोपभोगः कथितस्सोमेश्वरमहीभुजा ।

छत्रभोगः

इदानीं छत्रभोगोऽयं वर्ण्यते राजवल्लभः ॥१८४०
हेमपट्टनिबद्धेन दण्डेनोपरिधारितम् ।
नानावर्णसुसूत्राभिः कड्डुभिः कृतपञ्जरम् ॥१८४१
श्वेतवस्त्रेण सञ्छन्नं मुक्तादामसुसूत्रकम् ।
नीलविद्रुममुक्तानां लम्बनैः परिशोभितम् ॥
चञ्चत्काञ्चनजातेन कलशेन विराजितम् ।
पुण्डरीकं सितच्छत्रं राजयोग्यमनुत्तमम् ॥१८४३
नीलपट्टपिनद्धानि रौप्यदण्डधृतानि च ।
नानावर्णविचित्राभिर्वल्लरीभिर्युतानि च ॥१८४४॥
मेघडम्बरनामानि चामरोत्तंसितानि च ।

छत्राणि विलसत्कान्तिसौवर्णकलशानि च ॥
नीलकण्ठकलापस्थचन्द्रकैः परिकल्पितम् ।
सुवर्णदन्तिदण्डेन रत्नेन परिमण्डितम् ॥ १८४६ ॥
कलशेन तदुत्थेन शुभ्रेण परिशोभितम् ।
पिञ्छच्छत्रमिदं प्राहुस्सागरीतिविचक्षणाः ? ॥
लोहितैः पिञ्जरैश्चित्रैर्नानावर्णैर्नृपोत्तमः ।
आतपत्रैरसङ्ख्यातैर्वारयन्नातपं नृपः ॥ १८४८ ॥
एतेषां शीतलच्छायामाश्रित्य पृथिवीपतिः ।
सुखेन मोदते यत्तु छत्रभोगः प्रकीर्तितः ॥१८४९
छत्रभोगोऽयमुद्दिष्टस्सोमेश्वरमहीभुजा ।

शय्याभोगः.

शय्या भोगोऽयमधुना वर्ण्यते सुखदायकः ॥
हंसपिञ्छमयी काचिच्छाल्मलीतूलजाऽपरा ।
कार्पासरचिता चान्या केसरैरितरा कृता ॥
पल्लवैः कल्पिता काचित्काचित्कुसुमनिर्मिता ।
पानीयपूरिता काचिच्छय्यैवं सप्तधा स्मृता ॥
दन्ताङ्घ्रिर्लोहचरणः साष्टापदपदस्तथा ।
वरश्च चलनं चैव वेत्रकः पट्टिकामयः ॥ १८५३ ॥
डोलाख्यश्चेति कथितो मञ्चो विद्वद्भिरष्टधा ।

शय्याया लक्षणं वक्ष्ये मञ्चकानां तथैव च ॥
मराळजठरोद्भूतैर्मृदुभिः पुच्छगुच्छकैः ।
श्लक्ष्णेन चर्मणा नद्धैश्शय्या हंसमयी तथा ॥
शाल्मलीफलगर्भोत्थैस्तूलैर्बीजाविवर्जितैः ।
घनेन वाससा नद्धैश्शाल्मलीतूलिका भवेत् ॥
कार्पासपिण्डकं यत्नात् बीजं सम्पेष्य पट्टकैः ।
अयश्शलाकया पश्चात् धनुषा तं विवेचयेत् ॥
दृढेन वाससा सीव्य विशालपरिशोभिना ।
या शय्या क्रियते मृद्वी सा तु कार्पासजा मता ॥
केसरैः पद्मसम्भूतैः नागपुष्पसमुद्भवैः ।
सुगन्धकुसुमोत्थैश्च तथा कुङ्कुमसम्भवैः ॥
पटीपट्टेन चित्रेण गुम्भितैश्चारुशिल्पिभिः ।
शय्या केसरजा ख्याता सुगन्धिः पृथिवीभुजाम् ॥
कमलोत्पलकह्लाररम्भाकङ्केळिपल्लवैः ।
कोमलैः कल्पिता शय्या शीतला पल्लवाभिधा ॥
मल्लिकापाटलैः पुष्पैः कुसुमैश्चम्पकस्य च ।
अन्यैस्सुगन्धिभिः पुष्पैरपवृन्तैः कृता तु या ॥
शय्या कुसुमजा नाम कामकेलिसुखावहा ।
चर्मजा वारिणा पूर्णा तोयशय्या प्रकीर्तिता ॥

द्विपदन्तकृतैः पादैः चतुर्भिरुपशोभितैः ।
दन्ताङ्घ्रिर्नाम मञ्चोऽयं सर्वदन्तमयश्शुभः ॥१८६४
ताम्रारकूटघटितश्चरणैस्तन्मयैश्शुभैः ।
लोहामञ्चकनामाऽयं सुदृढः परिकीर्तितः ॥१८६५
चारुचामीकरानद्धो रचनापरिरञ्जितः ।
अष्टापदमयः प्रोक्तो मञ्चकोऽयं चतुष्पदः ॥१८६६
यन्त्रपत्रमयैर्नादैरानन्दं तनुते नदन् ।
वरमञ्चस्समाख्यातो रतिकेलिषु कामुकैः ॥१८६७
उपवेशनमात्रेण गच्छत्यूर्ध्वमधश्च यत् ।
दृढाङ्घ्रिश्चारुकूपश्च चलमञ्चः प्रकीर्तितः ॥ १८६८
त्वाग्भिर्वेत्रस्य बाह्याभिः तनुभिर्गुम्भितो घनः ।
कुटिलैश्चरणैर्युक्तो वेत्रमञ्चः प्रकीर्तितः ॥ १८६९
कार्पासगुणक्लृप्ताभिः पट्टिकाभिः सुगुम्भितः ।
दीर्घाभिश्चित्रवर्णाभिः मञ्चोऽयं पट्टिकाभिधः ॥
श्रीखण्डदारुघटितः कनत्काञ्चनभूषितः ।
खचितो दिव्यरत्नैश्च मत्तवारणशोभितः ॥ १८७१
सौवर्णशृङ्खलाबन्धो लम्बमानस्सडोलनः ।
किंजल्कशय्यया युक्तो डोलामञ्चस्सुखप्रदः ॥
वसन्ते हंसजा शय्या क्रीडायां पत्रपुष्पजा ।

निदाघे तूलजा शय्या मध्याह्ने तोयजा शुभा ॥
हेमन्ते शिशिरे चैव वर्षासु च विचक्षणः ।
भजेत्तु शय्यां कार्पासीं नृपश्शीतापनुत्तये ॥
शरत्काले तु कैञ्जल्कीं डोलामञ्चसमाश्रिताम् ।
अधितिष्ठेन्महीपालो भोगार्थं सुविचक्षणः ॥
एवंविधेषु मञ्चेषु शय्यास्त्वेवंविधासु च ।
शेते विशांपतिर्यत्तु शय्याभोगः प्रकीर्तितः ॥
शय्याभोगस्समाख्यातस्सोमेश्वरमहीभुजा ।

धूपभोगः

धूपभोगोऽयमधुना वर्ण्यते सौरभोत्कटः ॥ १८७७
लाक्षागुग्गुलुकर्पूरकालकुण्डुरुसिंहकम् ।
श्रीखण्डदारुसरललघुकोष्ठं च वालुकम् ॥ १८७८
मांसी कुङ्कुमपथ्या च कस्तूरीपूतिबीजकैः ।
शङ्खनाभिर्नखश्चैव सितामधुघृतं गुडः ॥ १८७९
समान्येतानि चूर्णानि द्रवद्रव्यं विहाय च ।
द्विगुणं लघुकर्पूर (चूर्ण) धूपभोगोऽयमुत्तमः ॥
एतान्येव हि सिंहेन मिश्रयेन्मधुसर्पिषा ।
गुडेन पिण्डयेत्पश्चात्पिण्डधूपोऽयमुत्तमः ॥ १८८१
द्रव्याण्येतानि तोयेन पिष्टानि मधुसर्पिषा ।

वर्तिरूपाणि शुष्काणि वर्तिधूपो मनोहरः ॥
रीतिरूप्यमयो वाऽपि सुवर्णघटितोऽपि वा ।
खगो वाऽपि मृगो वाऽपि संरन्ध्रस्सम्पुटात्मकः ॥
अङ्गारगर्भिते पिण्डे नाचितो धूपमुद्गिरेत् ।
मुखकर्णादिभिश्छिद्रैः पिण्डधूपे त्वयं क्रमः ॥
अङ्गारगर्भिते पात्रे वक्रदण्डेन संयुते ।
विकिरेद्धूपचूर्णं च वारंवारमिति क्रमः ॥१८८५॥
दन्तेन रचिते श्लक्ष्णे बहुरन्ध्रे करण्डके ।
दण्डेन वा समायुक्ते सम्पन्ने रससंयुते ॥१८८६॥
सूचिकाग्रे विनिक्षिप्य वर्तिं सन्धुक्ष्य वह्निना ।
स्थगयेत्कम्पनेनाथ रन्ध्रैर्धूपो विनिस्सरेत् ॥
करण्डं धूपसंयुक्तं पाणिना परिवर्तयेत् ।
आत्मनोऽपि मुखं वाऽपि प्रेयसीवदनेषु वा ॥
करण्डकमदण्डं तु धूपवर्तिसमन्वितम् ।
अंशुकान्तः क्षिपेद्वाऽपि खोपके वाऽपि निक्षिपेत् ॥
धूपयेत्तां शुभां शय्यां वसनेनावगुण्ठिताम् ।
पिञ्जैर्धौतवासांसि पिण्डकैश्चूर्णकैरपि ॥ १८९० ॥
गृहं चापिहितद्वारं निरोधितगवाक्षकम् ।
धूपयेद्बहुलैर्धूपैः पिण्डचूर्णसमुद्भवैः ॥ १८९१ ॥

विलासचतुराणां हि नृपाणां च विनोदिनाम् ।
धूपभोगोऽयमाख्यातस्सोमेश्वरमहीभुजा ॥१८१२
भूलोकमल्लदेवेन धूपभोगोऽयमीरितः ।

योषिदुपभोगः

योषितामुपभोगोऽयं कथ्यते स्मरदीपनः ॥१८१३
अचापल्यं भयं लज्जा दाक्षिण्यमनुकूलता ।
मधुरस्वरता दाक्ष्यं पटुत्वं प्रियवादिता ॥ १८१४॥
मानश्शुचित्वं दाक्षिण्यं गुरुशुश्रूषणे रतिः ।
धर्मज्ञताऽऽर्जवं सत्यं कौशलं सर्वकर्मसु ॥१८१५
हृष्टता स्मितभाषित्वं पतिदोषनिगूहनम् ।
व्ययवैमुख्यमित्येते योषितां प्रवरा गुणाः ॥
स्त्रीणां रूपवती श्रेष्ठा सुरूपा ससुयौवना ।
सयौवनासु गीतज्ञा गीतज्ञास्वपि नर्तकी ॥
उत्तरोत्तरमेतासु श्रैष्ठ्यं पूर्वगुणैस्सह ।
एतैस्सर्वैर्गुणैर्युक्ता दुर्लभा रमणी भुवि ॥ १८१८
मृगी च पद्मिनी चैव चित्रिणी वडवा तथा ।
हस्तिनी शङ्खिनी चेति षड्विधा जातिरिष्यते ॥
आद्ये द्वे उत्तमे तत्र मध्यमे मध्यसंस्थिते ।
अन्त्यस्थिते कनिष्ठे द्वे त्रिधा जात्या प्रकीर्तिताः ॥

मध्यमोत्तमजातीया भोगयोग्या वरस्त्रियः ।
हस्तिनी शङ्खिनी चेमे भोगाय परिवर्जयेत् ॥
पादौ कोकनदच्छायौ गूढगुल्फोपशोभितौ ।
आनुपूर्व्येण वृत्ते च जङ्घे स्यातां सकान्तिके ॥
पीवरं जघनं गुह्यमश्वत्थदलसन्निभम् ।
तनु वृत्तं तथा मध्यं वर्तुलावुन्नतौ स्तनौ ॥११०३
कोमलं बाहुयुगलं शिरीषकुसुमोपमम् ।
कङ्केळिपल्लवाकारौ करावृज्वङ्गुलीयुतौ ॥ ११०४ ॥
आताम्रनखरौ ग्रीवा पूगीकण्ठोपमा मता ।
प्रवालमणिसङ्काशदशनच्छदसम्पुटा ॥ ११०५ ॥
दाडिमीबीजसङ्काशा रदनास्सुमनोहराः ।
समौ तनू कपोलौ च श्रवणौ शुक्तिसन्निभौ ॥
उन्नता सरलस्रोतो? नासिका लक्षणान्विता ।
पक्ष्मले चक्षुषी दीर्घे सन्त्रस्यन्मृगलोचने॥११०७
वक्रे दीर्घे भ्रुवौ भालमष्टमीचन्द्रसन्निभम् ।
भालानुरूपं शीर्षं च सतरङ्गाश्शिरोरुहाः॥११०८
सुप्रमाणाऽङ्गलतिका गतिर्मृगगजोपमा ।
क्षणे रोषः क्षणे तोषः मुहुरीर्ष्याकुलेक्षणा ॥
ऋतुप्रमाणसम्प्रीतिर्लालसा रतिकर्मणि ।

पद्मसौरभ्यसङ्काशं निर्यन्निधुवनोदकम्॥ १११०
चित्ते चञ्चलता दार्ढ्यमनुरागः प्रियं वचः ।
एतैर्गुणैस्समासक्ता मृगीजात्योपलक्षिता ॥१११
मधुवर्णसुकान्ताश्च नखराश्चरणोद्भवाः ।
अङ्गुल्यस्संहता ऋज्व्यः परिपाट्या समास्शुभाः ॥
रक्तपङ्कजसङ्काशौ समौ पादतलौ शुभौ ।
गूढगुल्फौ सुवृत्तौ च जङ्घे पादानुरूपके ॥ १११३
रम्भास्तम्भनिभावूरू विशालं जघनं घनम् ।
ईषद्विकसिताम्भोजसदृशं स्मरमन्दिरम् ॥१११४
वलित्रितयशोभाढ्यं मुष्टिग्राह्यं च मध्यमम् ।
स्थूलश्रीफलसङ्काशौ स्तनावविरलौ समौ ॥
वर्तुले बाहुशिखरे बाहू सुललितावपि ।
सुकुमारतरौ हस्तौ तले पल्लवकोमले ॥ १११६ ॥
मुद्गशिम्बिसमाकाराः करशाखा मनोहराः ।
पद्मपत्रसमच्छाया मधुराः करजाः वराः॥१११७
नातिस्थूला नातिदीर्घा नातिह्रस्वा समा शुभा ।
ग्रीवा रेखात्रयोपेता बिम्बभागनिभोऽधरः ॥१११८
पक्वदाडिमबीजाभा दन्ताः कान्तिमनोहराः ।
तिलपुष्पसमाकारा नासिका सुमनोहरा ॥१११९

नीलोत्पलस्य नालेन समे श्रवणपालिके ।
शोभने श्रवसी गण्डौ समावुज्ज्वलकान्तिकौ ॥
पद्मपत्रोदरासीनशिशुभ्रमरसन्निभे ।
लोचने प्रान्तसंरक्ते घनश्यामलपक्ष्मणी ॥११२१
सन्त्रस्तबालसारङ्गभङ्गीचञ्चलमीक्षणम् ।
अधिज्यकामकोदण्डकुटिले सन्नते भ्रुवौ ॥११२२
अष्टमीचन्द्रसङ्काशं ललाटं सुमनोहरम् ।
बहवः श्यामलास्सूक्ष्माः मृदुदीर्घाश्शिरोरुहाः ॥
नववंशसमच्छायो वर्णः कान्तिमनोहरः ।
गतिर्मत्तेभसदृशी शिरीषमृदुलं वपुः ॥ ११२४ ॥
पद्मसौरभसङ्काशं वपुःपरिमलं शुभम् ।
अंभोजगर्भसंस्पर्धिगन्धं निधुवनोदकम् ॥११२५॥
कोकिलालापमधुरो ध्वनिः श्रुतिसुखावहः ।
रम्यस्त्रीभावसंसर्गश्शुचि चाल्पं च भोजनम् ॥
अल्पभूषणसम्प्रीतिः श्वेतपुष्पाम्बरे रतिः ।
मानस्सातिशयो लज्जा भूषणं परमं मतम् ॥
गुरुदेवार्चनासक्तिः सम्भोगे त्यक्तलज्जता ।
दाक्षिण्यं दानशीलत्वं बन्धुप्रीतिर्मितं वचः ॥
सत्यवाक्त्वं दृढा प्रीतिः शोभा भूषां विनाऽपि च ।

एतैर्गुणैस्समायुक्ता पद्मिनी कीर्तिता बुधैः ॥
लघुपादतले रम्ये तनुजङ्घे सुशोभने ।
किञ्चिद्वक्रौ शुभावूरू पृथुलं जघनस्थलम् ॥
उन्नतस्सुकुमारश्च सरसो मदनालयः ।
त्रिवलीमध्यसङ्काशो मध्यभागो मनोहरः ॥
पीनौ वृत्तौ सुरम्यौ च वर्धमानौ पयोधरौ ।
वक्षस्स्थलं विशालं स्यादानुपूर्व्या तनू भुजौ ॥
सुकुमारं करतलमङ्गुल्यः सरलाः शुभाः ।
कम्बुनाऽभिसमः कण्ठः किञ्चिदभ्युन्नतोऽधरः ॥
सुच्छाया दशना नासा नातिदीर्घा न वामना ।
तनू कपोलफलकौ कर्णौ शोभासमन्वितौ ॥
दीर्घे तीक्ष्णे च नयने निम्बपत्रार्धसन्निभे ।
भ्रुवौ भालतलं रम्यं वक्राः कृष्णाश्शिरोरुहाः ॥
सुप्रमाणं भगस्थानं लतावत्तनुविग्रहः ।
गीते नृत्ते च वाद्ये च रक्तिस्सुललिता गतिः ॥
सुगन्धि रागसलिलं सुसूक्ष्मस्वरभाषणम् ।
कलाकौशलसम्प्रीतिः श्यामो वर्णो मनोहरः ॥
गौरश्श्यामोऽथवा वर्णश्चित्रभूषाम्बरस्पृहा ।
विचित्रसुरते प्रीतिश्चित्रिण्या लक्षणं त्विदम् ॥

अलक्तकरसच्छाये शोभने पादयोस्तले ।
गुल्फौ समुन्नतौ जङ्घे वृत्ते दीर्घे च मांसले ॥
ईषद्वक्राकृती ऊरू गम्भीरं नाभिमण्डलम् ।
उदरं तनु वृत्तं च स्तनावायतचूचुकौ ॥ ११४० ॥
उरो विशालं बाहू च वृत्तौ दीर्घौ च मांसलौ ।
रक्तपङ्कजसङ्काशौ कोमलौ करपल्लवौ ॥ ११४१ ॥
अङ्गुल्यः कोमला वृत्ता दीर्घा स्थूला च कन्धरा ।
पीनौ दन्तच्छदौ रम्यौ दशनास्स्थूलसंहताः ॥
तथा स्थूलायतौ कर्णौ नेत्रे नीलोत्पलप्रभे ।
स्थूले भ्रुवौ तथा वक्रे निम्नं भालमथोन्नतम् ॥
स्थूलदीर्घा घनाऽऽश्यामाः केशाश्च विविधा गतिः ।
गम्भीरमधुरा वाणी चलं चित्तं मृदुस्तनुः ॥
निद्रा बुभुक्षा सततं स्निग्धकामुककामिता ।
सम्भोगान्ते सरसता मांसगन्धिर्द्रवोऽधिकः ॥
सुरताहवशूरत्वं नवाङ्कुलरतिस्तथा ।
इत्येतैर्लक्षणैर्युक्ता वडवा परिकीर्तिता ॥ ११४६ ॥
शङ्खिनी हस्तिनी स्थूला विरूपा दुर्भगाऽधमा ।
दुर्गन्धा दुस्स्वभावा च तस्माद्भोगविवर्जिता ॥
सुरूपा कान्तिसंयुक्ता तथा चापल्यवर्जिता ।

अस्वेदा च सुगन्धिश्च चिरकालनिमेषिणी॥ ११४८
स्थिरस्तनी मिताहारा वलीपलितवर्जिता ।
श्वेतभूषाम्बरप्रीता गौरश्यामोत्तमप्रिया ॥ ११४९
प्रसन्ना त्यागशीला च शौचाचारसमन्विता ।
ईदृग्लक्षणसम्पन्ना योषिद्देवांशसम्भवा ॥ ११५०
सुसंस्था च सुतन्वी च तरङ्गितशिरोरुहा ।
सहासवदनाम्भोजा पक्ष्मलाक्षी दृढस्तनी॥ ११५१
स्मितास्या तनुमध्या च दर्शनीया नितम्बिनी ।
सुकुमारकराङ्घ्रिश्च सुभगा प्रियभाषिणी ॥ ११५२
कलाविद्धङ्गिचतुरा सदा साहसिके रता ।
सदैवासत्यवचना सिद्धांशकसमुद्भवा ॥ ११५३ ॥
सुरम्या निम्नवदना शफरीचललोचना ।
मध्ये क्षामा कान्तिमती सुपुष्टनखरावळी ॥
नातिस्थूला नातिकृशा गीतवाद्यप्रिया सदा ।
सुगन्धिकुसुमासक्ता गीतज्ञा चातिकामिनी ॥
अव्यवस्था चलप्रान्ता स्वैरिणी पटुहासिनी ।
ईदृग्लक्षणसम्भूता गन्धर्वांशकसम्भवा ॥ ११५६
सम्पूर्णचन्द्रवदना निम्ननाभिः कृशोदरी ।
उत्तुङ्गभाला वक्रभ्रूस्सुचञ्चलविलोचना ॥ ११५७॥

तन्वी च हरितश्यामा घनवृत्तलघुस्तनी ।
प्रमाणोत्सेधसंयुक्ता राजज्जघनमण्डला ॥ ११५८
श्लक्ष्णोरुवृत्तजङ्घा च निर्लोमा स्वेदवर्जिता ।
कृशाङ्गुली स्वल्पनखी स्वेदेऽपि च ससौरभा ॥
गीतनृत्तकलादक्षा सम्भोगे चित्तहारिणी ।
मौढ्यवैदग्ध्यसंयुक्ता सानुरागाऽतिकांक्षिणी ॥
विलासविभ्रमोपेता विचित्रवसनाप्रिया ।
सनर्महासचतुरा साऽप्सरोंशकसम्भवा ॥११६१
सहकारफलोदारवदना चारुहासिनी ।
समभालतला सुभ्रूः तीक्ष्णापाङ्गविलोकिनी ॥
स्वच्छगण्डस्थलच्छाया वृत्तपीनपयोधरा ।
सकान्तिरदना रम्या रेखालङ्कृतकन्धरा ॥ ११६३
तनुमध्या पृथुश्रोणिरूरुजानुमनोहरा ।
माल्यमण्डनके दक्षा नृत्तज्ञा चपलाशया ॥
उद्वेजयति भर्तारं कांक्षन्ती द्रविणं बहु ।
पुनस्सङ्घट्टने विद्याधरांशकसमुद्भवा ॥ ११६५ ॥
दीर्घानना दीर्घघोणा लघुलोचनहासिनी ।
त्रिकोणभालफलका घननीलशिरोरुहा ॥ ११६६
जङ्घाकाण्डे प्रकोष्ठे च सूक्ष्मरोमसमन्विता ।

विचूचुककुचाभोगा मध्यभागे कृशा भृशम् ॥
विशालजघना रम्या सुप्रमाणलसन्नखी ।
निगूहयित्री गुह्यानां गुह्यकांशसमुद्भवा ॥ ११६८
नात्यायतमुखी दीर्घलोचना समनासिका ।
तनुदन्तच्छदा दीर्घाऽधिका पृथुलहस्तिनी ॥
विशालवक्षास्सुग्रीवा भूषणे निरता सदा ।
मृदुबाहुश्श्लक्ष्णकक्षा करकाठिन्यसंयुता ॥ ११७०
तनुहस्ता शुभतनूर्विशालजघनस्थला ।
ईषद्वक्रोरुजङ्घा च स्फुटिताङ्घ्रितला मनाक् ॥
चलचित्ता प्रिये लोला पुष्पमाल्यविलेपना ।
प्रस्थापयन्ती ताम्बूलं स्वयं प्रियतमं प्रति ॥
पत्रच्छाविसुसंयुक्ता श्यामवर्णा मनोहरा ।
एवंरूपगुणोपेता किन्नरांशकसम्भवा ॥ ११७३ ॥
तन्वी गौरी लघुकुचा दीर्घकेशा कृशोदरी ।
लघुश्रोणी सदा भीरुरेकं धारयते दृढम् ॥११७४
गन्धवत्पुष्पमाल्येषु लुब्धा शुद्धासनप्रिया ।
ज्योत्स्नाध्वनिविहारेषु जलक्रीडासु लम्पटा ॥
गौरश्यामा वक्रगतिश्छिद्रान्वेषणतत्परा ।
एतल्लक्षणसंयुक्ता यक्षांशकसमुद्भवा ॥ ११७६ ॥

तन्वी कान्तिमती किंचित् रक्तपिङ्गललोचना ।
स्वच्छगण्डतलस्निग्धा घननीलशिरोरुहा ॥
ईषद्वक्रितजङ्घा च लीलाकुटिलगामिनी ।
गृहान्तर्वर्तिनी नित्यं क्षीरखण्डासवप्रिया ॥
सखीः सङ्घट्टयत्याशु पुनर्विघटयत्यपि ।
गौरश्यामा च वर्णेन नागांशकसमुद्भवा ॥११७९
वक्रालका कुन्तलिनी दीर्घभ्रूर्दीर्घलोचना ।
वृत्तस्तनी दीर्घतनुः कङ्कुश्यामा समोदरी ॥११८०
उत्तुङ्गजघनाभोगा श्लक्ष्णजङ्घोरुशालिनी ।
कोमलाङ्घ्रितला ताम्रनखरावलिरञ्जिता ॥ ११८१
कातरा गूढमन्त्रा या परवेश्माशनप्रिया ।
परेङ्गितज्ञा गीतज्ञा पाठज्ञा तिमिरप्रिया ॥११८२
सन्तानवृद्धिमिच्छन्ती भूषणाच्छादने रता ।
एवंरूपगुणोपेता पित्रंशकसमुद्भवा ॥ ११८३ ॥
स्मेरानना विशालाक्षी दृढस्तनमनोहरा ।
मृदुबाहुः कृशा मध्ये सुसंस्थाना नितम्बिनी ॥
रम्यजङ्घोरुयुगला मृदुपादतला वरा ।
गौराङ्गी दृढचित्ता च देवभक्ता पतिव्रता ॥११८५
ऋजुस्वभावा दान्ता च कोपना सुप्रसादिनी ।

स्वल्पाशना च धर्मज्ञा ऋष्यंशकसमुद्भवा ॥ ११८६
ऋक्षवानरमार्जारदैत्यदानवरक्षसाम् ।
पिशाचखरशार्दूलमत्स्यसैरिभपोत्रिणाम् ॥
सारमेयाखुनकुलरुरुकाकगवामपि ।
क्रोष्टुवृश्चिकहंसानां नक्रकुक्कुटयोरपि ॥ ११८८ ॥
अन्यासामपि जातीनामंशकोद्भवयोषितः ।
रूपस्वभावगन्धाद्यैः दूषिताः परिवर्जयेत् ॥११८९
क्षत्रियान्वयसम्भूता साध्वाचारसमन्विता ।
सुरूपा चानुकूला च तरुणी सुमनोहरा ॥११९०
मृगी वा पद्मिनी वाऽपि चित्रिणी बडबा तथा ।
देवाद्यंशकसम्भूता राज्ञी कार्या महीभुजा ॥
वैश्यशूद्रकुलोत्पन्ना रूपयौवनसंयुताः ।
गीतनृत्तकलादक्षाश्चित्तज्ञाः प्रेमनिर्भराः ॥ ११९२
सम्भोगसुखसाम्राज्यसंवर्धनविचक्षणाः ।
अवरोधवधूः कान्ताः कुर्याद्भोगाय भूपतिः ॥
रूपलावण्यसंयुक्ता युक्तास्तारुण्यसम्पदा ।
सविलासा विलासिन्यः कर्तव्याः पृथिवीभुजा ॥
दिव्यरत्नविभूषाभिर्वस्त्रमाल्यानुलेपनैः ।
यानासने[1] गृहैर्भव्यैर्माननीया यथाक्रमम् ॥ ११९५

---

[1] नानाशन.

ईक्षितैर्नर्मभिर्गोष्ठया हसितैस्स्पर्शनैरपि ।
क्रीडाभिश्च प्रियालापैः सम्भोगैस्ताश्च रञ्जयेत् ॥
वस्त्राभरणदानैश्च पानस्थानकतर्पणैः ।
प्रेमनिर्भरसल्लापैः वराटीक्रीडनैरपि　१९९७ ॥
तोषयेद्योषितस्तास्तास्तुष्टा भोगाय कल्पयेत् ।
भोजने मज्जने कान्ताः पादाभ्यङ्गेऽङ्गमर्दने ॥१९९८
केशसंवाहने चैव दिव्यगन्धाविलेपने ।
गीतवाद्यश्रुतौ नृत्तप्रेक्षणे चारुदर्शने ॥ १९९९ ॥
जलादिक्रीडने चैव योजयेत्तास्सुयोषितः ।
अतोऽयमुपभोग्यत्वाद्योषिद्भोगः प्रकीर्तितः ॥
राज्ञस्सप्ताङ्गपूर्णस्य निश्शेषीकृतवैरिणः ।
विंशतिं प्राह भोगानां श्रीमत्सोमेश्वरो नृपः ॥
कन्दर्पोत्सवहेतुमद्भुतलसत्प्रोल्लासलीलास्पदं
विद्वन्मानुषरञ्जनीं जनतया सङ्कीर्तितां प्रत्यहम् ।
साश्चर्यामुपभोगविंशतिमिमां सोमेश्वरोर्वीपतिः
वाग्देवीकुलनन्दनः कथितवान् सर्वार्थसंसिद्धये[1] ॥

इति महाराजाधिराज सत्याश्रयकुलतिलक चालुक्याभरण
श्रीमद्भूलोकमल्ल श्रीसोमेश्वरदेवविरचिते अभिलषि-
तार्थचिन्तामणौ रजमानसोल्लासशास्त्रे राज्योप-
भोगकथने तृतीयं प्रकरणम्.

[1] प्रत्यर्थिभपान्तक